॥ नम अनन्तलब्धिनिधानाय, भगवते इन्द्रभूतये ॥

धर्मदासगणिप्रणीता

# श्रीउपदेशमाला—सटीका

( हेयोपादेया )

टीकाकारः—श्रीमद् सिद्धर्पिगणि.


प्रकाशकः—जामनगरवास्तव्य 'पंडित हीरालाल हंसराज' इतस्य 'श्रीजैनभास्करोदय प्रेस' इति मुद्रणालये मेनेजर बालचंद हीरालाल इत्येतेन मुद्रिता

विक्रम संवत् १९९५ { पण्यं रूप्यकत्रयम् ३-०-० } खिस्ताब्द १९३९




# प्राक् कथन

आजे आपनी समक्ष आ उपदेशमालानी सिद्धर्षि कृत टीका छापी प्रसिद्ध करी छे, आ 'उपदेशमाला' ना मूल कर्त्ता–'धर्मदासगणि' छे. आ धर्मदासगणि गृहस्थावासमा विजयविजयपुरना विजयसेन नामना राजा हता, तेमने वैराग्य थवाथी प्रभु महावीर पासे दीक्षा ग्रहण करी हती. अने तेमना तपोबलथी अवधिज्ञान प्राप्त थयेल. पोताना पुत्र रणसिंहने प्रतिबोधन अर्थे आ उपदेशमाला ग्रंथनी रचना गाथा [५४४] मां करी छे. अने तेनुं आदिपद "नमिऊण जीणवरिंदे इंदनरिंदच्चिए तिलाय गुरू" एवुं छे. आ ग्रंथ पर जुदा जुदा विद्वान आचार्योए टीका करी छे. तेमां प्रथम रामविजयजी टीका जे सुप्रसिद्ध छे, जेनी त्रण आवृत्तिओ अमारा तरफथी प्रसिद्ध थयेल छे. बीजी नव हजार पाचसो श्लोकना प्रमाणवाळी सिद्धर्षिकृत मोटी टीका छे. जे हजु अप्रसिद्ध छे. वळी ते पर 'उदयप्रभसूरि'ए १२२७४ श्लोकना प्रमाणवाळी वृत्ति (कर्णिका) रची छे. 'रत्नप्रभसूरि'ए पण अगीयार हजार श्लोकना प्रमाणवाळी वृत्ति रचेल छे. आ शिवाय सर्वानदसूरिए विवरण रचेल छे. अने सिद्धर्षिगणिए [४१७०] श्लोकना प्रमावाळी 'हेयोपादेया' नामनी टीका रचेल छे जे जनता समक्ष प्रसिद्ध करवा अमो आजे भाग्यशाळी थया छीए. जो के आ टीकानी प्रथमा वृत्ति–अमारा तरफथीपहेलां प्रसिद्ध थयेल परंतु तेनी नकलो ५० छापेल जेथी ते क्वचित् भंडारोमाज जोवामां आवती. आ टीकाकार रामविजयजी कृत टीका करतां प्राचीन छे.आ टीकाकारनी जीवनरेखा माटे मारा जेवो अल्पज्ञानी शुं लखी शके! परंतु तेमनी ग्रंथोनी रचना तेमनी विद्वतानी साबीती आपे छे. आ टीकाकारे विद्वताभरी रीते आ टीकाने रची छे. 'रामविजय' नी टीकामां

कथानक भाग विशेष छे. ज्यारे आ टीकामां कथानक भाग ओछो छे, फक्त मूल गाथानो टीका द्वारा विस्तार करी समजावेल छे. विशेषमां आ ग्रंथनी महत्ता सूत्र तरीके लेखाय छे, घणे ठेकाणे तेमनी 'शाख' देवाय छे अने व्याख्यानमां पण वंचाय छे. आ ग्रंथ प्रकाशनमां पुनः लाववा माटे घणा वखत थया विचार हतो परंतु अमारी छापेल नकल अमोने तपास करतां मलती नहि जेथी ते कारणे घणो वखत पसार थइ गयो. तेवामां पूज्यपाद आचार्य श्रीमद्-'विजयप्रतापसूरिजी' महाराजद्वारा अमोने प्राप्त थइ अने प्रसिद्धि माटे निःसंकोचे अमोने आपी. हजु नकलो छपावी शरु थतां पहेलांज अमोने पूज्य आचार्यो मुनिराजो तरफथी सारा प्रमाणमां नकलो नोंधातां अमारा कार्यने वधु प्रोत्साहन आप्युं छे जेथी ते दरेकनो पण आ स्थळे आभार मानवामां आवे छे, आ ग्रंथनी मूल गाथाओ आनंदपुस्तकालय तरफथी प्रसिद्ध थयेल पंचाशकादिशास्त्राष्टकम् नामना ग्रंथमांथी लीधी छे, टीका अमारी छापेल प्रत परथी लीधी छे. शुद्धि माटे केटलाएक प्रुफो अत्रे मणिशंकर पंडिते तपास्या छे छतां कांइ दोष, प्रेसदोष रह्यो होय ते वांचक गण क्षमा करी अमोने सूचन करशे जेथी भविष्यमां ते सुधारवामां आवशे. आ ग्रंथनी प्रथम आवृत्ति करतां कागळ लेजर पेपर वापर्या छे. किंमत रू, ३–०–० राखी छे. फारम २३, छे. अंतमां लडाइना कारणे तेज रंगना कागलो नहिं मळी शकवाथी निरूपाये खुलता रंगना लेजर पेपर नाखवा पड्या छे. अस्तु.



लि. सेवक.
पालचंद.

ता क.—उपदेशमालानी मोटी टीका छापवा माटे प्रयास चालु छे

## उपदेशमालाना प्रकाशनो माटे स्पष्टता.

१) पुष्पमालानुं अपर नाम उपदेशमाला छे. परंतु तेनी गाथा टीका अने टीकाकार अलग छे तेमज तेमां विशेष प्राकृत छे. जे आनंदपुस्तकालय तरफथी प्रसिद्ध थयेल छे तेना रु, ६ राखेल छे.

२) पुष्पमाला छे. जे साधु सोमगणि कृत छे तेमां कथानक भाग संस्कृतमां छे. जे अमारे त्यां छपाय छे. थोडा वखतमां प्रसिद्ध थशे

३) उपदेशमाला–रामविजयजी टीका जे हाल मळती नथी. भविष्यमां पुनरावृत्ति थशे

४) उपदेशमाला–सिद्धर्षि टीका–जे आपनी समक्ष हाजर छे. जेनी किंमत रु. ३) छे,

५) पुष्पमाला मूळ अने अनुवाद जे हजु अमारे त्यां छपाय छे.

६) पुष्पमालासच्छाया, जे हजु छपाय छे. उपदेशमाला अने पुष्पमालाना प्रकाशनमां पूरती समज पडे ते माटे छापेल छे. कारण के केटलाको एम कहे छे के " अमारा पासे उपदेशमाला छे" परंतु आ प्रसिद्ध थयेल नूतन टीका छे. जेथी अवश्य भंडारमां राखवा लायक छे.

लि.— **प्रकाशक.**

॥ श्रीजिनाय नमः ॥

# ॥ अथ श्रीउपदेशमाला सटीका ॥

( हेयोपादेया )

( मूलकर्त्ता—श्रीधर्मदासगणी, टीकाकार—श्रीसिद्धर्षिः )

हेयोपादेयार्थो—पदेशभाभिः प्रबोधितजनाब्जं ॥ जिनवरदिनकरमवदलित—कुमततिमिरं नमस्कृत्य ॥ १ ॥ गीर्देवताप्रसादित—सामर्थ्यान्मंदतरजनप्रबोधाय ॥ जडबुद्धिरपि विधास्ये । विवरणमुपदेशमालायाः ॥ २ ॥ अभिधेयादिशून्यत्वादस्या विवरणकरणमनर्थकमिति चेन्न, तत्सद्भावात, तथाह्यस्यामुपदेशा अभिधेयाः, तदभिधानद्वारेण सत्त्वानुग्रहः कर्तुरनन्तरप्रयोजनं श्रोतुस्तदधिगमः, द्वयोरपि परमपदावाप्तिः परंपराफलं, संबंधस्तूपायोपेयरूपः, तत्रोपेयं प्रकरणार्थपरिज्ञानं, प्रकरणमुपायः, अतो युक्तमेतद्विवरणकरणमिति. तत्राद्यगाथया शिष्टसमयानुसरणार्थं भावमङ्गलमाह—

नमिऊण जिणवरिंदे । इंदनरिंदच्चिए तिलोअगुरू ॥ उवएसमालमिणमो । वुत्थामि गुरूवएसेणं ॥ १ ॥

व्याख्या—इंद्रनरेंद्रार्चितान् इंद्रैर्देवेंद्रैर्नरेंद्रैश्च चक्रवर्त्यादिभूपैरर्चितान् पूजितान्, पुनस्त्रिलोकगुरून् त्रिभुवनस्य हितोपदेशदायकान्, एतादृशान् जिनवरेंद्रांस्तीर्थंकराधीशान् नमस्कृत्याहं धर्मदासगणिक्षमाश्रमणो गुरूपदेशेन तीर्थकरगणाधीशोपदेशेन, न तु स्वीयबुद्ध्यैवेमामुपदेशमालामुपदेशानां श्रेणिं कथयिष्यामि ॥ १ ॥

जगचूडामणिभूओ। उसभो वीरो तिलोयसिरितिलओ ॥ एगो लोगाइच्चो। एगो चक्खु तिहुयणस्स ॥२॥

व्याख्या—इयं हि भगवद्गुणोत्कीर्तनार्था, तस्य च निर्जराहेतुतया तपोवन्मङ्गलता स्फुटैवेति. जगतो भुवनस्य चूडामणीभूतो महानागस्य शिखारत्नवत्प्रधानः, भूतशब्दस्योपमावाचित्वात्. जगच्चूडामणिभूतोऽनेन लोकोत्तमत्वमाह. कोऽसौ ? वृषभः प्रथमतीर्थंकरो वीरश्च, चशब्दस्य लुप्तनिर्दिष्टत्वादेवमुत्तरविशेषणेष्वपि योज्यं, त्रिलोकश्रियो जगत्त्रयकमलाया भालस्थले तिलक आभूषणविशेषरूपः, अनेन त्रिभुवनभूषकत्वं कथयति. तथा लोक्यते इति लोकः पंचास्तिकायात्मको गृह्यते, तस्यादित्यवदादित्यः, केवलालोकेन प्रकाशकत्वात्. एकोऽद्वितीयो द्रव्यादित्येन तत्प्रकाशायोगात्, अनेन तु स्वार्थसंपदं दर्शयति. त्रिभुवनस्य लोकत्रयवासिविशिष्टामरतिर्यग्रूपस्य चक्षुरिव चक्षुर्यथावस्थितपदार्थविलोकहेतुत्वात्, परार्थप्रयुक्तध्वनिः, सिंहो माणवक इति न्यायेन वादिविरहेऽपि तदर्थगमनादेकमसहायं, द्रव्यलोचननिरीक्षिते बाधादर्शनात्, पुल्लिंगनिर्देशस्तु प्राकृतत्वाददुष्टः, अनेन परार्थसंपत्तिमाचष्टे. अथवा वीरे भगवति जीवति सति गुणस्तुतिरियं प्रकरणकारेण काका चक्रे, ऋषभो जगच्चूडामणीभूतोऽधुना मुक्तिपदस्थायितया चतुर्दशरज्ज्वात्मकलोकस्योपरिवर्तीत्यर्थः. वीरः पुनः प्रत्यक्षोपलक्ष्यमाणतया

त्रिलोकश्रीतिलको भुवनलक्ष्मीमंडनमिति भावः. तथानयोर्मध्ये एक ऋषभो लोकादित्यो युगादौ प्रभात इव विवेकप्रतिबोधनद्वारेण पदार्थोद्योतकत्वेन च निखिलव्यवहारकारणत्वात्. एकः पुनर्वीरश्चक्षुस्त्रिभुवनस्य, इदानींतनजंतुचक्षुर्भूतागमार्थभाषकत्वादिति ॥ २ ॥ अधुनैतदुद्देशेनैव तपःकर्मोपदेशमाह—

संवच्छरमुसभजिणो । छम्मासे वद्धमाणजिणचंदो ॥ इय विहरिया निरसणा । जइज्ज एउवमाणेणं ॥ ३ ॥

व्याख्या—संवत्सरं वर्षं ऋषभजिनः प्रथमतीर्थंकरः, षण्मासान् वर्धमानजिनचंद्रः श्रीवर्धमानाभिधानः प्रधानत्वात् श्रुतादिजिननक्षत्रराज इत्यर्थः. इत्येवमेतौ विहृतावुपसर्गपरीषहसहनार्थं पर्यटितौ निरशनौ निर्भोजनावुपोषिताविति स्वरूपं विवेच्य शिष्यं प्राह–भो यते ! तपःकर्मणि यत्नं कुर्याद्भवानेतदुपमानेन, ऋषभवर्धमानोपमयेत्यर्थः. तथाविधशक्तिविकलत्वादशक्यानुष्ठानोऽयमुपदेश इति चेन्नैतदस्ति, इदं हि इह तात्पर्य–यदि तावद्भगवंतौ चरमदेहत्वादन्यथा कथंचिन्मुक्तिगामिनावेवैवं विहृतौ, अतोऽन्येन संदिग्धमुक्तिगमनेनैकांतिकमुक्तिकारिणि तदुक्तितपःकर्मणि यथाशक्ति सुतरामादरो विधेयो, भगवद्भ्यां स्वयमाचरणेन दर्शितत्वादिति. एतत् कथानके प्रसिद्धत्वान्न कथिते. न केवलं तपःकर्म, क्षमापि भगवच्चरित्रमाकलय्य कर्तव्येत्याह–

जइ ता तिलोगनाहो । विसहइ बहुयाइं असरिसजणस्स ॥ इयं जीयंतकराइं । एस खमा सव्वसाहूणं ॥४॥

व्याख्या–तत्र भगवानृषभो निरुपसर्गं विहृतोऽतो तदुद्वारेणोपदेशः. वीरेण पुनर्भगवता विहरता जन्मांतरजनितकर्मशेषोपढौकितैरमरनरपशुभिर्विहितानि प्राकृतजनदुर्विषहाणि जीवितांतकारीणि कदर्थनानि तितिक्षितानि.

ततश्च यदि तावत्, यदीत्यभ्युपगमे, तावदिति क्रमार्थः, अभ्युपगतोऽयं क्रमः. त्रिलोकनाथो भुवनत्रयभर्ता विषहते क्षमते बहूनि नानारूपाणि असदृशजनस्य, नीचतयात्मनोऽतुल्यलोकस्य संबंधीनीत्यर्थः. असदृशग्रहणं च नीचजनविहितकदर्थनाया दुर्विषहत्वज्ञापनार्थं. जीवनं जीवः प्राणधारणं, तस्यांतो विनाशः, तत्करणशीलानि जीवितांतकारीणि दुष्टचेष्टितानीति गम्यते. इतिशब्देनोपसर्गकालभाविनं प्राणप्रहाणकरणदक्षं संगमकचक्रमोक्षादिकं प्रकारं द्योतयति, विनेयमधिकृत्याह-एषा अनंतरोदितैवंरूपा प्राणच्यावनप्रवृत्तेऽपि परे माध्यस्थ्यकरणलक्षणा क्षमा क्षांतिः सर्वसाधूनां समस्तशस्तयतीनां, भगवदनुष्ठानं हृदि निधाय सर्वसाधुभिरेवं प्राकृतजनविविहितमपि तर्जनताडनादिकं क्षंतव्यमिति भावः ॥ ४ ॥ उपसर्गोपस्थाने भगवन्निःप्रकंपतां विनेयशिक्षणार्थमाह—

न चइज्जाइ चालेउं । महइ महावद्धमाणजिणचंदो ॥ उवसग्गसहस्सेहिंवि । मेरु जहा वायगुंजाहिं ॥ ५ ॥

व्याख्या—'न चइज्जइत्ति' न शक्यते चलयितुं कंपयितुं ध्यानाच्च्यावयितुं महति प्रक्रमान्मोक्षे कृतमतिरिति वाक्यशेषः, महावर्धमानजिनचंद्र इति पूर्ववत्. केवलं महांश्चासौ वर्धमानजिनचंद्रश्चेति समागमः. कैरित्याह—उपसृज्यते सन्मार्गात्प्रेर्यते एभिरित्युपसर्गाः कदर्थनानि तेषां सहस्राणि तैरपि. किंवदित्याह-मेरुः शैलराजो यथा वायुगुंजाभिः सशब्दप्रबलवातोत्कलिकाभिरिति ॥ ५ ॥ अधुना गणधरोद्देशेन विनयोपदेशमाह—

भद्दो विणीयविणओ । पढमगणहरो समत्तसुअनाणी ॥ जाणंतोवि तमत्थं । विम्हियहियओ सुणइ सव्वं ॥६॥

व्याख्या—भद्रः कल्याणः सुखश्च तत्स्वरूपत्वात्तद्धेतुत्वाद्वा, विनीयते कर्मानेनेति विनयः, विशेषेण नीतः प्राप्तो विनयो येन स विनीतविनयः, कोऽसौ ? प्रथमगणधरोऽर्हदाद्यशिष्यः, किंभूतः ? समाप्तं निष्ठां गतं श्रुतज्ञानं यस्य स समाप्तश्रुतज्ञानी, सर्वधनादेराकृतिगणत्वादिसमासांतः, अतः श्रुतकेवलित्वाज्जानन्नप्यवबुध्यमानोऽपि शेषजनबोधनार्थं प्रथमं पृच्छति, पश्चाद्भगवता कथ्यमानं तमिति प्राक्पृष्टमर्थं, तच्छब्दस्य प्रक्रान्तपरामर्शित्वात्प्राक्पृच्छा गम्यते, विस्मितं सकौतुकं हृदयं चित्तं, रोमाञ्चोत्फुल्ललोचनतामुखप्रसादादीनां बहिस्तत्कार्याणां दर्शनात्, यस्यासौ विस्मितहृदयः शृणोति आकर्णयति सर्वं निःशेषं तमर्थमिति, तदिदं गणधरचेष्टितमवबुध्य तथैव गुरोर्वचः श्रोतव्यमिति भावः ॥ ६ ॥ इदमेव लौकिकदृष्टान्तेनाह—

जं आणवेइ राया । पगईऊ तं सिरेण इच्छंति ॥ इय गुरुजणमुहभणियं । कयंजलउडेहिं सोयव्वं ॥ ७ ॥

व्याख्या-यदाज्ञापयति आदिशति राजा प्रभुः, प्रकृतयः पौराद्या लोकास्तदादिष्टं शिरसा उत्तमाङ्गेनेच्छन्ति साभिलापं गृह्णन्तित्यर्थः, इत्यनेनैव क्रमेण, इतिशब्दस्य इयादेशः प्राकृतलक्षणात्, गृणाति शास्त्रार्थमिति गुरुः, स चासौ जनश्च, तस्य मुखं तेन भणितं, यद्वा तन्मुखेन तद्द्वारेणान्येन भणितमुक्तं यथा गुरुजनेनेदमादिष्टमिति, तत्कृतांजलिपुटैर्भक्त्यातिरेकात् विहितकरमुकुलैः श्रोतव्यमाकर्णनीयमिति ॥७॥ किमर्थमेवं गुरुवचः श्रूयते ? इति यो मन्येत तंप्रति तत्प्राधान्यमाह—

जह सुरगणाण इंदो । गहगणतारागणाण जह चंदो ॥ जह य पयाण नरिंदो । गणस्सवि गुरू तहाणंदो ॥८॥

व्याख्या—यथेति दृष्टांतोपन्यासार्थः, सुरगणानाममरसंघातानामिंद्रः शक्रः, तथा ग्रहा मंगलादयो, गण्यंते अष्टाविंशतिसंख्ययेति गणान्यभीच्यादीनि नक्षत्राणि, बहुलवचनाद् लं, ग्रहाश्च गणानि च ताराश्चेति द्वंद्वः, तासां गणाः समूहास्तेषां यथा चंद्रः प्रधानो, यथा प्रजानां नरेंद्रो, गणस्यापि साधुसंहतिरूपस्य गुरुराचार्यस्तथा किमित्याह–आनंदयतीत्यानदः सन्नायकत्वादाह्लादकः, यदिवाज्ञां ददातीत्याज्ञादः, अनुस्वारस्यागमिकत्वात, लब्ध प्रतिष्ठत्वादादेशदाने शक्रादिवदमरादिभिरलंघनीयवाक्य इत्यर्थः. तदेवमपि स्थिते वयःपर्यायाभ्यां लघुतरं गुरुं मत्वा मंदबुद्धिर्यः परिभवेत्तदनुशास्ति दृष्टांतेनाह—

वालोत्ति महीपालो । न पया परिहवइ एस गुरुउवमा ॥ जं वा पुरओ काउं । विहरंति मुणी तहा सोवि ॥९॥

व्याख्या—महीपालो राजा बालः शिशुरिति मत्वा न प्रजातदनुचरलोकस्तं परिभवति न्यत्करोति. एषैवंरूपा गुरोराचार्यस्योपमा गुरूपमा. आस्तां तावदाचार्योऽयं वा, सामान्यसाधुमपि वयःपर्यायाभ्यां हीनमपि गीतार्थतया प्रदीपकल्पं पुरतः कृत्वा अग्रतो विधाय गुरुत्वेन गृहीत्वेति भावः, विहरंत्यप्रतिबद्धतया मुनयः साधवः तथा सोऽपि गुरुरिव महीपालवद्वा तैर्न परिभवनीयः, तत्परिभवे दुस्तरभवदंडप्राप्तेरित्याकूतं ॥ ९ ॥ तदियता विनेयस्योपदेशो दत्तः, अधुना गुरोः स्वरूपमाह—

पडिरूवो तेयस्सी । जुगप्पहाणागमो महुरवक्को ॥ गंभीरो धीमंतो । उवएसपरो य आयरिओ ॥ १० ॥

अप्परिसावी सोमो। संगहसीलो अभिग्गहमई य ॥ अविकहणो अचवलो—पसंतहियओ गुरू होइ ॥११॥

व्याख्या—प्रतिनियतं विशिष्टावयवरचनया रूपं यस्य स प्रतिरूपः प्रतिविभक्तांगः, अनेन शरीरसम्पदमाह, प्रधानगुणयोगितया वा तद्गोचरबुद्धिजनकत्वात्तीर्थकरादीनां प्रतिरूपः प्रतिबिंबाकारः. तेजस्वी दीप्तिमान्, युगं वर्तमानकालस्तस्मिन् प्रधानः शेषजनापेक्षयोत्कृष्टः, बहुत्वादागमः श्रुतं यस्यासौ युगप्रधानागमः, मधुरवाक्यः पेशलवचनः, गंभीरोऽनुत्थः परैरलब्धमध्य इत्यर्थः. धृतिमान्निःप्रकंपचित्तः, उपदेशपरः सद्वचनैर्मार्गप्रवर्तकः, चशब्दः समुच्चये आचार्यो भवतीति क्रिया. तथा अप्रतिस्रावी निश्छिद्रशैलभाजनवत् परकथितात्मगुह्यजलाप्रतिस्रवणशीलः, सौम्यो मूर्तिमात्रेणैवाह्लादसंपादकः, संग्रहशीलस्तत्तद्गुणानपेक्ष्य शिष्यवस्त्रपात्राद्यादानतत्परः, तथाविधस्य गणवृद्धिहेतुत्वात्, अभिग्रहा द्रव्यादिषु नानारूपा नियमाः, तेषु स्वपरविषये मतिस्तद्ग्रहण ग्राहणपरिणामो यस्यासौ अभिग्रहमतिकः. अविकत्थनोऽबहुभाषी अनात्मश्लाघापरो वा, अचपलः स्थिरस्वभावः, प्रशांतहृदयः क्रोधाद्यस्पृष्टचित्तः, एवंभूतो गुरुगुणैः सारो भवत्याचार्य इति प्रवर्तते ॥ ११ ॥ किमर्थमियान् गुणगणो गुरोर्मृग्यत इत्याह—

कइयावि जिणवरिंदा। पत्ता अयरामरं पहं दाउं ॥ आयरिएहिं पवयणं। धारिज्जइ संपयं सयलं ॥ १२ ॥

व्याख्या—कदापि कस्मिन्नपि काले जिनवरेंद्राः पथं ज्ञानाद्यात्मकं मार्गं दत्वा भव्येभ्यः, अजरामरं जराम-

रणरहितं मोक्ष प्राप्ता भवंति. ततश्च तत्काले तदनुभावादेव प्रवचन मर्यादावर्ति वर्तेत. तद्विरहे पुनराचार्यैः प्रवचनं तीर्थं चतुर्वर्णसङ्घरूपं आगमरूपं च सांप्रतं युक्तमनुच्छृंखलं मर्यादावर्त्यविस्मृतं च सकलं सविज्ञानं संपूर्णं च धार्यते ध्रियते. अविच्छित्त्या स्मर्यते च. न च गुणविकलैरिदं कर्तुं शक्यं, अतस्तदन्वेषणं युक्तमिति ॥ १२ ॥ तदेवं शिष्यस्य विनयोपदेशो दत्तो गुरुणां चैवंविधेन भाव्यमित्युक्तं. अधुना साध्वीरधिकृत्य विनयोपदेशः, स च साधूनामद्यदीक्षितानामपि ताभिः कार्य इति. अत्र कथानकं—

कौशांब्यां नगर्यां शेडुवकनाम्ना निःस्वेन काकंदीपुरतो वैराग्यादागतेन राजमार्गावतीर्णा गणनातिक्रांतसाध्वीश्रावकश्राविकालोकपरिकरा राजसामंतश्रेष्ठिपौरजनैः पूज्यमानानुगम्यमाना च तथाप्यनुत्सेकवती शमश्रीरिव मूर्तिमती वपुर्वैलक्षण्योपहसितामरसुंदरीसौंदर्यार्यचंदना ददृशे. ततः स संजातकौतुकः कंचन वृद्धं पप्रच्छ, अथ केयं भगवतीति ? स प्राहैषा चंपाधिपदधिवाहनराजदुहिता वसुमती स्वपुण्योपार्जितचंदनाभिधाना तृणवदपहाय राज्यसुखं प्रव्रजिता वीरस्य भगवतः प्रथमांतेवासिनी आचार्यसुस्थितवंदनार्थमुच्चलितेति. ततो भक्तिकुतूहलाभ्यामाकृष्टचित्तः स साधूपाश्रयं जगाम. चंदनापि गुरुं वंदित्वा स्वोपाश्रयमगमत. दृष्टोऽसौ गुरुणा ज्ञानावलोकेन, लक्षिता धर्मयोग्यता, संभाषितो मधुरवचनैः, अस्योचितमिदमिदानीमिति, भोजितः परमान्नैः, चिंतितमनेनाहो करुणापरतैषा, उभयलोकहितं जीवितं, निवेद्य स्वाभिप्रायं प्रपन्नः प्रव्रज्यां, स्थिरीकरणार्थं सुसाधुसहायः प्रहितः साध्वीप्रतिश्रय गुरुणा, तत्र तस्मिन् प्रविष्टे बहिः स्थिताः साधवः, अभ्युत्थितः सपरिकरयार्यचंदनया, अर्पितम-

परिभोगमासनं, वंदितः सविनयं. अत्रांतरे तस्याः कृते उपनीतमार्यिकाभिर्विष्टरं, नेष्टमिदं मे इत्युक्त्वा विरचितक रमुकुलया तया तं साधुंप्रति प्रोक्तं किं भगवतामागमनप्रयोजनमिति ? ततोऽसावहो धर्मप्रभावो यदेवंविधापीयं मय्येवं वर्तते ! इति संचिंत्याह, युष्मदुदंतान्वेषणनिमित्तं गुरुभिः प्रेषितोऽहमिति स्थिरीभूतधर्माभिनिवेशो निर्गतः प्रतिश्रयात्. तथा चाह-

अणुगम्मइ भगवई । रायसुयज्जा सहस्सविंदेहिं ॥ तहवि न करेइ माणं । परियच्छइ तं तहा नूणं ॥ १३ ॥
दिणदिक्खियस्स दमगस्स । अभिमुहा अज्जचंदणा अज्जा ॥ नेच्छइ आसणगहणं । सो विणओ सव्वअज्जाणं ॥१४॥

व्याख्या-अनुगम्यते भगवती राजसुता आर्यचंदना वृंदसहस्रैः पूजिता लोकानामिति गम्यते. वृंदशब्दस्य परनिपातः प्राकृतत्वात्, तथापि न करोति मानं गर्वं, 'परियच्छइत्ति' पर्यवस्यति जानीते तत्तथा नूनं निश्चितं यथेदं गुणानां माहात्म्यं न ममेति. तथा दिनदीक्षितस्य तद्दिवसप्रव्रजितस्य द्रमकस्य अभिमुखाभ्युत्थितेति शेषः. का सा चार्या साध्वी, कतमा ? आर्यचंदना, तथा नेच्छत्यासनग्रहणं कर्तुमिति शेषः. स तथाविधो विनयः सर्वार्याणां साधुविषयस्तथा समस्ताभिः कार्य इति ॥ १३ ॥ १४ ॥ तस्मात् स्थितमेतदित्याह-

वरिससयदिक्खियाए । अज्जाए अज्जदिक्खिओ साहू ॥ अभिगमणवंदणनमं—सणेण विणएण सो पुज्जो ॥१५॥

व्याख्या-वर्षशतदीक्षितयार्यया अद्यदीक्षितः साधुः, अभिगमनं काले पदभिमुखं यानं, वंदनं द्वादशावर्तादि.

नमंमणंति नमस्करणमांतरा प्रीतिः, अभिगमनं च वंदनं च नमस्करणं चेति द्वंद्वैकवद्भावस्तेन, तथा विनयेनासनदानादिना, व्यस्तनिर्देशश्छंदोवशात्, स साधुः पूज्य इति ॥ १५ ॥ किमित्येवमित्याह—

धम्मो पुरिसप्पभवो । पुरिसवरदेसिओ पुरिसजिट्ठो ॥ लोएवि पहू पुरिसो । किं पुण लोगुत्तमे धम्मे ॥१६॥

व्याख्या—दुर्गतिपतदात्मधरणाद्धर्मः श्रुतचारित्ररूपः, पुरुषा गणधरास्तेभ्यः प्रभव उत्पत्तिर्यस्य स तथा. पुरुषवरास्तीर्थकृतस्तैर्देशितोऽर्थतः कथितः, अतः पुरुषस्वामिकत्वात्पुरुषज्येष्ठः पुरुषोत्तम इत्यर्थः. लोकेऽपि प्रभुः पुरुषः, किं पुनर्लोकोत्तमे धर्मे ? स्वल्पबुद्धिना लोकेनापि दृष्टोऽयं मार्गः, विशेषतः सर्वज्ञैरित्यभिप्रायः ॥ १६ ॥ कथानकं चात्र—

वाराणस्यां संवाहनो राजा, तस्य रूपवतीनां कन्यकानां सहस्रमधिकमासीत्. सौंतर्पत्न्यां महादेव्यामुपरत, अपुत्रत्वान्नायकविकला ग्रहीतुमभिवांछिता राज्यश्रीरन्यैः,वारितास्ते नैमित्तिकेन उदरवर्तिनो भविष्यदंगवीरनाम्नस्तनयस्य प्रभावात्पराभविष्यंते भवंत इति वदता. तदाकर्ण्य निवृत्ता ग्रहणाभिलापात्. व्यपगतो विप्लव इत्याह—

संवाहणस्स रन्नो । तइया वाणारसीए नयरीए ॥ कण्णासहस्समहियं । आसी किर रूववंतीणं ॥ १७ ॥

तहवि य सा रायसिरी । उल्लटंती न ताइया ताहिं ॥ उयरट्ठिएण एक्केण । ताइया अंगवीरेण ॥ १८ ॥

व्याख्या—प्रथमोक्तार्था, तथापि सा राज्यश्रीः, उल्लटती अवलुठंन्ती विनश्यंतीत्यर्थः, न त्राता न रक्षिता ताभिः

कन्याभिः, उदरस्थितेनैकेन त्रातांगवीरेणेति ॥ १ ॥ अन्यच्च—

महिलाण सुबहुयाणवि । मज्झाओ इह समत्थघरसारो ॥ रायपुरिसेहिं निज्जइ । जणेवि पुरिसो जहिं नत्थि ॥१९॥

व्याख्या—महिलानां स्त्रीणां सुबहूनामपि मध्यादिह जनेऽपीति संबंधः, समस्तगृहसारः सर्वद्रव्यनिचयादिः, राजपुरुषैर्नीयते राजकुलं प्राप्यते यस्मिन् गृहे पुरुषो नास्त्यधनिकत्वादिति. ॥ १ ॥ यथायं पुरुषप्रधानो धर्मस्तथा जनरंजनाप्रधान इति यश्चितयेत्तंप्रत्याह—

किं परजणबहुजाणा—वणाहिं वरमप्पसक्खियं सुकयं ॥ इय भरहचक्कवट्टी । पसन्नचंदो य दिट्ठंता ॥२०॥

व्याख्या—ज्ञाप्यते परप्रतीतं क्रियतेऽमूभिरिति ज्ञापना रंजना, बह्व्यश्च ता ज्ञापनाश्च बहुज्ञापनाः. परजनस्य बहुज्ञापना इति समासः, ताभिः किं? न किंचित्, असारत्वात्तासां. वरं प्रधानमात्मसाक्षिकं प्रत्यायितस्वचित्तं सुकृतं सदनुष्ठानं, इत्येवमेतन्नान्यथा. इहेति पाठांतरं वा, इहास्मिन्नर्थे भरतचक्रवर्ती प्रसन्नचंद्रश्च दृष्टांतौ, तथाहि—भरतस्यादर्शसदनांतर्वर्तिनोंगुलीयपाताशोभितांगुलीदर्शनजातविस्मयेन क्रममुक्तनिःशेषाभरणविच्छायांगनिरीक्षणद्वारायातवैराग्यप्रकर्षस्यारंजितेऽपि बहिर्लोके शुक्लध्यानोल्लासादभूत्केवलज्ञानमिति. ॥ प्रसन्नचंद्रस्य पुनर्दुर्विषहशीतवाताप्रावरणातपादिक्लेशानसहिष्णोरपि निःप्रकंपकायोत्सर्गावर्जितश्रेणिकादिलोकचित्तस्य पुत्रपरिभवाकर्णनसंजातचित्तविप्लवप्रारब्धसंग्रामस्य सप्तमनरकपृथिवीप्रायोग्यकुकर्मकरणपरिणामोऽभूत्, तन्न लोकरं-

जनाप्रधानो धर्मः, अपि तु चित्तशुद्धिप्रधानः प्रवर इत्यभिप्रायः. यस्तु पुण्यपापक्षयंकरी दीक्षेयं पारमेश्वरीति वचनाच्छैवयद्वेषमात्रादेव तुष्येत्तं शिष्ययितुमाह—

वेसोवि अप्पमाणो । असंजमपएसु वट्टमाणस्स ॥ किं परियत्तियवेसं । विसं न मारेइ खज्जंतं ॥ २१ ॥

व्याख्या—न केवलं जनरंजना, वेषोऽपि रजोहरणादिरूपोऽप्रमाणः, प्रमाणं प्रत्यक्षादि, अविद्यमानः प्रमाणोऽप्रमाणः, कर्मवधाभावंप्रति निर्युक्तिक इत्यर्थः. कस्य ? असंयमपदेषु पृथिव्याद्युपमर्दस्थानेषु वर्तमानस्य पुंसः. स्वपक्षे युक्तिमाह-किं परिवर्तितवेषं कृतान्यनेपथ्यं पुरुषमिति गम्यते, विषं न मारयति खाद्यमानं ? मारयत्येव. तथा संक्लिष्टचित्तविषमसंयमप्रवृत्तं पुरुषं संसारमारेण मारयति. न वेषस्तं रक्षतीति भावः ॥ २१ ॥ एवं तर्हि भावशुद्धिरेव विधेया, किं वेषेण ? नैतदस्ति, पृथिव्यादिरक्षणवद् व्यवहारतो वेषस्यापि भावशुध्ध्युपकारकत्वात्, तद्विकलोऽसौ अकिंचित्कर इत्युच्यते, तथा चाह—

धम्मं रक्खइ वेसो। संकइ वेसेण दिक्खिओमि अहं ॥ उम्मग्गेण पडंतं। रक्खइ राया जणवउव्व ॥२२॥

व्याख्या—धर्मं रक्षति वेषः, तद्ग्रहणोत्तरकालं सत्पुरुषाणामकार्यप्रवृत्तेरदर्शनात्. कथंचित्प्रवृत्तोऽप्यकार्ये गृहीतवेषः शंकते वेषेण हेतुभूतेन, दीक्षितोऽहमिति मत्वा. दृष्टांतमाह—उन्मार्गेण चौर्यपारदार्यादिना भावोत्पथेन पतंतं सदाचारगिरिशिखराल्लुठंतं यथा पुरुषमित्यध्याहारः, राजा रक्षति, तद्दंडभयेनादित एवाप्रवृत्तः, प्रवृत्तस्यापि

शंकया निवृत्तेः. जनपदश्च यथा रक्षति, तद्धिक्कारभयेनाप्युन्मार्गप्रवृत्तिनिवृत्तिदर्शनात्. तथा वेषोऽपीति ॥ २२ ॥ निश्चयतस्तु—

अप्पा जाणइ अप्पा। जहट्ठिओ अप्पसक्खिओ धम्मो॥ अप्पा करेइ तं तह। जह अप्पसुहावओ होइ ॥२३॥

व्याख्या—आत्मा यथावस्थितः शुभपरिणामोऽशुभपरिणामो वा ? एतदात्मा जानाति, न तु परः, परचेतोवृत्तीनां दुर्ज्ञेयत्वात्. अत एवात्मा जीवः साक्षी प्रत्यायनीयो यस्यासावात्मसाक्षिकः. कोऽसौ? धर्म आत्मा लब्धविवेको जीवः करोति तत् तस्मात्तत्तथा, यथा आत्मसुखावहमनुष्ठानं भवति, किं पररञ्जनयेत्याकूतं ॥ २३ ॥ यतो भाव एव शुभाशुभकर्मकारणमित्याह—

जं जं समयं जीवो। आविसइ जेण जेण भावेण॥ सो तंमि तंमि समए। सुहासुहं बंधए कम्मं ॥२४॥

व्याख्या-यं यमिति वीप्सया सर्वसंग्रहमाह. समयं परमनिकृष्टं कालं जीव आविशति वश्यत्यास्कदति, येन येन शुभाशुभेन भावेन परिणामेन, स जीवस्तस्मिंस्तस्मिन् समये शुभाशुभं तद्भावप्रत्ययमेव बध्नाति कर्म ज्ञानावरणादि ॥ २४ ॥ तस्माच्छुभ एव भावो विधेयो, न गर्वादिदूषित इत्याह—

धम्मो मएण हुंतो। तो नवि सीउण्हावायविज्झडिओ॥ संवच्छरमणसिओ। बाहुबली तह किलिस्संतो ॥२५॥

व्याख्या—धर्मो मदेनाभविष्यत्, यदीति गम्यते, ततो नापि न संभाव्यत एतत्, प्रचुर शीतोष्णवातैर्वि-

झटितो व्याहतः पराभूतोऽतिव्याप्तत्वात्, शीतोष्णवातविझटितः संवत्सरं यावदनशितो निर्भोजनो बाहुबली तथा अक्लिश्यत् विधाधामन्वभविष्यदिति संक्षेपार्थः. विस्तरार्थः कथानकगम्यस्तच्चेदं–भरते चक्रवर्तिनि निजाज्ञाग्राहणोद्यते तत्कनिष्ठभ्रातरो विहाय राज्यानि ऋषभदेवांतिके प्राव्राजिषुः. समुत्पन्नानि च सर्वेषां केवलज्ञानानि. बाहुबली पुनस्तद्भ्रातैव कथमहमेतद्भयादाज्ञां प्रव्रज्यां वा गृह्णामीत्यामर्षादुत्थितः, संलग्नं द्वयोरपि युद्धं, दृष्टिवाग्बाहुमुष्टिप्रहारदण्डयुद्धेषु पराजितेन भरतेन चिंतितं किमयं चक्रवर्तीति ! अत्रांतरेऽर्पितं तस्मै देवतया चक्रं. गृहीतचक्रं भरतं दृष्ट्वा चिंतितं बाहुबलिना चूर्णयामि सचक्रमेनं, अथवा किमस्य गतमर्यादाजीविनस्य मारणेन ? अहो दुरंता विषयाः, यदासक्ता न कुर्वंति योग्यायोग्यविचारं, यदुक्तं–न मातरं न पितरं । नस्वसारं न सोदरं ॥ गुणैः संपश्यति तथा । विषयान् विषयी यथा ॥ १ ॥

इति संजातवैराग्येण तेन निःसृष्टो भुवि दंडः, कृतः पंचमुष्टिको लोचः, अर्पितं देवतया रजोहरणादि, प्रपन्नः प्रव्रज्यां. तमवलोक्य लज्जितः स्वकर्मणा भरतः प्रसाद्यानेकविधं वंदित्वा गतः. बाहुबली कथमहं छद्मस्थतया केवलिनो लघुभ्रातॄन् वंदिष्ये ? इत्यभिप्रायात्स्थितस्तत्रैव कायोत्सर्गेण, तिष्ठतो गतं वर्षं, शीतवातातपैर्दग्धस्थाणुकल्पं कृतं शरीरकं, प्रसरिताः समंततो वल्लयः, प्ररूढा दर्भसूच्यः, समुद्भूताश्चरणयोर्वल्मीकाः. प्रसूताः कूर्चादौ शकुनय इति. ततो भगवता तद्भगिन्यौ ब्राह्मीसुंदर्यौ भ्रातरवतर हस्तिन इति वक्तव्यं गत्वा युवाभ्यामित्युपदिश्य तत्पार्श्वं प्रहिते. गत्वाभिहितं च ताभ्यां, चिंतितमनेन कुतो मे मुक्तसंगस्य हस्ती ! आः ! ज्ञातं !

मान इति. धिग् मा दुष्टचित्तकं ! वंद्यास्ते भगवंतो, व्रजामि वंदितुं, इत्युत्पादित चरणेन सह केवलज्ञानमिति. यदि स गर्वं नाकरिष्यदादित एवोत्पादयिष्यत्. अतो न मदेन धर्मो भवतीति स्थित. ममदश्च न गुरूपदेशयोग्य स्तथा न स्वार्थसाधक इत्याह—

नियगमइविगप्पिय—चिंतिएण सच्छंदबुद्धिचरिएण ॥ कत्तो पारत्तहियं । कीरइ गुरुअणुवएसेण ॥ २६ ॥

व्याख्या—निजकमतिविकल्पितचिंतितेनेति, विकल्पितं स्थूलालोचन, चिंतितं सूक्ष्मालोचन, ततश्च गुरूपदेशाभावान्निजकमत्यात्मीयबुद्ध्या विकल्पितचिंतिते यस्य स तथा तेन, अत एव स्वच्छंदबुद्धिचरितेन स्वतंत्रमतिचेष्टितेनेत्यर्थः, कुतः परत्र हित क्रियते ? न कुतश्चिदुपायाभावात्. केनेत्याह—उपदेशमर्हतीत्युपदेश्यः, ततोऽन्योऽनुपदेश्यो, गुरोरनुपदेश्यो गुर्वनुपदेश्यः, तेन गुरुकर्मणा शिष्येणेति शेषः ॥ २६ ॥ किंच—

थद्धो निरुवयारी । अविणिओ गव्विओ निरुवणामो ॥ साहुजणस्स गरहिओ । जणेवि वयणिज्जयं लहइ ॥२७॥

व्याख्या—स्तब्धो नीचैर्वृत्तिः शरीरेऽपि दर्शितमानविकार इत्यर्थः. निरुपकारी कृतघ्नः, अविनीत आसनदानादिविकलः, गर्वितः स्वगुणोत्सेकवान् आत्मश्लाघापरो वा, निरुपनामो गुरुष्वप्यप्रणतिप्रणवः, स एवंभूतः साधुजनस्य गर्हितो निंदितो भवति. जनेऽपि वचनीयतां दुष्टशील इति हीलारूपां लभते प्राप्नोतीति ॥ २७ ॥ तदिदं जानन्नपि गुरुकर्मा कश्चिन्न बुध्यते, अन्यस्तु महात्मा स्वल्पेनापि बुध्यते इत्याह—

थोवेणवि सप्पुरिसा । सणंकुमारव्व केइ बुज्झंति ॥ देहे खणपरिहाणी जं किर देवेहिं से कहियं ॥ २८ ॥

व्याख्या—स्तोकेनापि निमित्तेनेति शेषः, सत्पुरुषाः सनत्कुमारवत् केचिद् बुद्ध्यते, न तु सर्वेऽपि, गुरुकर्मणां निमित्तशतैरप्यबोधदर्शनात्. कथमसौ बुद्धस्तदाह-देहे क्षणेन स्वल्पकालेन परिहाणी रूपह्रासः क्षणपरिहाणिरिति यत्किल देवाभ्यां से तस्य कथितं तदेवावबोधकारणं जातमिति समासार्थः. व्यासार्थः कथानकाद् ज्ञेयस्तच्चेदं-शक्रः स्वसभायां सनत्कुमारचक्रिरूपं वर्णयामास. ततोऽश्रद्धानकुतूहलाभ्यां प्रेरितावचतीर्णौ द्विजरूपौ द्वौ देवौ, अभ्यक्ते सनत्कुमारे प्रविष्टौ च तौ तत्स्थाने, निरीक्षितं तद्रूपं, विस्मितौ च चित्तेन, पृष्टौ राज्ञा किं भवतोरागमननिमित्तमिति. तावाहतुर्भवद्रूपदर्शनकौतुकं. राजाह यद्येवं तर्हि सदस्यागंतव्यं. निर्गतौ देवौ, ततो निर्वर्तितस्नानविलेपनालंकारवस्त्रग्रहणभोजने सपरिकरे सभोपविष्टे राज्ञि तौ पुनः प्रविष्टौ. विलोक्य रूपं सविषादौ स्थितावधोमुखौ. राजाह किमेतदिति. तावाहतुः संसारविलसितं. प्रभुराह कथं ? तावाहतुर्यद्रूपं प्राग्भवतो दृष्टं तदनंतगुणहीनमिदानीं वर्तते. प्रभुराह कथं जानीतः ? तावाहतुरवधिनेति. ततो निवेद्य शक्रवृत्तांतं तौ गतौ. सनत्कुमारोऽपि तदाकर्ण्य यदेतत्सकलास्थामूलं शरीरकं तदपि खरतरघर्मोष्माक्रांतशकुनिगलचंचलमिति. चिंतयन् गतो वैराग्यप्रकर्षं, तृणवदपहाय राज्यं प्रव्रजित इति. तदेवं रूपस्यानित्यतोक्ता. अधुना सर्वस्योच्यते, तदाह—

जइ ताव लवसत्तमसुरा । विमाणवासीवि परिवडंति सुरा ॥ चिंतिज्जंतं सेसं । संसारे सासयं कयरं ॥२९॥

व्याख्या—मानं माः संपदादेराकृतिगणत्वात् क्विप्. सप्तभिरपूर्यमाणैर्मा परिच्छेदः प्राप्यतया मोक्षगमनयोग्यानां

मायुष्कस्य येषां तानि सप्तमानि, लवैः कालविशेषैः सप्तमानि लवसप्तमानि, कानि ? सुरविमानानि अनुत्तरविमानानीत्यर्थः. तेषु वासः स्थानं, स विद्यते येषां ते लवसप्तमसुरविमानवासिनः, तेऽपि यदि तावत्पतंति स्वस्थितिक्षये च्यवंते सुरा देवास्तर्हि चिंत्यमानं शेषं वस्तु संसारे शाश्वतं नित्यं कतरत् ? न किञ्चिद् दृष्टान्तमात्रेणाप्यस्तीति भावः. अथवैवं व्याख्यायते—मानं माः परिच्छेदः सम्पदादेराकृतिगणत्वात् क्विप्. सप्त च ते माश्च सप्तमाः, एकपदव्यभिचारेऽपि समासः, लवः कालविशेषः, लवानां सप्तमाः लवसप्तमाः, अविद्यमाना लवसप्तमाः. यतिर्मुनिः, यतेर्भावो यतिताऽनगारता, पूर्वभवे यतितायामलवसप्तमा यतिताऽलवसप्तमाः, यतितालवसप्तमाश्च ते सुराश्च यतिताऽलवसप्तमसुराः.

विशेषणान्यथानुपपत्त्यानुत्तरसुराः, ते पूर्वभवे यतो यतयो मुक्तिप्राप्तियोग्या सन्तो न्यूनं सप्तायुर्लवाद्भवन्ति, तेषां विमानानि आलयास्तेषु वासोऽवस्थानं स विद्यते येषां ते यतितालवसप्तमसुरविमानवासिनः सुराः. एवं तेऽपि यदि परिपतन्ति च्यवन्ते, सुः प्रधानो रा अर्थो यस्य स सुरः, तं संबोध्य कथ्यते चिन्त्यमानं पर्यालोच्यमानं शेषमसारं, अनुत्तरसुरापेक्षया संसारे संसृतौ शाश्वतं नित्यं कतरत् किं स्यात् ? न किञ्चिदित्यर्थः. अत एव सांसारिकसुखप्रतिबन्धाभावोपदेशार्थं परमार्थतस्तदभावमाह—

कह तं भन्नइ सोक्खं। सुचिरेणवि जस्स दुक्खमल्लियइ ॥ जं च मरणावसाणे। भवसंसाराणुबंधि च ॥३०॥

व्याख्या—कथं तद्भण्यते सौख्यं ? सुचिरेणापि बहुकालेनापि यस्य दुःखमालीयते आश्लिष्यति, यदनन्तरं

दुःखं भवतीत्यर्थः. तदनेनानुत्तरसुखस्याप्यनन्तरं गर्भजदुःखश्लेपात्पुण्यानुबन्धिपुण्यजनितस्याभावो दर्शितः. अधुना पापानुबन्धिपुण्यजनितस्याह—यच्च मरणरूपमवसानं पर्यन्तो मरणावसानं तस्मिन्, भवन्त्यस्मिन्नानारूपाः प्राणिन इति भवो नारकादिः, तस्मिन् संसरणं पर्यटनं भवसंसारस्तदनुबन्धशीलं यस्य तद्भवसंसारानुबन्धि. चशब्दादनन्तरं दुःखाश्लेपि च. तत्सुतरां मुखतया वक्तुं न शक्यमिति. ॥ ३० ॥ तदेतद्बहुशोऽपि कथ्यमानं गुरुकर्मणां मनसि न लगतीत्याह—

उवएससहस्सेहिंवि । बोहिज्जंतो न बुज्झई कोई ॥ जह बंभदत्तराया । उदाइनिवमारओ चेव ॥ ३१ ॥

व्याख्या—उपदेशसहस्रैरपि बोध्यमानो न बुध्यते कश्चित्, कथमित्याह-यथा ब्रह्मदत्तराजा उदायिनृपमारकश्च. एवकारस्य च कश्चिदेव बुध्यते, न तु सर्व इत्यत्र व्यवहितः सम्बध इति समासार्थः. व्यासार्थः कथानकगम्यः ॥ ३१ ॥ तत्राद्यं तावत्-ब्रह्मदत्तश्चक्रवर्ती संजातजातिस्मरणो जन्मांनरसहोदरसङ्गमार्थं यः पश्चार्धं पूरयति तस्मै स्वार्धराज्यं प्रयच्छामीति प्रतिज्ञायेदं श्लोकपादद्वयं सदसि न्यगादीत्-आस्व दासौ मृगौ हंसौ । मातंगावमरौ तथा ॥ तदाकर्ण्य जनाः पठितुमारेभिरे. अन्यदा स जन्मांतरसत्कसहोदरजीवः पुरिमतालनगरे वणिक्सुतो भूत्वा सुगृहीतप्रव्रज्यः संजातजातिस्मरणस्तत्रैवागतः, श्रुत्वारघट्टिकेन पठ्यमानं श्लोकार्धं स प्राह-एप नौ षष्ठिका जाति-रन्योन्याभ्यां वियुक्तयोः ॥ १ ॥ अरघट्टिकस्तु तच्छ्लोकार्धं मुखपाठे विधाय गतो राजकुलं, पठितश्च प्रभोः पुरतः संपूर्णः श्लोकः. स्नेहातिरेकेण गतो मूर्छां राजा. चंदनरससेकादिभिर्लब्धा तेन चेतना. न मया परितोऽय-

मिति विलपन्नसौ मोचितः कदर्थकेभ्यो राजन्येभ्यो भूपेन, पृष्टश्च कोऽस्य पूरक इति. स प्राह अरघट्टसमीपवर्ती मुनिः.

ततो भक्तिस्नेहाकृष्टचित्तः सपरिकरो निर्जगाम राजा, दृष्टो मुनिः, तुष्टचेतसा वन्दितः सविनयं, उपविष्टस्तदतिके, मुनिनाप्यारब्धा देशना, दर्शिता भवनिर्गुणता, वर्णिताः कर्मबन्धहेतवः, श्लाघितो मोक्षमार्गः, ज्ञापितः शिवसुखातिशयः, ततः संविग्ना परिषत्, परमप्रबुद्धो ब्रह्मदत्तः प्राह भगवन् यथा स्वसंगमेनाह्लादिता वयं, तथाह्लादयतु भवान् राज्यस्वीकरणेन, पश्चात्तपः सममेव करिष्यावः, एतदेव वा तपःफलं. मुनिराह–युक्तमिदं भवदुपकारोद्यतानां केवलं, दुर्लभेयं पुनर्मानुपावस्था, सततपातुकमायुः, चंचला श्रीः, अनवस्थिता धर्मबुद्धिः, विपाककटवो विषयाः, तदासक्तानां ध्रुवो नरकपातः. दुर्लभं पुनर्मोक्षबीजं विशेषतो विरतिरत्नं, न तत्त्यागाद् दुस्तरनरकपातहेतुः कतिपयदिनभावि राज्याश्रयणमाह्लादयति चेतो विदुषां, तत्परित्यजामु कदाशयं, स्मर प्राग्भवानुभूतदुःखानि, पिब जिनवचनामृतं, संचरस्व तदुक्तमार्गेण, सफलीकुरु मनुजजन्मेति. स प्राह भगवन्नुपनतसुखत्यागेनादृष्टसुखवाञ्छाऽज्ञतालक्षणं, तन्मैवमादिश ? कुरु समीहितं ? ततः पुनरुक्तमुक्तोऽपि यदा स न प्रतिबुद्ध्यते तदा चिंतितं मुनिना, आः ज्ञातं मयैतत, यदावां मातङ्गभवे चित्रसंभूतनामानौ श्रमणकौ सन्तौ गतौ गजपुरं, प्रविष्टोऽयं गोचरे खलीकृतो नमुचिमन्त्रिणा. संजातकोपतया तेजोनिसर्गोद्यतेन तेन मुक्तो वदनेन धूमः, समाकुलीभूताश्च जनाद्विज्ञेयेमं वृत्तान्तमागतस्तत्र सनत्कुमारचक्रवर्ती, ततस्तेन मया चोपशामितः कृच्छ्रेण, ततः प्रपन्नावावामनशनं, वंदितौ च सांतःपुरेण चक्रवर्तिना, तदा स्त्रीरत्नालकसंस्पर्शवेदनजाताभिलाषातिरेकेण

मया निवार्यमाणेनापि कृतं तत्प्राप्त्यर्थं तेन सम्भूतेन निदानं, तदिदं विजृम्भते, अतः कालदष्टवदसाध्योऽयं जिनवचनमन्त्रतन्त्राणामिति गतो मुनिः कालेन मोक्षं च. इतरस्तु सप्तमनरकपृथिवीमगमदिति.

द्वितीयकथानकमधुना-पाटलिपुत्रे कोणिकसुतोदायिराजेनापहारि राज्यं कस्यचिन्नृपतेः, तत्सुतो जगामोज्जयिनीं, तस्याः प्रभोरुदायिमत्सरिणः पुरतोऽमावाहाहं तं मारयिष्ये, भवता तु साहाय्यं कार्यमित्यभिधाय गतः स पाटलिपुत्रे. चिरादप्राप्तान्योपायेन तेनानिवारितप्रवेशतदभ्यर्हिताचार्यसमीपे प्रपन्नं साधुलिङ्गं. अभ्यस्ता द्विविधा शिक्षा, रञ्जिताः साधवः, स्थितस्तन्मध्ये द्वादशवर्षाणि. स चोदायिनृपोऽष्टमीचतुर्दश्यादिषु पौषधं विधत्तेस्म., सूरयस्तद्धर्मदेशनार्थं रात्रौ गच्छंतिस्म. स चान्तरान्तरा प्रवर्तमानोऽप्यपरिणतत्वान्न नीतः पूर्वं. अन्यदा तु विकालवेलायां तत्र गन्तुं प्रवृत्तेषु गुरुषु झटित्युपस्थितोऽसौ नीतः. ततो धर्मदेशनया स्थित्वा प्रसुप्तयोर्गुरुनृपयोः स दुष्टः पूर्वगृहीतां कङ्कलोहशस्त्रिकां राजगलके निधायापक्रान्तः, न निवारितो राजारक्षैर्मुनिरिति कृत्वा. रुधिरसेकाद्विबुद्धाः सूरयः, न दृष्टः साधुः, दृष्टं तद्विलसितं, ततो नान्यः प्रवचनमालिन्यक्षालनोपाय इति संचिन्त्य दत्तसिद्धालोचनेन नमस्कारपूर्वकमापूर्य धर्मध्यानं तेन दत्ता सैव शस्त्रिका निजगले इति. इतरस्तु गतो निजराजमूले, कथितो वृत्तांतः, अदृष्टव्यस्त्वमपसर दृष्टिमार्गादिति निष्कासितस्तेन. तिष्ठतश्च साधुमध्ये तावंतं कालमवश्यंभावीन्युपदेशसहस्राणि, न चासौ तैर्बुद्धः, तद्वदन्योऽपि कश्चित् क्लिष्टजंतुर्न बुद्ध्यत इत्युपनयः. अत एव ये न प्रतिबुद्ध्यंते, तेषां ब्रह्मदत्तवदपायमुपदर्शयन्नाह—

गयकन्नचंचलाए। अपरिचत्ताए रायलच्छीए ॥ जीवा सकम्मकलिमल—भरियभरा तो पडंति अहे ॥३२॥

व्याख्या—गजकर्ण इव चंचला गजकर्णचंचला, तया अपरित्यक्तया राजलक्ष्म्या हेतुभूतया जीवाः स्वकर्मैव कलिमलं किल्विषं तस्य भृतः पूर्णः कृतो भरो यैस्ते स्वकर्मकलिमलभृतभराः संतस्ततः पतंति यांत्यधो नरक इति ॥ ३२ ॥ आस्तां तावत्परत्रेहापि पापानि साध्वसहेतुत्वाद् द्वावपि नाशयंतीत्याह—

वोत्तूणवि जीवाणं । स दुक्कराइंति पावचरियाइं ॥ भयवं जा सा सा सा । पच्चाएसो हु इणमो ते ॥३३॥

व्याख्या—वक्तुमपि जीवानां सुदुष्कराणि सुष्टु दुःशक्यानि, इत्येवं पापचरितानि दुष्टचेष्टितानि. भगवन् या सा सा सेत्यनेन दृष्टांतं सूचयति. शिष्यंप्रत्याह—प्रत्यादेशो दृष्टांतो, हुः पूरणार्थे, एवंभूतस्ते तव, अतः पापचरितानि न कथंचित्कार्याणीत्यभिप्रायः. ॥ ३३ ॥ कथानकमधुना–महावीरस्य भगवतः समवसरणे भिल्लः कश्चिन्मनसा पृच्छतिस्म. भगवानाह भद्र वाचा पृच्छ? स प्रत्याह—भगवन् या सा सा सेति? भगवतोक्तं भद्र या सा सा सेति. गतो भिल्लः. ततो गौतमो लोकप्रबोधनार्थं प्राह भगवन् किमनेन पृष्टं? किं वा भट्टारकैः कथितं? ततो भगवांस्तद्वृत्तांतमाचचक्षे–वसंतपुरेऽनंगसेनो नाम सुवर्णकार ईप्सितदानप्रदानेन निजरूपोपहसितामरसुंदरीणां तरुणस्त्रीणां स्त्रीलोलतया पंचशतानि पत्नीत्वेन मेलयित्वेर्ष्यापरतया प्रासादे निधाय रक्षन्नास्तेस्म. न च स्वपरिभोगवतीं विहायान्यासां संस्कारं कर्तुं ददाति. अन्यदाऽनिच्छन्नपि स नीतो मित्रेण वाटिकायां क्रीडाप्रकरणे.

अयमरोऽगमिति कृत्वा कृतस्नानविलेपनाभरणनेपथ्या हस्तन्यस्तदर्पणास्ताः क्रीडितुमारब्धाः पत्न्यः.

इतः समायातोऽसौ तास्तथाविधा दृष्ट्वा गतः कोपं, गृहीत्वैका हता मर्मसु वियुक्तासुभिः, चिंतितमन्याभिरस्मानप्येवमसौ करिष्यतीति विचिंत्य ताभिर्भयेन क्षिप्ता युगपदादर्शकास्तस्योपरि, ततोऽसौ मृतः, मृते च तस्मिन् संजातस्तासां पश्चात्तापः, नान्या गतिः पतिमारिकाणामिति संचिंत्य प्रविष्टास्ता ज्वलने. सामुदायिककर्मवशादेकत्र पल्ल्यां ताः संजाताश्चौरतयेति. प्रथमहतपत्नीजीवस्तु क्वचिद्ग्रामे जातो दारकः. सुवर्णकारस्त्वन्ययोनिषु पर्यट्य समुत्पन्नस्तद्भगिनीभावेन. पूर्वभववासनावेधादतिमोहोत्कटतया रोदिति सा प्रतिक्षणं, स्पृष्टा च कथंचिदवाच्यदेशे तेन दारकेण तूष्णीं भवति. अयमुपाय इति पुनः पुनः परपर्शासौ, दृष्टः पितृभ्यां, वारितोऽप्यतिष्ठन्निःसारितो गेहाद्गतश्चौरपल्लिं, संजातश्च तदधिपतिः, इतरापि वर्धमाना प्रबलकामातुरा गता कंचिद्ग्रामं.

पतितास्तत्र ग्रामे ते चौराः, समर्पितस्तया किं मां न नयथ इति वचनेनात्मा तेषां, जाता सा सर्वेषां पत्नी, तत्कृपया चानीता तैरन्यापि स्त्री, ममेयं रतिविघ्नहेतुरिति संचिंत्य क्वापि गतेषु तेषु क्षिप्ता तया सा कूपे, न दृष्टा सा आगतैस्तैः, ततोऽनयैतदनुष्ठितमिति विज्ञायैवं बहुमोहा किमियं सा मद्भगिनी भविष्यतीति संजातसंशयः पल्लीपतिः श्रुत्वा च मद्वार्तामिषोऽत्र समायातो न च शक्नोति पृष्टुं, तेनोक्तं या सा सा सेति, अस्यायमर्थ——यासौ मद्भगिनी सा किमेषा वनवर्तिनी पापा ? मया कथितं या सा सा सेति. तदाकर्ण्याहो दुरंतो विषयसंगः, तदिदमायातं—यदाह कश्चित्सर्वाभि—रपि नैकापि नाखिलैः ॥ एवं तौ द्वावपि द्विष्टौ । कष्टः स्त्रीपुंससंगमः ॥ १ ॥

इति विचार्य प्रतिबुद्धा बहवः प्राणिन इति. तदनेन सोदर्यां गमनरूपः स्वदोषो न प्रकाशितः, यस्तु स्वदोषं प्रतिपद्यते तद्गुणं दृष्टांतेनाह—

**पडिवज्जिऊण दोसे । नियए सम्मं च पायपडियाए ॥ तो किर मिगावईए । उप्पन्नं केवलं नाणं ॥ ३४ ॥**

व्याख्या—प्रतिपद्य दोषान् निजकानात्मीयान् सम्यक्क्रियाकरणशुद्ध्या, चशब्दादपुनःकरणाभ्युपगमेन पादयोः पतिता पादपतिता तस्या गुरोरिति गम्यते, ततः किलेति परोक्षाप्तवादसूचके, मृगावत्या उत्पन्नं केवलज्ञानमिति संक्षेपार्थः, विस्तारार्थः कथानकगम्यः-॥ ३४ ॥ तच्चेदं—कौशांब्यां वीरस्य भगवतः समवसरणे सविमानचंद्रादित्यावतरणेन कालमानमजानती गतास्वार्यचंदनाद्यास्वार्यासु स्थिता मृगावती साध्वी, गतौ चंद्रादित्यौ, उल्लसितं तिमिरं, ससंभ्रमा गता सा स्वाश्रयं, दृष्टा कृतावश्यका संस्तारकगता तयार्यचंदना. आलोचयंती च सार्यचंदनयानवस्थादोषपरिहारार्थमुपालब्धा, नोचितमिदं भवादृशीनां प्रधानकुलजातानामिति. ततो गुणवत्संतापिकाहमिति पश्चात्तापाद्दह्यमानमानसा विगलदश्रुसलिला भगवति ! क्षमस्व मम मंदभाग्यायाः प्रमादस्खलितमिदमेकं, न पुनरीदृशं करिष्यामीति वदंती पतिता तच्चरणयोर्मृगावती, ततः प्रवृद्धस्तस्याः शुक्लध्यानानलः, दग्धं कर्मेंधनं, उत्पन्नं केवलं ज्ञानं, अत्रांतरे प्रसुप्तार्यचंदना, विषधरे च तद्देशेन गच्छति उत्पाट्य मृगावत्याः संस्तारके निहितो बहिःस्थितस्तद्बाहुः. ततो विबुद्धयार्यचंदनया तस्यै मिथ्यादुष्कृतं दत्तं यन्निद्राप्रमादेन मया न प्रेषिता त्वमिति. किं चायं मे करस्त्वया चालितः ? इत्युक्ते साह अहिरेति, इतरा प्राह कथं जानीषे ? सा प्राहातिशयेन.

चंदना प्राह किमुत्पन्नं ते केवलं ? सा प्राह भवतीनां प्रसादात्. तदाकर्ण्यार्यचंदना गता पश्चात्ताप पतिता तत्पादयोरिति. तदेवमियमुपालभ्यमानापि सा न कषायिता. यश्चान्योऽप्येवं कुर्यात्तद्गुणमाह—

किं सक्का वोत्तुं जे। सरागधम्मंमि कोइ अकसाओ॥ जो पुण धरेज धणियं। दुव्वयणुज्जालिए स मुणी ॥३५॥

व्याख्या—'किं सक्कत्ति' किं शक्यं, अनुस्वारलोपदीर्घत्वे प्राकृतलक्षणात्, वक्तुं, जेशब्दो वाक्यालंकारार्थः. सह रागेण वर्तत इति सरागः, द्वेषोपलक्षण चैतत्, स चासौ धर्मश्च, तस्मिन् सरागधर्मेऽयतने कश्चिदविद्यमानक्रो धादिकषायोऽकषायोऽस्तीत्येतत् किं वक्तुं शक्यं ? नैवेत्यभिप्रायः. यः पुनर्महात्मा धारयेदनुदयोदयप्राप्तविफलीकरणेन निगृह्णीयात्, धणियमत्यर्थं दुर्वचनोज्ज्वालितान् कर्णकटुकवाग्गिंधनोद्दीपितान् कषायान् स, मन्यते यथावस्थितं मोक्षकारणमिति मुनिः, पुनःशब्दस्य विशेषणार्थत्वात्सरागधर्मेऽपि वर्तमानो मुनिर्मुनिरेव विवेककलितत्वादिति ॥ ३५ ॥ किमर्थमेते निगृह्यंते इत्याशंक्येहामीषामपायकारितामाह—

कडुयकसायतरूणं। पुप्फं च फलं च दोवि विरसाइं॥ पुप्फेण झायइ कुविओ। फलेण पावं समायरइ ॥३६॥

व्याख्या—कटुकाश्च ते संयमसुखभंगहेतुत्वात्कषायाश्च कटुकषायाः, त एव तरवस्तदुत्तरप्रकृतिशाखादिमत्त्वात्, तेषां पुष्पं च फलं च द्वे अपि विरसे कटुके, निंबादीनां लौकोक्त्या कटुकानामपि पाककाले माधुर्यमुपलभ्यते, न पुनरेतेषामिति भावः. किमेषां पुष्पं ? किं वा फलं ? इत्याशंक्य क्रोधमधिकृत्य दर्शयति–पुष्पेण

हेतुभूतेन ध्यायति विरूपकं चिंतयति, कोपतः क्रुद्धः फलेन पापं ताडनमारणादिकं समाचरति. उत्तिष्ठति तदनेनैतेषामुदयः पुष्पं, तत्पूर्विका प्रवृत्तिः फलमित्युक्तं भवति ॥ ३६ ॥ तस्मात्तेषां तद्धेतूनां च शब्दादीनां त्यागः कार्यः, स च विवेकेनैव क्रियते, नान्येनेति दृष्टांतेनाह—

संतेऽवि कोऽवि उज्झइ। कोवि असंतेऽवि अहिलसइ भोए॥ चयइ परपच्चएणऽवि। पभवो दठ्ठूण जह जंबुं ॥

व्याख्या—संतोऽपि विद्यमानानपि कश्चिद्विवेकी जंबूवदुज्झति त्यजति भोगानिति संबंधः, कश्चिदविवेकी प्रभववदसतोऽपि अभिलषति वांछति भोगान्, तथा कश्चिदिति वर्तते, त्यजति परप्रत्ययेनापि, किंवदित्याह—प्रभवो दृष्ट्वा यथा जंबूमिति समासार्थः. व्यासार्थः कथानकगम्यः, तच्चेदं–राजगृहे ऋषभदत्तेभ्यसुतो जंबूनामा संजातचरणपरिणामो दीक्षानुज्ञार्थं पितरौ पप्रच्छ. तावपत्यस्नेहमोहितौ यदा प्रव्रज्यादुष्करतादिवर्णनेन प्रत्युत्तरदानसमर्थत्वान्न संतिष्टसे त्वं, तदपि त्वमस्मत्संतुष्टये विवाहं कुरु? यथावां वधू मुखं पश्यावः, पश्चात्त्वं यथेच्छं कुर्या इति याचितवंतौ. ततस्तदनुरोधेन स स्थितः. यद्यस्माभिर्विज्ञप्तोऽप्यसौ न स्थास्यति तदा तमेवानुयास्याम इति विहितप्रतिज्ञा अष्टौ कन्यकाः स परिणीतवान्.

वासभुवने तत्प्रतिबोधनप्रवृत्ते च तस्मिन् बहुचौरपरिकरः प्रभवाभिधानः पल्लीपतिरवस्वापिनीतालोद्घाटिनीविद्याप्रभावेन तद्गृहं मुष्णन् जंबूनामचरणपरिणामावर्जितया देवतया स्तंभितस्तथा स्थितश्च. अहमनेन महात्मना स्तंभित इति संचिंत्य जंबूनाम्नः स्वपत्नीरुत्तरप्रत्युत्तरिकया बोधयतो वचनमाकर्णयंस्तंप्रत्याह भो महात्मन्

निर्धूत्तोऽहमितो दुर्विलसितात्, गृहाणेमे मद्विद्ये, देहि मे स्तंभिनीमात्मविद्यामिति. जंबूनामाह भद्र न मया स्तंभितस्त्वं, अपि तु मच्चरणपरिणामावर्जितया देवतया, अलं च भवतो भववर्धनविद्यादानेन, गृहाणेमां समस्तार्थसाधनीं सर्वज्ञोपज्ञां ज्ञानदर्शनचारित्रविद्यामिति प्रस्ताव्य कृता तेन विस्तरतो धर्मदेशना. ततोऽहो महानुभावस्यास्य विवेकिता परोपकारिता च! मम पुनरहो पापिष्ठता मूढता च! अयं हि महात्मा स्वाधीनामपि सदोपत्वाच्चपलस्वभावां यां श्रियं कुलटां त्यजति, लग्नोऽहं तामेवाभिलषामि, न च प्राप्नोमि, एवं च विगोपितः, धिग्मामधमाधममिति जातवैराग्यः सपरिकरः प्रभवः प्राह भो महात्मन्नादिश यन्मया कर्तव्यं, जंबूनामाह–यदहं करोमि तत्कुरु ? ततो नायमप्रेक्षापूर्वकारीति युक्तमेवैतदनुगमनमिति संचिंत्येतरः प्राह, यदाज्ञापयति भवान्. ततो जननीजनकवधूसपरिकरः प्रभवपरिवृतो भव्यसत्त्वानां भवपराङ्मुखां बुद्धिमुत्पादयन् सुधर्मस्वामिपादमूले निष्क्रांतो जंबूनामेति ॥ ३७ ॥ ननु कथमसौ क्रूरकर्मा प्रभवः प्रतिबुद्ध इत्युच्यते धर्ममाहात्म्यात्, तथा चाह–

दीसंति परमघोरावि । पवरधम्मप्पभावपडिबुद्धा ॥ जह सो चिलाइपुत्तो । पडिबुद्धो सुसुंमाणाए ॥ ३८ ॥

व्याख्या—दृश्यंते परमघोरा अपि प्रधानरौद्रा अपि प्राणिन इति गम्यते, प्रवरधर्मप्रभावप्रतिबुद्धा इति. अर्हद्दर्शितोत्तमधर्ममाहात्म्याद्व्यपगतमिथ्यात्वनिद्रा उपलभ्यंत इत्यर्थः. किंवदित्याह–यथासौ चिलातीपुत्रः प्रतिबुद्धः सुसुमाज्ञाते सुसुमोदाहरणमिति समासार्थः. व्यासार्थः कथानकगम्यस्तच्चेदं–राजगृहे धनश्रेष्ठिना स्वदासीदारकश्चिलातीपुत्रः स्वदुहितुः सुसुमायाः क्रीडासहायकोऽकारि. क्रमात् कृतदुष्टचेष्टितोऽसौ निःसारितो गेहादगतः

पल्लिं. अतिसाहसिकत्वाच्च जातस्तदधिपतिः. अन्यदा युष्माकं धनं मम च सुसुमेति प्रतिज्ञया बहुतस्करान् मेल यित्वा पतितोऽसौ धनगेहे. विलुप्तं तत्सदनं, गृहीता सुसुमा, निवृत्तश्च पल्लीं प्रति, पश्चाल्लग्नस्तस्य सपुत्रपरिकरो धनः, ततो निर्वोढुमशक्नुवता मेयमन्यस्यापि भवत्विति संचिंत्य छिन्नमसिना सुसुमायाः शिरस्तेन, गतप्रयोजना गतास्तज्जनकादयः, तेनापि गच्छता दृष्टः कायोत्सर्गस्थो मुनिरुक्तश्च खड्गमुद्गीर्य कथय धर्ममिति. ततः प्रतिभोत्स्यतेऽयमित्यतिशयेन विज्ञाय मुनिनोक्तं उपशमो विवेकः संवर इति कर्तव्य इति शेषः. ततो नायं विप्रतारयति, मम च कृतबहुपापस्य नान्यथा शुद्धिः, करोम्येतद्वचनमिति संचिंत्य गतस्तदासन्नभूमिभागं. चिंतयितुमारब्धं किमनेनोक्तमिति. आः ज्ञातं ! उपशमः क्रोधादीनां कर्तव्यः, कृतोऽसौ मया यावज्जीवं तत्त्यागात्. विवेकस्त्यागो वा स्वस्त्यकार्य इति त्यक्तं सह करवालेन करस्थं मस्तकं. संवरो दुष्टयोगानां संवरणं कर्तव्यमिति निरुद्धकायवाक्प्रसरो मनसीदमेव पदत्रयं चिंतयन् स्थितः कायोत्सर्गेण. शोणितगंधेन च खादितुमारब्धास्तच्छरीरकं वज्रतुंडाः पिपीलिकाः, कृतः समंततश्चालनीप्रायकायः, तथापि त्यक्तोऽयं मया काय इति धिया न चलितो ध्यानात्. दग्धं बहुपापं, प्राप्तोऽर्धतृतीयरात्रैर्देवलोकं चिलातीपुत्र इति । ३८ ॥ यथा चानेन प्राणप्रहाणेऽपि सत्त्वावष्टंभात्प्रतिज्ञा निर्वाहिता, नहवोऽपि विवेकिनोऽन्येऽपि तथाध्यवस्यंतीति दृष्टांतेनाह—

पुप्फियफलिए तह पिउ–घरंमि तण्हाछुहासमणुबद्धा ॥ ढंढेण तहा विसोढा। विसढा जह सफलया जाया ॥

व्याख्या—पुष्पितं खाद्यपेयकारणभूतद्रव्यनिचययुक्तं, फलितं खादनपानप्रवणं, एवं च पुष्पितमपि कूप-

णगृहं फलितं न भवति, फलिततमपि च विङ्गभवनं पुष्पितं न भवति. उत्पन्नभक्षित्वात्, तदर्थमुभयग्रहणं. ततश्च पुष्पितं च तत्फलितं चेति समासस्तस्मिन्. तथेति प्रसिद्धिसंग्रहार्थं. पितृगृहे कृष्णभवने इत्यर्थः, तृष्णा पिपासा क्षुधा बुभुक्षा समनुबद्धा निरंतरा ढंढणेन महात्मना, तथा तेनालाभपरीषहातिसहनप्रकारेण विषोढा तितिक्षिता यथा सफला जातेति संबंधः किं भूतेत्याह विशठा भावसारमकपटेति संक्षेपार्थः. विस्तरार्थः कथानकगम्यस्तच्चेदं

पूर्वं राजनियुक्ताधिकारगर्ववशतो बुभुक्षितकर्षुकैः स्वक्षेत्रे हलचंभादापनद्वारेण बद्धांतरायकर्मणो ढंढणनाम्नो विष्णुतनयस्य अरिष्टनेमिपार्श्वे प्रव्रजितस्य विहरत उदीर्णं तत्कर्म. तत्प्रभावाच्च द्वारवत्यामपि प्रसिद्धो विष्णुपुत्रतया ख्यातो भगवच्छिष्यभावेन, तथापि न लभते किंचित्, उपहंति च शेषसाधुलब्धीः, ततो न मया परलब्धिर्भोक्तव्येति गृहीतो भगवदनुज्ञातेन तेनाभिग्रहः. गतश्च तमनुपालयतोऽविह्वलचित्तस्य तस्य बहुकालः. अन्यदा पृष्टः कृष्णेन भगवान्, कः साधूनां मध्ये दुष्करकारकः ? भगवानाह सर्वेऽपि, विशेषतो ढंढणमुनिः. विष्णुराह कथं ? ततः कथितो भगवता तदभिग्रहः, तुष्टो माधवः, दृष्टश्च तेन प्रविशता नगरीं हट्टमार्गे ढंढणमुनिः, करिवरादवतीर्य वंदितश्च सविनयं. तच्चावलोक्य श्रेष्ठिना हरेरपि मान्योऽयमिति प्रतिलंभितः स्वगृहे प्रचुरमोदकैः गतो भगवत्समीपं, पृष्टो भगवान्, किं क्षीणं मे लाभबंधकं कर्मेति ? भगवतोक्तं न, स प्राह तर्हि कुतो लाभः ? भगवानाह कृष्णोपाधेरिति, ततो विशुद्धाध्यवसायस्य परलब्धिरियमिति विधिना परिष्ठापयतः शुक्लध्यानानलदग्धघातिकर्मेंधनस्योत्पन्नं केवलज्ञानमिति. तदेवमयं भगवानाहारेऽप्रतिबद्धस्तथा च स्वार्थसाधको जातः. अत

एव सर्वमाधूनामाहारादिप्रतिबंधप्रत्यनधिकारितामुपदिशन्नाह—

आहारेसु सुहेसु अ । रम्मावसहेसु काणणेसु च ॥ साहूण नाहिगारो । अहिगारो धम्मकज्जेसु ॥ ४० ॥

व्याख्या—आहारेषु शुभेषु विशिष्टरसयुक्तेषु, चशब्दादुपकरणेषु वस्त्रपात्रादिषु, शुभेष्विति प्रत्येकमभिसंबध्यते, रम्यावसथेषु कमनीयोपाश्रयेषु, काननेषु विचित्रोद्यानेषु, चशब्दः समुच्चये, साधूनां नाधिकारस्तदासक्तिप्रतीति गम्यते. तर्हि काधिकार इत्याह—अधिकारो धर्मकार्येषु तपोऽनुष्ठानादिषु, तद्धनत्वात्तेषां ॥ ४० ॥

कथमेतद्गम्यते इत्याह—

साहू कंतारमहा—भएसु अवि जणवएवि मुइअम्मि ॥ अवि ते सरीरपीडं । सहंति न लह(यं)ति य विरुद्धं ॥

व्याख्या—साधवः कांतारमहाभययोरपि, कांतारेऽटव्यां महाभयेऽपि राजविड्वरादौ वर्तमाना न लांति न गृह्णंति, चशब्दाद् गृहीतमपि कथंचिन्न परिभुंजते विरुद्धमनेषणीयं भक्तोपध्यादिकमिति संबंधः. क इवेत्याह—जनपद इव, मुदिते रुद्धिस्तिमिते निर्भये वर्तमाना अपि, संभाव्यते एतत्ते भगवंतः शरीरपीडां कायबाधां सहंते तितिक्षंति, अतो निश्चीयते न तेषामाहारादिषु प्रतिबंधोऽपि तु धर्मकार्येष्वेव. शरीरपीडाग्रहणं च मानसपीडासद्भावे यतनया गृह्णतामपि भगवदाज्ञाकारित्वान्न तेषु प्रतिबंध इति ज्ञापनार्थमिति. ॥ ४१ ॥ तदनेनापत्स्वपि दृढधर्मतोक्ता, सा च यैर्भगवद्भिरनुष्ठिता तद्द्वारेणाह—

जंतेहिं पीलियावि हु । खंदगसीसा न चेव परिकुविया ॥ विइयपरमत्थसारा । खमंति जे पंडिआ हुंति ॥४२॥

व्याख्या—यंत्रैः पीडिता अपि, हुः पूरणार्थे, स्कंदकशिष्याः स्कंदकाचार्यविनेयाः, न चेवत्ति नैव परिकुपिताः क्रोधं न गताः, चशब्दादाविर्भूतकरुणाश्च जाता उपसर्गकारिणीति गम्यते. एवमन्येऽपि विदितपरमार्थसारा ज्ञाततत्वगर्भा ये पण्डिता भवंति, ते क्षमंते सहंते, प्राणात्ययेऽपि न मार्गाचलतीति समासार्थः ॥४२॥ व्यासार्थः कथानकगम्यः, तच्चेदं-श्रावस्त्यां जितशत्रुतनयस्य स्कंदकस्य भगिनी पुरंदयशाः कुंभकारकटनगरवासिना दंडकिराजेन परिणीता. अन्यदा कस्मिंश्चित्कार्ये प्रहितो दंडकिना पालको नाम दूतो जितशत्रुसकाशं. स च धर्मविचारे नास्तिकमतं प्रतिष्ठापयन्नर्हदागमावदातबुद्धिना निर्जितः स्कंदककुमारेण. तेन जातक्रोधोऽसौ गतः स्वस्थानं. स्कंदकोऽपि जातवैराग्यो मुनिसुव्रतसमीपे पंचपुरुषशतपरिवृतो निष्क्रांतः. भगवतापि गृहीतसमयसारः कृतस्तेषां स एवाचार्यः. अथान्यदा तेन पृष्टो मुनिसुव्रतस्वामी भगिन्यादिप्रतिबोधनार्थं यामि कुंभकारकटमिति. भगवानाह प्राणांतिको भवतां तत्रोपसर्गः, स प्राहाराधका न वेति? भगवतोक्तं भवंतं मुक्त्वा. ततो यद्येते मत्साहाय्येनाराधयिष्यंति तदा किं मया न लब्धमित्यभिधाय गतः. तदागमनमाकर्ण्य पालकेन साधुजनोचितेपूद्यानेषु निधापितानि नानाविधानि शस्त्राणि. प्राप्ते च भगवति निर्गतः सह नागरवृंदेन तद्वंदनार्थं राजा. भगवतापि कृता देशना, आह्लादिता जंतवः. ततः पालको रहसि तं राजानं व्यजिज्ञपदस्माभिर्भवद्भ्यो हितं भाषितव्यं. अयं च पाखंडिकः स्वाचारभग्नः सहस्रयोधिनो राजन्यान् पुरुषान् सहायीकृत्य भवद्राज्यं जिघृक्षति. राजाह कथं

जानीषे ? स प्राह किमेतद्विषयक्षवदपायपरिहारावहितचित्तानां, निरूपयंतु भवंतः स्वयमेव तन्निवासस्थानं.

ततः केनचिद्व्याजेनान्यत्र प्रहितेषु साधुषु तत्र स्थाने दृष्टशस्त्रेण पालकापरापरवचनैश्च चलितचित्तेन राज्ञाभिहितः स एव, त्वमेव कुरु यथोचितमेषां. ततस्तेन पुरुषपीडनयंत्रं निधाय पीडितुमारब्धाः साधवः पापेन. स्कंदकाचार्योऽपि प्रत्येकं दापयत्यालोचनामुत्पादयति च समाधानं. तेऽपि भगवंतः–मुक्तात्मकार्योऽयं नून-मस्मत्कर्मक्षयोद्यतः ॥ परं हा भाव्यपायत्वात् । करुणामयमर्हति ॥ १ ॥ इत्यालंबनतो ध्यानं। सर्वेऽप्यपूर्वे सत्तमं ॥ पीडितास्तेन पापेन । गता मोक्षं विचक्षणाः ॥ २ ॥ क्षुल्लकं चैकं पश्चाज्ज्ञाविनमुद्दिश्यामुं पश्चात्पीडय ? मां च प्रथममित्याचार्येणोक्तः स पापस्तं शीघ्रतरं पीडितवान्. ततः संजातोऽतितीव्रः क्रोधाग्निराचार्यस्य, दग्धं क्षणाद्गुणेंधनं, विस्मृत आत्मा, पालकमुद्दिश्य दुष्टात्मंस्त्वद्वधाय भूयासमिति बद्धनिदानः पीडितोऽनेन संजातोऽग्निकुमारेषु. इतश्च तद्रजोहरणं रुधिरोपदिग्धं हस्तोऽयमिति भ्रान्त्या शकुनेर्नयतः पतितं तद्भगिन्याः प्राङ्गणे. तद् दृष्ट्वा सा राजानमुद्दिश्यप्राह आः पाप ! किमेतत् ? ततो विज्ञाय वृत्तांतं संजातवैराग्या देवतया सपरिकरा नीता श्रीमुनिसुव्रतसमीपे निःक्रान्ता. इतः प्रयुक्तावधिः सोऽग्निकुमारो देव उल्लसितकोपस्तत्रागतः, क्रोधाध्माततया च भस्मीकृतस्तेन सपालकः सकलोऽपि स देशः, सञ्जातं च तद्दंडकारण्यमिति. तदेवमेते स्कंदकशिष्याः प्राणात्ययकारिण्यपि न क्रुद्धाः, ईदृशमेव साधूनां कर्तुं युज्यत इत्याह—

जिणवयणसुइसकण्णा । अवगयसंसारघोरपेयाला ॥ बालाण खमंति जई । जइत्ति किं इत्थ अच्छेरं ॥४३॥

व्याख्या—सकर्णाः सश्रुतिका उच्यते, ते च लोकरूढ्यापि भवंति, अतस्तद्व्यवच्छेदेन जिनवचनस्यार्हद्भाषितस्य कषायविपाकदर्शिनो या श्रुतिः श्रवणं तया सकर्णा इति समासस्त एव. अवगतो ज्ञातो घोरसंसारस्य रौद्रस्य भवस्य 'पेयालोत्ति' देशीयभाषया विचारोऽसारतापर्यालोचनरूपो यैस्ते तथा. घोरशब्दस्य संसारशब्दात्परनिपातः प्राकृतत्वात्. बालानामज्ञानिनां सम्बन्धि दुष्टचेष्टितमिति गम्यते, क्षमन्ते सहन्ते यतयः साधवो यदील्यभ्युपगमे, इत्येवं स्कंदकशिष्यवत्किमत्राश्चर्यं चित्रं, युक्तमेवैतत्तेषामिति ॥ ४३ ॥ तत्र यश्चिन्तयेदेवंविधसत्कर्तव्यानि कुलीना एव कुर्वन्ति, नेतरे, तम्प्रति लघुकर्मतात्र कारणं न कुलमित्याह—

न कुलं एत्थ पहाणं। हरिएसबलस्स किं कुलं आसी ? ॥ आकंपिया तवेणं। सुरावि जं पज्जुवासंति ॥४४॥

व्याख्या—न कुलमुग्रादिकमत्र धर्मविचारे प्रधानं श्रेष्ठं, यतो हरिकेशबलस्य बलनाम्नो मातङ्गस्य किं कुलमासीज्जुगुप्सितत्वात, न किञ्चिदित्यर्थः. यस्य किं संपन्नमित्याह—आकंपिता आवर्जिता हृतहृदयाः कृतास्तपसा विकृष्टेन सुरा अपि देवा अपि, आसतां मनुजाः, यं पर्युपासन्ते, तस्य किं कुलमासीदिति सामान्यार्थः ॥ ४४ ॥ विशेषार्थस्तूदाहरणाद् ज्ञेयः, तच्चेदं-पूर्वभवजातिमदकरणनिबद्धनीचैर्गोत्रकर्मविपाकाल्लब्धनिंद्यजातिर्बलाभिधानो मातङ्गश्रमणको विशिष्टतपोऽनुष्ठाननिरतो वाणारस्यां तिंदुकोद्याने गडीतिंदुकयक्षयतने तस्थौ. स च यक्षस्तद्गुणाक्षिप्तचित्तो विमुक्तशेषव्यापारस्तमुपास्तेस्म. अन्यदा तन्मित्रयक्षोऽन्योद्यानात्समागतस्तिंदुकं प्राह वयस्य ! भूरिकालात्कथं त्व न दृष्टोऽसि ? स प्राहामुं भगवंतं महर्षिं पर्युपासीनस्तिष्ठामि. इतरः प्राह ममापि कानने

मुनयास्तिष्ठन्ति. ततो भक्तिकौतुकाभ्यां प्रेरितौ तौ गतौ तत्र कानने तद्वंदनाय. दृष्टाः कथाश्चिद्कथाप्रवृत्ता मुनयः, ततस्तौ तेभ्यो विरक्तौ जातौ. गाढतरमनुरक्तौ च चिरं तस्मिन्नेव महामुनौ बलाभिधाने. धन्यस्त्वं योऽस्य चरणौ प्रतिदिनं पश्यसीति श्लाघितस्तिंदुकयक्षस्तेन.

अथान्यदा राजदुहिता भद्राभिधाना गृहीतार्चनिका गता तदायतनं, प्रदक्षिणां कुर्वत्या दृष्टोऽसौ मुनिस्तत्रासंस्कृतगात्रो, जुगुप्सया निष्ठ्यूतमनया, जातो यक्षस्य कोपः,दर्शयाम्यस्या भगवत्परिभवफलमिति संचित्याधिष्टितं तेन तच्छरीरं, प्रलपंती नानाविधं परिजनेन नीता पितृसमीपं, अपत्यस्नेहमोहितेन तेन कारिता चिकित्सा, न जातो विशेषः, विषण्णा वैद्याः, ततः प्रकटीभूय यक्षः प्राह, अनया पापया मत्स्वामी मुनिरुपहसितोऽस्ति, यदि तस्यैवेयं जाया जायते तदा मुञ्चामि, नान्यथेति. ततो जीवंतीमिमां द्रक्ष्यामीति सञ्चिन्त्य प्रहिता सा सपरिजना तत्सकाशं राज्ञा. गत्वा च पादपतिता सा प्राह महर्षे ! गृहाण मत्करं करेण, स्वयंवराहं भवतः, मुनिराह भद्रे निवृत्तविषयसंगा मुनयो भवन्ति, अलमेतया कथयेति. ततः केलिप्रियतया प्रविश्य यक्षेण मुनिशरीरे सा परिणीता कृतविडंबना च मुक्ता, स्वप्नमिव तत्सर्वं दृष्ट्वा विच्छाया सा गता पितृसकाशं. ततो नृपेण तदुद्देशेन पृष्टो रुद्रदेवनामा पुरोहितः प्राह, ऋषिभिस्त्यक्ता पत्नी ब्राह्मणाय दीयत इति वेदार्थः. राज्ञापीदमेव प्राप्तकालमिति संचिन्त्य दत्ता तस्मै सा, कृता च तेन यज्ञं यजता यज्ञपत्नी. मुनिरपि मासपारणके प्रविष्टो भिक्षार्थं यज्ञपाटके, अदत्तं द्विजेभ्यो न दीयते तुभ्यं शूद्राधमायेत्युपहसितो भट्टैः. ततो यक्षेण तच्छरीरं प्रविश्य कथमहं यावज्जीवमब्रह्मनिवृत्तोऽहिंसादिव्रतधरश्च

न ब्राह्मणः ? कथं वा भवंतः पशुवधादिपापासक्ता योषिदवाच्यमर्दकाश्च ब्राह्मणाः ? इत्यादिवाक्यैस्तेन तिरस्कृतास्ते द्विजास्तं मुनिं प्रहन्तुं लग्नाः. यक्षेणाप्याहत्य निर्गच्छद्रुधिरोद्गाराः शिथिलसंधयः पातितास्ते भूतले, जातश्च कोलाहलः, तमाकर्ण्य निर्गता भद्रा, दृष्टो मुनिः प्रत्यभिज्ञातश्च. ततो रुद्रदेवादीनुद्दीश्य सा प्राह हे दुर्मतयो यास्यथामुं मुनिं कदर्थयन्तो यूयमंतकसदनं, स एवायं महाप्रभावः सुरपूजितो मुनिरिति. ततस्तच्चरणपतितास्ते भद्रा च प्राहुः, क्षमस्व महामुने! यदपराद्धमज्ञैरिति. मुनिनोक्तं न मुनीनां कोपावकाशः, तत्कारिणं यक्षमेव तोषयतेति. ततस्तोपितस्तैर्यक्षः, प्रतिलाभितो मुनिः, प्रादुर्भूतानि दिव्यानि, किमेतदिति जातकुतूहलः समायातो लोको, विज्ञाय व्यतिकरं राजा च. मुनिदेशनया च विबुद्धा बहवः प्राणिन इति. तस्मान्न कुलं प्रधानं, अपि तु गुणा एव. तद्विरहे तस्याकिंचित्करत्वादिति. किञ्चायमात्मा नटवदपरापररूपैः परावर्तते, ततः कः कुलाभिमानावकाश इत्याह-

देवो नेरयउत्ति य । कीडपयंगुत्ति माणुसो एसो ॥ रूवस्सी य विरूवो । सुहभागी दुक्खभागी अ ॥४५॥
राउत्ति य दमगुत्ति य । एस सपागुत्ति एस वेयविऊ ॥ सामा दासो पुज्जो । खलोत्ति अधणो धणवइत्ति ॥४६॥
नवि इत्थ कोऽवि नियमो । सकम्मविणिविट्ठसरिस कयचिट्ठो ॥ अन्नुन्नरूववेसो । नडुव्व परियत्तए जीवो ॥४७॥

व्याख्या—देवो विबुधो, नारकः प्रतीत एव, इतिशब्दाः सर्वे उपदर्शनार्थाः. चशब्दाः समुच्चयार्थाः, स्वगतानेकभेदसूचका वा. तथा कीटः कृम्यादिः, पतङ्गः शलभः, तिर्यगुपलक्षणं चैतत्. मानुषः पुमान्, एष जीवः परा-

वर्तेत इति सर्वत्र क्रिया. रूवस्सित्ति कमनीयशरीरः, विरूपो विशोभः. सुखं सातं भजते, तच्छीलश्चेति सुखभोगी, एवं दुःखभागी. तथा राजा पृथिवीपतिः. द्रमको निःस्वः, एष जीवः श्वपाकश्चाण्डालः, तथा एष एव वेदविदृग्यजुःसामादिवेदानां वेत्ता प्रधानब्राह्मण इत्यर्थः. असकृदेषशब्दग्रहणं पर्यायनिवृत्तावपि जीवद्रव्यस्यानुवृत्तिज्ञापनार्थं, एष एवैको नानारूपेष्वेवं परावर्तते, न सर्वथान्यो भवतीत्यर्थः. तथा स्वामी स्वपोष्यापेक्षया नायको, दासो द्व्यक्षरकः, पूज्योऽभ्यर्चनीय उपाध्यायादिः, खलो दुर्जनः, अधनो निर्द्रव्यः, धनपतिरीश्वरः किञ्चनापि न संभाव्यते, नात्र कश्चिन्नियमोऽवश्यंभावो यथापरे मन्यन्ते पुरुषः पुरुषत्वमश्नुते, पशवः पशुत्वमित्यादिरूपः, प्रमाणबाधितत्वात्कर्मवैचित्र्येण भववैचित्र्योपपत्तेः. किं तर्हि? स्वकर्मविनिविष्टसदृशकृतचेष्टः परावर्तते जीव इति सम्बन्धः. तत्र क्रियत इति कर्म ज्ञानावरणादि, स्वस्यात्मनः कर्म स्वकर्म, तस्य विनिविष्टं विनिवेशः, प्रकृतिस्थित्यनुभावप्रदेशात्मकं रचनमित्यर्थः, तस्य सदृशी तदनुरूपा कृता निर्वर्तिता चेष्टा देवादिपर्यायाध्यासरूपो व्यापारो येन स तथेति समासः. दृष्टान्तमाह—अन्यान्यरूपो नानाकारो वेषो नेपथ्यवर्णकविच्छित्त्यादिलक्षणो यस्य सोऽन्यान्यरूपवेषः, कोऽसौ? नटः, स इव परावर्तते परिभ्रमति जीव आत्मेति. ॥ ४५ ॥ ४६ ॥ ४७ ॥ तदिदं संसारेऽनवस्थितत्वमालोक्य विवेकिनो मोक्षकांक्षैकताना एव भवंति, न धनादिलिप्सव इति दृष्टांतमाह —

कोडीसएहिं धणसं—चयस्स गुणसुभरियाए कन्नाए ॥ नवि लुद्धो वयररिसी। अलोभया एस साहूणं ॥४८॥

व्याख्या—कोटिशतैः सह या कन्या तस्यामपि न लुब्ध इति संबंधः. कस्य कोटिशतैः ? धनसंचयस्य द्रव्य-

सञ्जातस्य सम्बन्धिनां दीनाररत्नादीनामिति गम्यते. गुणैरूपादिभिः सुभृता सु सुष्ठु परिपूर्णेति समासः. कासौ? कन्या अपरिणीता बाला, तस्यामपि न लुब्धो न लोभ गतः. अपिशब्दस्य व्यवहितः प्रयोगः, असौ वैरर्षिः. शिष्यंप्रत्याह—अलोभतैपाऽनंतरोक्ता साधूनां, सर्वयतिभिरेवं निर्लोभैर्भाव्यमिति संक्षेपार्थः. ॥ ४८ ॥ प्रपञ्चार्थः कथानकाद् ज्ञेयः, तच्चेदं—पाटलिपुत्रे विद्याद्यतिसययुतो युगप्रधानो भगवानाचार्यो वैरर्षिः समवसृतः, तद्वंदनार्थं निर्गतः सनागरो राजा. भगवतापि विद्याबलतो विहितविशोभरूपेण प्रारब्धा धर्मदेशना. ततस्तदाक्षिप्तचित्ता लोकाः परस्परमूचुर्यत भगवतो न गुणानुरूपं रूपं. उपसंहृता देशना, गतं तद्दिनं. इतश्च तत्रैव नगरे धनसार्थवाहशालायां पूर्वस्थिता आर्यिका भगवद्गुणवर्णनं कृतवत्यः, तदाकर्ण्य धनदुहिता अतिमुग्धतया भगवति जातानुरागा पितरप्रत्याह, यदि मां वैरस्वामिनं विहायान्यः परिणेष्यति ततस्त्यक्ष्यामी प्राणान्. ततोऽपत्यस्नेहवशाद्विज्ञाय तन्निर्बन्धं द्वितीये दिने गृहीत्वा अनेकरत्नकोटीशतैः सह तां कृतालङ्कारामुपहसितत्रिदशवधूलावण्यां कन्यां गतो भगवत्समीपं सार्थवाहः. दृष्टो भगवान् वैरूप्यदर्शनजातवैसरूयजनाह्लादातिरेकसंपत्तये मार्गावतारणार्थं विद्यातिशयान्निर्वर्तितत्रिभुवनातिशायिरूपः कनककमलोपविष्टो धर्ममाचक्षाणस्तेन. ततः सविनयं प्रणम्य विरचितकरकुड्मलोऽमावाह भगवन्नस्या मम जीविताभ्यधिकायाः कन्यकाया रत्नराशिभिः सहिताया ग्रहणेन कुरु मेऽनुग्रहमिति. भगवानाह भद्र! न खल्विदमतिमुग्धबुद्धेरपि मनसि संतिष्ठते, यदुत सिद्धिवधूसंबंधबद्धाध्यवसाया अनिधनमुखाभिलाषिणः साधवोऽशुचिमूत्रान्त्रक्लेशपूर्णासु युवतिषु क्षणविनश्वरे बंधने ग्रहणबुद्धिं विधास्यंति.

ततोऽलमनया निर्विवेकजनोचितया कथया. यद्यस्या मय्यनुरागस्ततः करोतु स्वार्थसाधनेन मच्चित्ताह्लादमिति. कन्याह भगवद्वचनकरणेनापि कृतार्थाहं. ततो मुक्ता जनकेन प्रव्राजिता सा भगवता. ततोऽयमेव धर्मो यत्रैवंविधप्रभावाणामपीदृशी निर्लोभतेति संचिंत्य प्रतिबुद्धा भूयांसः सत्वा इति. न चैतदाश्चर्यं, एवंविधा एव साधवो भवंतीत्याह—

अंतेउरपुरवलवा—हणेहिं वरसिरिघरेहिं मुणिवसहा ॥ कामेहिं बहुविहेहि य । छंदिज्जंतावि नेच्छंति ॥४९॥

व्याख्या—अंतःपुरादिभिः करणभूतैर्मुनिवृषभाः सुसाधवश्छंद्यमाना निमंत्र्यमाणा अपि नेच्छंति नाभिलषंति तानीति गम्यते इति संबंधः. तत्रांतःपुराणि विशिष्टयोषित्संघाताः, पुराणि नगराणि, बलानि चतुरंगाणि, वाहनानि प्रवरहस्त्यादीनि, बलग्रहणेनैव सिद्धे पृथगुपादानमेषां प्राधान्यख्यापनार्थं. अंतःपुराणि च पुराणि चेति द्वंद्वः, तैस्तथा वरश्रीगृहैः प्रधानकोशैः. काम्यंते प्रार्थ्यन्ते इति कामाः शब्दादयस्तैश्च, चशब्दस्येह संबंधः, बहुविधैर्नानारूपैश्चित्ताक्षेपहेतुभिरंतःपुरादिभिरिति, इदं सर्वेषां विशेषणमिति ॥ ४९ ॥ किमिति नेच्छंतीत्याशंक्य परिग्रहस्यापायहेतुतामाह—

छेओ भेओ वसणं । आयासकिलेसभयविवागो अ ॥ मरणं धम्मब्भंसो । अरई अत्थोउ सव्वाइं ॥ ५० ॥

व्याख्या—छेदादीनि स्वपरयोरर्थात्सर्वाणि भवन्तीति क्रिया. तत्र च्छेदः कर्णादीनां कर्तनं, भेदः क्रकचादिना पाटनं, स्वजनादिभिः मह चित्तविश्लेषो वा. व्यसनं तस्करादिभिर्ग्रहणमापदित्यर्थः. आयासस्तदुपार्जनार्थं स्वयं

कृतः शरीरव्यायामः, क्लेशः परकृता विबाधा, भयं त्रासः, विवादः कलहः, चशब्दः समुच्चये, मरणं प्राणत्यागः, धर्मभ्रंशः श्रुतचारित्रलक्षणधर्माच्च्यवनं, सदाचारविलोपो वा. अरतिश्चित्तोद्वेगः, एतानि सर्वाण्यपि, किं? अर्थ्यंते विवेकविकलैर्याच्यते इत्यर्थो हिरण्यादिस्तस्माद्भवंतीति. ॥ ५० ॥ किंच प्रस्तुतव्रतविरोधी चायमित्याह—

दोससयमूलजालं। पुव्वरिसिविवज्जियं जई वंतं ॥ अत्थं वहसि अणत्थं। कीस अणत्थं तवं चरसि? ॥५१॥

व्याख्या—अर्थं यदि वहसि तर्हि किं तपश्चरसीति क्रिया. किंभूतमर्थं ? दुष्यते एभिरिति दोषा रागादयः प्राणिवधादयो वा, तेषां शतानि, तेषां मूलं कारणं चासौ जालं च मत्स्यबंधजालवद्बंधहेतुत्वाद्दोषशतमूलजालं. यदिवा दोषशतानि तरोरिव मूलजालं यस्य स तथा तं. अत एव पूर्वर्षिभिर्वैरस्वाम्यादिभिर्विशेषेण वर्जितः परिहृतः पूर्वर्षिविवर्जितस्तं. पूर्वर्षिग्रहणं चेदानींतनाः कर्मकालादिदोषादर्थवहनप्रवणा भूयांसो दृश्यमाना अपि विवेकिना नालंबनीकर्तव्या इति ज्ञापनार्थं. यदि वांतं प्रव्रज्यांगीकरणेन त्यक्तमर्थं हिरण्यादिकं वहसि धारयसि, किंभूतं ? अनर्थं नरकापाताद्यनर्थहेतुत्वात, ततो हे दुर्मते किमित्यनर्थं निःप्रयोजन तपोऽनशनादिरूपं चरस्यनुतिष्ठसि ? नेदं पूर्वापर्येण घटत इत्यभिप्रायः ॥ ५१ ॥ किंच—

वहबंधमारणसेह—णाओ काओ परिग्गहे नत्थि ? ॥ तं जइ परिग्गहुच्चिय। जइधम्मो नणु पवंचो ॥५२॥

व्याख्या—वधो यष्ट्यादिभिस्ताडनं, बंधनं रज्ज्वादिभिः, मारणं प्राणच्यावनं, सेधना नानाकारा कदर्थना.

वधश्च बंधश्चेत्यादिद्वंद्वः. ताः काः कथयत्वमेव याः परिग्रहे द्विपदादिसंग्रहे न संति न विद्यंते, सर्वा अपि संतीति भावः. तथ्येवमिव स्थिते परिग्रहः क्रियते प्रतिपन्नयतिधर्मैरपीति गम्यते, चियशब्दस्त्वेवकारार्थः, स च अवधारणार्थे, उपरिष्टात्संभाव्यते यतिधर्मः साधुधर्मस्ततः परिग्रहकरणात्, ननु निश्चितं प्रपंच एव विडंबनैव. यदि वा यतिधर्मस्ततो न परिग्रहमन्निधानेन निवर्तितत्वात्, तदभाव एवाहमेवं वितर्कयामीति तुशब्दार्थः. किं तर्हि? प्रपंच एव, वेषपरावर्तेन लोकमोषणमित्यर्थः ॥ ५२ ॥ तदनेन बाह्यग्रंथत्यागं प्रतिपाद्याधुनोपलक्षणत्वेन कुलाभिमानरूपांतरग्रंथत्यागार्थमिदमाह—

किं आसि नंदिसेणस्स । कुलं ? जं हरिकुलस्स विउलस्स ॥ आसी पियामहो स—च्चरिएण वसुदेवनामुत्ति ॥
विजाहरीहिं सहरिसं । नरिंददुहियाहिं अहमहंतीहिं ॥ जं पत्थिज्जइ तइया । वसुदेवो तं तवस्स फलं ॥५४॥

व्याख्या—उक्तमेवेदं प्राग्मातंगवलर्षिकथानके, किं पुनरुच्यते इति चेन्न, उपदेशेषु पुनरुक्तताया अदोषत्वात्, उक्तं च—सज्झायज्झाणतवओ—सहेसु उवएसथुयपयाणेसु ॥ संतगुणकित्तणेसु य । न हुंति पुणरुत्तदोसाओ ॥ १ ॥ अथवा तत्रेहलोके कुलस्याप्राधान्यमुक्तं गुणानां प्राज्यताद्वारेण. इह तु परलोकमधिकृत्येति न दोषः. एवमुत्तरत्राप्यपौनरुक्त्यं सुधिया योज्यमिति. तत्र तावत्सुखबोधार्थं कथानकं कथ्यते, पश्चाद्गाथार्थः कथयिष्यते.

नंदिग्रामे चक्रधरधिग्वर्णदारकस्य मृतौ मातापितरौ, स्थितोऽसो मातुलसमीपे. किमत्र कर्म मुधिकया करोषि?

किं वा न दारसंग्रहं द्रव्योपार्जनद्वारेणेति विप्रतारितोऽसौ लोकैः. ततो निर्गंतुकामे स्वसुतां ते दास्यामीति वदता विधृतो मातुलेन. यौवनस्था चोपस्थापिता सा तेन तस्यार्थं. तया च तं निरीक्ष्य तद्दौर्भाग्यवैरूप्याभ्यां जातवैमुख्यया पितरंप्रत्युक्तं यदि मामस्मै दास्यसि ततोऽहं मरिष्ये. ततो द्वितीयां दास्यामि, इयं त्वां नेच्छतीत्युक्त्वा धृतस्तेन निर्गच्छन्नसौ. ततश्चैवं सप्तभिस्तत्सुताभिर्मरणाभ्युपगमेनानिष्टस्य जातमस्य वैराग्यं, चिंतितं च तेन स्व पापतरुफलमिदं, तत् किं दारसंग्रहेण ? करोमि तदुन्मूलने यत्नमिति संचिंत्याटता तेन दृष्टः कश्चिदाचार्यः, धर्मं श्रुत्वा स नंदिषेणः प्रव्रजितस्तत्सकाशे. अभ्यस्तक्रियाकलापो गृहीतागमश्च गृहीताभिग्रहः पंचशतिकगच्छस्य वैयावृत्त्यं कर्तुमारब्धः. कुर्वतश्च सोत्साहं कृतकृत्यमात्मानं भावयतोऽस्य गतो बहुः कालः. अन्यदा स्वःसभायां धन्यः कृतार्थो नंदिषेणो यो देवैरपि न धर्माच्च्याल्यत इति श्लाघितः शक्रेण. तदश्रद्धानोऽवतीर्णः कश्चिद्देवः स्थित्वा साधूपाश्रयद्वारे स प्राह, अटव्यां ग्लानतपस्वी तिष्ठतीति. तदाकर्ण्य षष्टपारणके गृहीतप्रथमकवलो नंदिषेणस्तं परित्यज्य परिपृच्छ्य तं प्रदेशमवस्थां च प्रविष्टः पातकौषधाद्यर्थं गोचरे. देवविहितानेषणामदीनमनस्को लाभांतरायक्षयोपशमस्योत्कटतया निर्जित्य गृहीत्वैषणीयं पानकादिकं गतस्तं प्रदेशं. दर्शितो देवेनाशुचिवीभत्सो धिग्मुंडस्योदरभरणपर इत्यादिकर्कशवचनैरारट्यमानो ग्लानसाधुः.

ततो यत मयाऽधन्येनास्य महामुनेर्मनःखेदः संपादितः, कथं चायं प्रगुणो भविष्यतीति चिंतयता तेन क्षालितस्तद्देहः. धीरो भव ? करोमि निरुजं भवंतं, यावद् व्रजामि आगच्छोपाश्रयमिति समाश्वासितो मधुरवचनैर्नंदिषेणेन

स प्राह, आः पाप ! न जानीषे मेऽवस्थां, न शक्नोम्यहं पदमपि गंतुं. ततस्तं समारोप्य स्वपृष्टदेशे नंदिषेणो गंतुं प्रवृत्तः. देवोऽपि मुंचति तत्पृष्टे दुर्गंध्यशुच्यादीनि, धिग् दुरात्मन् ! वेगविघातं करोषि ! इत्यादिभिस्तर्जयतिस्म तं कटुकवाक्यैः. नंदिषेणोऽपि प्रवर्धमानतीव्रतरशुभपरिणामः कथमयं महात्मा स्वस्थः स्यादिति चिंतयन् मिथ्यादुष्कृतं यच्छन्निदानीं शोभनं यामीति वदंश्च गच्छतिस्म. ततो देवस्तच्चरितावर्जितमानसः स्थाने शक्रस्य पक्षपात इति संचिंत्य मायां संहृत्य प्रकटितदिव्यरूपः पतितस्तत्पादयोर्निवेद्य वृत्तांतमाह च किं मया कर्तव्यं ? मुनिराह यथाशक्ति धर्मोद्यम इति. गतोऽसौ स्वस्थानं. मुनिना पृच्छतां साधूनां कथितं यथावृत्तं. पश्चादवसानकाले स्मृतगृहस्थावस्थादौर्भाग्येण मनुष्यभवेऽहं सुभगो भूयासमिति कृतमनेन निदानं. गतो दिवं, ततश्च्युत्वा जातो दशमदशारो वसुदेवनामा. प्राप्तयौवनेन च तेन भ्रमता कृता हृतहृदयाः पुरसुंदर्यः स्वगृहकर्माणि त्यक्तवत्यः. ततो नागरिकविज्ञप्तसमुद्रविजयोपरोधान्निर्गतेन देशकालिकया पर्यटता वसुधां. रूपातिशयाक्षिप्तमनोभिः सर्वलोकैरपरापरस्थानेषु नीयमानेन तेन परिणीता बहुसहस्रसंख्या विद्याधरनरपतिवरकन्यकाः, प्राप्तो वैषयिकसुखातिरेकः. पश्चान्मिलितेन बंधुभिः समुत्पन्नेऽर्धचक्रवर्तिनि कृष्णे सुतोत्तमे, जातेषु प्रद्युम्नादिषु तद्वरतनयेषु लब्धं तेन हरिवंशपितामहत्वमिति. अधुना गाथार्थः कथ्यते—किमासीन्नंदिषेणस्य कुलं ? उच्छिन्नत्वाद्द्विजातीयत्वाद्वा न किंचिदित्यर्थः. तथापि यत्प्रसादसौ हरिकुलस्य विमलस्य निष्कलंकस्य विपुलस्य वा विस्तीर्णस्य सुचरितेन सदनुष्ठानेन हेतुभूतेन पितामहो वसुदेवनामासीदिति. तस्मात्तदेव सुचरितं प्रधानमिति गम्यते. तथा विद्याधरीभिरंबरचारिणीभिः

सहर्षं संतोषं नरेंद्रदुहितृभिर्नरपतिसुताभिश्चेत्यर्थः, यत्प्रार्थ्यतेऽभिलष्यते तदा तस्मिन् काले वसुदेवः, तत्तपसः प्राग्भवविहितस्य वैयावृत्त्यादेः फलं ज्ञेयं, तज्जनितपुण्यशेषसंपाद्यत्वात्तस्य. किंभूताभिः प्रार्थ्यते? अथ स्वगृहनिर्गमादनंतरं महतीभिः 'प्रधानाभिः, अथवा 'अहमहंतीहिंति' प्राकृतशैल्या अहमहमिकया परस्परस्पर्धयान्योन्योद्दालनेनेत्यर्थः. स्यात् किमिति नंदिषेणेन देवे शपमाने क्षमा कृतेत्युच्यते—मोक्षांगत्वात्तस्याः. कथमित्यत्र दृष्टांतमभिधित्सुराह—

सपरक्कमराउल—वाइएण सीसे पलीविए निअए॥ गयसुकुमालेण खमा। तहा कया जह सिवं पत्तों ॥५५॥

व्याख्या—पराक्रमः परनिराकरणोत्साहः, सह पराक्रमेण वर्तत इति सपराक्रमं, तच्च तद्राजकुलं च तस्य वातस्तज्जनित उत्कर्षः, स विद्यते यस्यासौ स पराक्रमराजकुलवातिकः. यद्वा सपराक्रम इति तस्यैव विशेषणं, सपराक्रमश्चासौ राजकुलवातिकश्चेति समासः, तेन शिरसि मस्तके प्रदीपिते ज्वालिते निजके स्वीये गजसुकुमारेण क्षमा क्षांतिस्तथा तेन निःप्रकंपताप्रकारेणात्यादरेण कृता विहिता उपसर्गकारिगोचरेति गम्यते, यथा शिवं मोक्षं प्राप्त इति गाथाक्षरार्थः ॥ ५५ ॥ विस्तरार्थः कथानकादवसेयस्तच्चेदं—

द्वारवत्यां कृष्णस्य मातुर्देवक्या निजतनयपीयमानस्तनां कांचिन्नारीं निरीक्ष्य संजातमौत्सुक्यं, यदुत धन्यास्ताः प्रमदा यासां दुग्धलुब्धमुग्धस्मेरमुखैर्वल्गच्छिरोधरैस्तनयैः स्तनौ पीयेते. मम पुनर्मंदभाग्याया नैतत्संपन्नमिति सविषादा च दृष्टा कृष्णेन. ततस्तां प्रणिपत्याह कृष्णः, अंब! किमेतत्? ततः कथितं तया निजाकूतं. पूरयामि ते

मनोरथानित्यभिधायाराधितस्तेन देवः. प्रकटीभूतो देवः प्राह भविष्यति तस्यास्तनयो दिवश्च्युतः, केवलं जन्मांतरांभ्यस्तकुशलकर्मत्वान्न चिरं गृहे स्थास्यतीति. तदाकर्ण्य कथितं कृष्णेन देवक्याः, प्रतिपन्नं च तया. ततो गजस्वप्नसूचित आविर्भूतो गर्भः, जातः क्रमेण दारकः, प्रतिष्टितं नाम गजसुकुमार इति. प्राप्तो यौवनमुद्वाहितः सोमिलब्राह्मणसुतां मातापितृभ्यां, स पुनरिंद्रजालमिव जगदसारं मन्यमानो विडंबनाप्रायं वैषयिकं सुखं चिंतयन् कारागृहमिव गृहं तदनुरोधात्तावंतं कालमधिवसतिस्म. पश्चान्निवेद्य स्वाभिप्रायं तयोर्विविधमोहवचनैरप्यतिष्टन् विमुक्तस्ताभ्यां कृच्छ्रेण च भगवदरिष्टनेमिपादमूले निष्कांतोऽभ्यस्तद्विविधशिक्षोऽन्यदा द्वारवत्यामेव श्मशाने स्थितः कायोत्सर्गेण कथंचित्तद्देशमागतेन दृष्टः सोमिलेन. मम दुहितरं परिणीय त्यक्तवानयं दुष्टात्मेति समुल्लसितोऽस्य क्रोधः.

ततः कृत्वा मृत्तिकया तच्छिरसो वेष्टनं, प्रक्षिप्य तत्र ज्वलितांगारानपक्रांतोऽसौ. गजसुकुमालस्याप्यहो मम निमित्तमयं वराकः कश्चित्पतिष्यति घोरे नरके, इति भावनासमीरणसंधुक्षिते ज्वलति ज्वलने तत्सहाय इव प्रवृद्धः शुक्लध्यानज्वलनः, ततो दग्धं च तेन शरीरमिव घातिकर्मचतुष्टयं, समुत्पन्नं केवलज्ञानं, अध्यासिता शैलेशी, समाप्तमायुष्कं, संप्राप्तः परमपदमिति. द्वितीयदिने समागतो विष्णुर्भगवद्वंदनार्थं, वंदितस्तेन सह मुनिभिर्भगवान्, पश्चात् क्व गजसुकुमार इति तस्य वदतो भगवतोक्तं साधितं तेन स्वकार्यं. विष्णुराह कथं? ततः कथितो भगवता तद्वृत्तांतः, पुनः प्रोक्तं च भो माधव ! यस्य त्वां दृष्ट्वा शिरो विदलिष्यति सोऽस्योपसर्गकरो

ज्ञेयः. अथ नगरं प्रविशता कृष्णेन दृष्टो भयेन प्रपलायमानः सोमिलः. कृष्णदर्शनादाविर्भवद्भयोत्कर्षस्य तस्य दीर्णं मस्तकमिति. एवमन्यैरपि साधुभिः क्षमा कर्तव्येत्युपनयः. तथा चाह—

रायकुलेसुऽवि जाया । भीया जरमरणगब्भवसहीणं ॥ साहू सहंति सव्वं । नीयाणवि पेसपेसाणं ॥५६॥

व्याख्या—राजकुलान्युग्रादीनि तेष्वपि, आसतामन्येषु, जाता उत्पन्नाः साधवः सर्वं सहंत इति योगः, किंभूताः संतः ? जरा वयोहानिः, मरणं प्राणत्यागः, गर्भवसतिर्जननीजठरे वसनं, जरा च मरणं चेत्यादि द्वंद्वः, ताभ्यो भीतास्त्रस्ताः, पंचम्यर्थे षष्ठी प्राकृतत्वात्, किं ? सहंते नीचानामपि निंद्यजातीनामपि, तेऽपि प्रासद्धय: पूज्याः स्युरित्यत आह—प्रेष्याणामपि परकर्मकृतामपि ये प्रेष्यास्ते प्रेष्यप्रेष्यास्तेषां संबंधि दुर्वचनताडनादिकमिति गम्यते. ॥ ५६.॥ किंच—

पणमंति य पुव्वयरं । कुलया न नमंति अकुलया पुरिसा ॥ पणओ इह पुंव्वि जइ—जणस्स जह चक्कवट्टिमुणी ॥
जह चक्कवट्टिसाहू । सामाइयसाहुणा निरुवयारं ॥ भणिओ न चेव कुविओ । पणओ बहुयत्तणगुणेणं ॥५८॥

व्याख्या—अनयोर्गाथयोः सांप्रदायिकोऽर्थः, स चायं—कश्चिच्चक्रवर्ती प्रव्रजितः, स चागीतार्थतया राजकुलादिभिरधिकोऽहमित्यभिप्रायेण न साधून् वंदते. ततस्तदभिप्रायं ज्ञात्वान्येन तद्दिनदीक्षितसाधुना सोऽभिहितो विरूपः कस्तेऽभिप्रायः ! यतः प्रणमंति प्रकर्षेण प्रह्वा भवंति, चशब्दस्योपनयोपदर्शनार्थस्य द्वितीयगाथायां यथा-

शब्दात्परेण संबंधः, पूर्वतरं प्रथमतरं, के? कुलजा विशिष्टकुलोत्पन्नाः, न नमंत्यकुलजा निंद्यजातयः पुरुषाः, दुर्विनीततायास्तेष्वेवावस्थानात्, एवं सति यथा चक्रवर्तिमुनिस्त्वं वर्तसे, तथा सुतरां प्रणतिपरेण भवितुं युक्तं, इत्युक्तोऽसौ जातसंवेगः सत्या नोदनेत्यभिप्रायात्यतिजनमवदीक्षितादिभेदभिन्नंसाधुलोकं क्षमयित्वा, द्वितीयार्थे षष्ठी प्राकृतत्वात्, एवमन्यत्रापि विभक्तिव्यत्ययोऽदुष्टो द्रष्टव्यः, पूर्वं प्रथमतरमेव स साधुस्तेन वंदितः प्रणतः, इह प्रवचने द्वितीयगाथाया अप्येवमुपनयः—चक्रवर्तिसाधुः सामायिकसाधुना लघुनापि भणितश्चोदितो नैव कुपितः, चशब्दादनुग्रहं च कृतवान्. कथं भणितः? निरुपचारमुपचाररहितं स्फुटवचनेन निष्ठुरमित्यर्थः. न केवलं न कुपितः, किंतु प्रणतो बहुत्वगुणेन हेतुभूतेन प्रणतः क्षांतेर्वेति गम्यते. तथाहि कर्मक्षयहेतुतामधिकृत्य बह्वी क्षांतिः प्रणतिर्वा, तुच्छास्तु कुलाभिमानादयः, अतोऽस्या बहुत्वगुणः, तेन प्रणतः, तथान्यैरपि कर्तव्यमित्युपनयः ॥५७॥५८॥ तदेवमनेन लघोरपि हितं वचनमनुष्ठितं, गुरोस्तु संबंधि सुतरामनुष्ठेयं, यस्तु मंदबुद्धिर्नानुतिष्ठेत्तद्दोषदर्शनाय दृष्टांतमाह—

ते धन्ना ते साहू। तेसिं नमो जे अकज्जपडिविरया॥ धीरा वयमसिहारं। चरंति जह थूलिभद्दमुणी ॥५९॥

विसयासिपंजरंमिव। लोए असिपंजरम्मि तिक्खंमि॥ सीहाव पंजरगया। वसंति तवपंजरे साहू ॥६०॥

ज कुणइ अप्पमाणं। गुरुवयणं य न लेएइ उवएसं॥ सो पच्छा तह सोअइ। उवकोसघरे जह तवस्सी ॥६१॥

व्याख्या—आसामपि गाथानां कथानकं कथयित्वा पश्चादक्षरार्थः कथयिष्यते. तच्चेदं— पाटलीपुत्रे आर्य-

संभूतविजयाचार्यस्य शिष्या वर्षाकालाद्यदिने स्वशक्तिधृतिप्रत्यायितगुरवोऽभिग्रहानेवंभूतान् गृह्णंतिस्म. एकः सिंहगुहायां निरशनश्चातुर्मासं, अन्यस्तथैव सर्पदरीसमीपे, अपरस्तथैव कूपफलके, स्थूलभद्रस्तु गृहस्थावस्थोपभुक्तायाः कोशागणिकाया गृहे सभोजनं गृहीतवान्.

एवंविधानभिग्रहान् गृहीत्वा गतास्ते स्वस्वस्थानेषु. उपशमितौ सिंहभुजंगौ. कोशा पुनः प्रायः परीषहपराभग्नोऽयमित्यभिप्रायेण विविधविब्बोकैः स्थूलभद्रमुपसर्गयंती तन्निःप्रकंपतां निरीक्ष्य निर्विण्णा पतिता तच्चरणयोः, ज्ञाताभिप्रायेण कथितस्तेन तस्यै धर्मः, जाता सा श्राविका, राजाभियोगं विहाय गृहीतमब्रह्मविरतिव्रतं. समासेऽभिग्रहे समायाताः साधवः, स्थूलभद्रं विहायेतरे दुष्करकारका इति वदतोपबृंहिताः शेषसाधुसमक्षं गुरुणा. समागतः स्थूलभद्रः, तंप्रति ससंभ्रममुत्थाय दुष्करदुष्करकारक इति वदता कृतोपबृंहणा. ततः प्राक्तनमैश्वर्यमधिकृत्यायं सुकरकारकोऽपि वर्ण्यते गुरुभिः. अहो लोकाचारपरतामीषां! इति जातमितरेषां चित्तकालुष्यं. ततः पुनः समाहिंड्यान्यत्र अन्यस्मिन् वर्षे तत्रैवागतेष्वभिग्रहग्रहणोद्यतेषु साधुषु सिंहगुहावासिनोक्तमहं कोशाभगिन्युपकोशासदने चतुर्मासं निरशनः स्थास्यामीति. नोचितस्त्वमस्येति निवारितो गुरुणा, प्रतिकूल्य तद्वचो गतोऽसौ तद्भवनं. दृष्टस्तया, स्थूलभद्रासूययायमागत इति भावज्ञतया संलक्ष्यानुज्ञाता तया तस्य वसतिः. ततो दर्शयाम्यस्य तद्गुणासहनफलमिति संचिंत्य रात्रावतिचर्चितशरीरा मदनोद्दीपनकारिभिर्गात्रवचनविभ्रमैस्तमुपसर्गयितुमारब्धा. ततश्चलचित्ततया विस्मृतात्मावस्थेनानेन प्रार्थिता सा प्राह, न वयं निर्धनानां भवामः. सोऽचिंतयदुक्त-

रापथे श्रूयतेऽपूर्वसाधोर्लक्षमूल्यकंबलदाता राजा, तद्गच्छामि तत्रेति विचार्य गतोऽसौ तत्र, लब्ध्वा कंबलमागतः, समर्पितवांश्च तस्याः, तथापि तस्य पश्यत एव निक्षिप्तोऽसौ वर्चोगृहे. स प्राह किमयं त्वया विनाशितः! इतराह किमिदं जानीषे? स प्राह किमत्र ज्ञातव्यं! इतराह यद्येवं तर्हि किमित्यशुचिपूर्णेन मामकदेहेनानर्घ्यगुणरत्नाढ्यतिरिक्तात्मा त्वं संपर्कमभिलपसि? तदाकर्ण्य पुनरागतस्तस्य चरणपरिणामः. अहो! निरंतरं भवगर्ते पतन्ननयाहमुध्धृत इति विचिंत्यासावाह, साधु विवेकिनि साधु! इच्छाम्यनुशास्तिं, निवृत्तोऽहमितो दुरध्यवसायात्. सा प्राह युक्तमेवेदं भवादृशां. ततोऽसौ गत्वा गुरुसमीपं दत्तालोचनो विहितप्रायश्चित्तो भावसारं प्रतिक्रांत इति. अधुनाक्षरार्थः—तत्र ते धन्याः पुण्यभाजस्ते साधवः, तेभ्यो नमः, ये किं? अकार्यं प्रति विरता दुश्चरितनिवृत्ताः. अस कृत्तच्छन्दस्य ग्रहणमादरख्यापनार्थं, *धीराः निःप्रकंपा व्रतमसिधारं खड्गधारासंचरणवद्दुरनुष्ठेयमित्यर्थः*, चरंति स्वशक्तिमपेक्ष्यानुतिष्ठंति, यथा स्थूलभद्रमुनिरिति. एवंविधा एव भवंति साधव इत्याह, विषयाः शब्दादयः, असिपंजरमिव करवालगृहमिव विवेकिनां दारुणविपाकतया त्रासजनकत्वाद्विषयासिपंजरं तस्मिन्. इवशब्दस्य व्यवहितः संबंधः, स च लोके असिपंजर इवेत्यत्र द्रष्टव्यः. ततश्च निकृत्रिमखड्गं पंजर इव तीक्ष्णे विवेकशरीरच्छेदक्षमे विषयासिपंजरे विद्यमानेऽपि लोके सिंहा इव पंजरगता अस्पृष्टास्ते न वसंति, तप एवानशनादि विषयखड्गसंपातरक्षाहेतुत्वात्पंजरं, तस्मिन् साधव इति.

अथवा विसयासिगाथा व्याख्या—विषीदंत्येतेषु सत्सु दुर्मेधसः संयमं प्रतीतिविषयाः शब्दादयस्ते ह्यविवेकिनां

धर्मशरीरच्छेतृत्वात्सर्वदिग्भावाच्च असिपंजरमिव लोके स्त्र्याद्याख्ये तन्मयत्वात्तासामेवंभूते वसंति तिष्टंति, तपोऽनशनादि, तदेव विषयखड्गसंपातसंरक्षणक्षमत्वात्पंजरमिव, तपःपंजरं, तत्र ज्ञानादिभिर्मोक्षसाधकत्वात् साधव इति संटंकः. क किंविशिष्टे? कुत्रस्थाः क इव? त एवोपमीयंते—'असिपंजरंमि तिख्खंमि सीहावपंजरगया इति' असिपंजरे तीक्ष्णे निरुपचरिते जितखड्गपंजरे पंजरगताः पंजरांतःस्थाः सिंहा इव साधवोऽप्येवं तपःपंजरे तिष्टंतीति. एतदुक्तं भवति—किल सिंहस्य पंजरव्यवस्थितस्य यदा मदावसरो भवति तदा स पंजरघातायोत्तिष्टतीति. तद्भयजननाय मर्वदिक्षु गृहीतकरवालैः पुरुषैः प्राणिसंघातो निपात्यते,तदभिमुखानि चोद्गीर्यंते करवालानि, ततः स भीत्या पंजरांतरे संतिष्टति. साधवोऽप्येवं स्त्र्यादिना शब्दादिविषयखड्गव्यग्रेण सर्वत्र प्राणिलोकं जन्मजरामरणादिघातैस्तत्कारणभूतैर्निःपीडयमानं दृष्ट्वा तद्भीत्येव तपोऽनुष्टानपंजरमध्ये यत्नेन तिष्टंतीति. तदियता गुरूपदेशः स्थितः, स्वरूपं व्यतिरेकद्वारेणोक्तं, अधुना प्रकृतमाह—यः करोत्यप्रमाणं अनादेयं, किं? गुरुवचनं, सामान्येन सामाचारीप्ररूपकमाचार्यवचः. अत एव मंदबुद्धिर्न च नैव लाति गृह्णाति उपदेशं. विशेषस्तमेवोद्दिश्य दीयमानं गुरुणेति गम्यते, स पश्चात्तथा शोचति खिद्यते उपकोशागृहे यथा तपस्वी कथानकोक्त इति, तस्य यत्संपन्नं तदाह—

जेट्ठव्वयपव्वयभर—समुव्वहणविवसियस्स अच्चंतं ॥ जुवइजणसंवइयरे । जइत्तणं उभयओ भट्ठं ॥ ६२ ॥

व्याख्या—ज्येष्टव्रतानि महाव्रतानि कनिष्टाणुव्रतापेक्षया तान्येवातिदुर्वहत्वात्पर्वतभरः शैलसंकाशो भारस्तस्य समुद्वहनमभ्युपगमरूपतयोत्पाट्य जीवितपर्यंतं नयनं तद्व्यवसितो मयेदं कर्तव्यमिति बद्धकक्षस्तस्य कथमत्यंत-

मतिशयेन किं युवतिजनसंव्यतिकरे उपकोशामीलके सतीत्यर्थः, यतित्वं श्रमणत्वमुभयत उभयाभ्यां प्रक्रमाद्य तित्वगार्हस्थ्याभ्यां भ्रष्टं च्युत. तथाहि—न यतिरसौ तदानीं चरणपरिणामाभावात्, नापि गृहस्थो बहिराकारेण यतिलिंगोपलब्धेरिति ॥ ६२ ॥ ननु कथमस्याब्रह्मप्रार्थनामात्रेणैव यतित्वं नष्टमित्याह—

जइ ठाणी जइ मोणी । जइ मुंडी वक्कली तवस्सी वा ॥ पत्थन्तो अ अबंभं । बंभावि न रोयए मज्झं ॥६३॥

व्याख्या—यदिशब्दाः सर्वेऽभ्युपगमे,तदसकृद्ग्रहण च शेषाशेषगुणयुक्तोऽप्यब्रह्मप्रवृत्तो न किंचिदित्याद-रख्यापनार्थ. स्थानो कायोत्सर्गिकः ? मोनी वाक्प्रसरनिरोधवान्, मुंडयपनीतकेशः, वल्कली तरुत्वग्धारी तप-स्वीप्रकृष्टतपोनिष्टदेहः, वाशब्दाद्यत्यादिपरिग्रहः. किं बहुना भापितेन ? प्रार्थयन्नाभिलषन्नब्रह्म मैथुनं, ब्रह्मापि लोकप्रसिद्ध्या परमेष्ट्यपि,आस्तां तावदन्यः,न रोचते मह्यं ज्ञातजिनवचनसारत्वान्मे न प्रतिभातीत्यर्थः।६३।किंच-

तो पढियं तो गुणियं।तो मुणियं तोअ चेइओ अप्पा॥आवडियपेल्लियामं—तिओवि जइ न कुणइ अकज्जं।६४।

व्याख्या-इहापि बहुवारांस्तत इत्यभिधानमादरख्यापनार्थ,उक्तव्यतिरेकायासूचनार्थं वा,तथा च न पुनरुक्त. उक्तं च—अनुवादादरवीप्सा-भृशार्थविनियोगहेत्वसूयासु ॥ ईषत्संभ्रमविस्मय—गणनास्मरणेषु पुनरुक्तं ॥१॥ एवमन्यत्रापि द्रष्टव्यं. पठन पठितं, भावे क्तः प्रत्ययः,सूत्रस्य ग्रहणमित्यर्थः,ततः फलमिति शेषः. यदि न करो त्यकार्यमिति संबंधः. एव गुणितं तस्यैव परावर्तनं, मुणितमर्थज्ञानं, यदिवा कर्मणि क्तः प्रत्ययः, पठितं गुणितं

मुणितं सूत्रमिति शेषः. तथात्मा च, ततश्चेति चशब्दस्य समुच्चयार्थस्य व्यवहितसंबंधाद्यथावत्प्रत्यभिज्ञातो यदि, कं? आपतितः प्रतिप्रवेशितो दुःशीलं संसर्गितः, प्रेरितः पापमित्रैरकार्यकरणप्रति चोदितः, आमंत्रितः स्त्र्यादिभिरभ्यर्थितः. आपतितश्चासौ प्रेरितश्चासौ आमंत्रितश्चे ति समासः.अपिशब्दः क्वचित्त्रयस्यापि संभावनार्थः. यद्येवंविधोऽपि, आस्तामन्यादृशः, न करोत्यकार्यं नाचरत्यब्रह्म, सामान्येन आगमनिषिद्धं वा, ततः पठितादिकं सफल नान्यथेति. ॥६४॥ पश्चात्तर्हि सा तस्य कुतः शुद्धिः संपन्नेत्युच्यते–गुरोः सम्यगालोच्य निवर्तनात्तथाहि––

पागडियसव्वसल्लो। गुरुपायमूलंमि लहइ साहुपयं॥ अविसुद्धस्स न वड्ढइ । गुणसेढी तत्तिया ठाइ ॥६५॥

व्याख्या––प्रकटितानि प्रकाशीकृतानि सर्वशल्यानी मूलोत्तरगुणापराधलक्षणानि येन स तथाविधः, गुरुपादमूले आचार्यचरणांतिके लभते प्राप्नोति अशुभपरिणामान्नष्टमपि किं? साधुपदं यतिस्थानं श्रमणत्वमित्यर्थः. व्यतिरेकमाह––अविशुद्धस्यानालोचितातिचारतया कलुपितचित्तस्य न वर्धते गुणश्रेणिर्ज्ञानादिगुणपद्धतिः,शेषमनुष्टान संपूर्णमनुतिष्टतोऽपि सशल्यतया न वृद्धिं याति. किं तर्हि? तावत्प्रमाणा यावत्यपराधकाले स्थिता तावती तिष्टति, शेपानुष्टानविकलस्य पुनरपयात्येवेति ॥ ६५ ॥ सांप्रतमेतत्कथानकैकदेशेनैव गुणेषु मत्सरिणां निर्विवेकतादोषमाह––

जइ दुक्करदुक्करकार–ओत्ति भणिओ जहट्ठिओ साहू॥तो कीस अज्जसंभूअ–विजयसीसेहिं नवि खमिअं?॥६६॥

व्याख्या- यदि दुष्करदुष्करकारक इति दुष्करं तदनुष्टानमिति संभ्रमेण भणितो गुरुणेति.गम्यते,कः? यथा- स्थितस्तथाविध एव साधुः स्थूलभद्र इत्यर्थः. ततः किमित्यार्यसंभूतविजयशिष्यैर्न क्षांतं तचः? अपिशब्दस्तेषां विवेकासंभावनार्थः ॥ ६६ ॥ तथाहि—

जइ ताव सव्वओ सुं-दरुत्ति कम्माण उवसमेण जई ॥ धम्मं वियाणमाणो। इयरो किं मच्छरं वहइ?॥६७॥

व्याख्या-यदि तावत्कर्मणां तद्विबंधकानामनुदीर्णानामुपशमेन, उपलक्षणत्वादुदीर्णानां च क्षयेण हेतुभूतेन सुव्रतः सदाचारः सन् यतिः साधुः सुंदर इति शोभनोऽयमित्युच्यते,परेणेति गम्यते ततो धर्मं गुणाधिकविषय- प्रमोदसाध्यं विजानानोऽवगच्छन्नितरः स्वबुद्ध्या धार्मिक एव किं मत्सरं तस्योपरि द्वेषं वहति ? चित्ते धारयति ? नात्राविवेकं विहायान्यत्कारणमस्तीत्यभिप्रायः. ॥ ६७ ॥ अस्यैव दोषान् दृष्टांतेनाह--

अइसुट्ठिओत्ति गुणसमु-इओत्ति जो न सहइ जइपसंसं ॥ सो परिहाइ परभवे। जहा महापीढपीढरिसी ॥६८॥

व्याख्या—अतीवसुस्थितो मूलोत्तरगुणेष्वित्यतिसुस्थित इति. तथा गुणैर्वैयावृत्त्यकरणादिभिः समुदितः समुद्गतः प्रकाशसंपन्नः संपूर्णो वा गुणसमुदितः,इत्येवं क्रियमाणामिति गम्यते यःकश्चिन्न सहते न क्षमते यति- प्रशंसां साधुश्लाघां, स परिहीयते स्त्रीत्वादिप्राप्त्या हीनो भवति परभवेऽन्यजन्मनि, यथा महापीठपीठर्षी. इति संक्षेपार्थः, विस्तरार्थः कथानकगम्यस्तचेदं--महाविदेहे गृहस्थपर्यायचक्रवर्तिवैरनाभाचार्यांतेवासिनस्तल्लघुभ्रातरो

वाहुसुवाहुपीठमहापीठा एकादशांगधरा आसन् . तत्र बाहुः क्षयोपशमवशात् पंचशतिकगच्छस्य वैयावृत्त्यम-करोत्,महाबाहुर्मर्दनादिना खेदविनोदं,इतरौ स्वाध्यायमिति अन्यदा कस्मिंश्चित्प्रस्तावे तद्गुणाधनुत्कीर्त्य धन्यौ कृतार्थावेताविति श्लाघितौ बाहुसुबाहू गुरुणा. ततोऽधपि राजस्वभावं नैते मुञ्चन्ति येनात्मकृत्योतावेतौ श्लाघ्यंति,न पुनः स्वाध्यायरतावावामिति जातमितरयोर्गुरुविषयं मनाक् चित्तकालुष्यं.तदवधीरणया विशेषतोऽनालोच्य कालं कृत्वा सर्वार्थसिद्धिविमाने समुत्पद्य ततश्च्युत्वा तन्मनोदुःकृतकर्मपरिणतिवशात् समुत्पन्नौ स्त्रीभावेन ब्राह्मीसुंदरीत्वेन,वैरनाभबाहुसुबाहवस्तु तस्मिन्नेवोत्पद्य ततश्च्युत्वा ऋषभभरतबाहुबलिभावेन जाताइ ति.किंच–

परपरिवायं गिह्णइ । अट्ठमयविरल्लणे सया रमइ ॥ डज्झइ य परसिरीए । सकसाओ दुक्खिओ निच्चं ॥६९॥

व्याख्या--परपरिवादं आत्मव्यतिरिक्तावर्णवाद गृह्णात्यनेकार्थत्वात्करोति,तथा अष्टौ च ते मदाश्च कारणे कार्योपचाराज्जात्यादय , तेषां विरेल्लण वचनेनविस्फारणं, तस्मिन् सदा रमते सज्जते. तथा दह्यते दह्यया वा परश्रिया आत्मव्यतिरिक्तलक्ष्म्या, हेतुभूतया, चशब्दात्तद्भ्रंशार्थं यतते च. कोऽसौ ? सकषाय उत्कटक्रोधाद्युपप्लुतः प्राणीत्यर्थः. स चैवभूतो दुःखितोऽसातग्रस्तो नित्यं सर्वदा भवतीत्यैहिको दोषः ॥ ६९ ॥ सांप्रतं पारलौकिकं तद्दोषमाह—

विग्गहविवायरुइणो। कुलगणसंघेण वाहिरकयस्स ॥ नत्थि किर दवलोएवि। देवसमिईसु अवगासो ॥७०॥

व्याख्या—विग्रहो मुष्टयादियुद्धं, विवादो वाक्कलहः, विग्रहश्च विवादश्चेति समासः, तयो रुचिरभिलाषो यस्यासौ तथा तस्य, अत एव कुलगणसंघेन बहिः कृतस्य, तत्र कुलं चांद्रविद्याधरादि, कुलसमुदायो गणः, चातुर्वर्णः संघः, कुलं च गणश्चेत्यादि समाहारद्वन्द्वः, तेनापि करणकारितादिदोषमुत्कीर्त्याऽयोग्यतया निष्कासितो बहिःकृतस्तस्य नास्ति न विद्यते, किलशब्दः परोक्षाप्तवादसूचकः, देवलोकेऽपि सौधर्मादौ,संभाव्यत एवैतद्देवसमितिषु सुरसंघातमध्येऽवकाशो ढौकः,स्वचरितदोषान्नासौ परलोकेऽपि शुभस्थानं लभत इत्यर्थः ॥७०॥ तदियता मात्सर्येणाविद्यमानदोषग्राहिणो दोषोऽभिहितः, अधुना विद्यमानग्राहिणोऽपि तमाह—

जइ ता जणसंववहार—वज्जियमकज्जमायरइ अन्नो ॥ जो तं पुणो विकत्थइ । परस्स वसणेण सो दुहिओ ।७१।

व्याख्या–यदि तावदिति पूर्वं जनसंव्यवहारेण लौकिकप्रसिद्ध्यापि वर्जितमनादरत्वात्परिहृतमिति समास किं ? अकार्यं चौर्यपारदार्यादिकमाचरति सेवतेऽन्यः पापप्रेरितः कश्चित्परः, तदसौ तावत्स्वयंकृतेन राजकुलनयनमारणादिना व्यसनेन दुखितो भवति, यः पुनस्तदकार्यं विकत्थते जनसमक्षमुत्कीर्तयति, परस्य संबंधिना व्यसनेनापङ्कपेणासौ दुःखितो निष्फलांतस्तापभाग्भवतीत्यर्थ ॥ ७१ ॥ तदेव परावर्णवादस्यानर्थहेतुताभिहिता, अधुनैवंप्रकारेणान्येषामपि तामाह—

सुट्ठुवि उज्जम माणं। पंचेव करिंति रित्तयं समणं॥ अप्पथुई परनिंदा। जिप्भोवच्छा कसाया य ॥७२॥

व्याख्या—सुट्ठुवि अतिशयेनाप्युद्यच्छंतं तपःसंयमयोरुद्यमं कुर्वंतं पंचैव शेषदुश्चरितमाहात्म्यनिरपेक्षाणि कुर्वंति संपादयंति, रिक्ति एव रिक्तकस्तं गुणशून्यकं श्रमणं साधुं. कानि तानीत्याह—आत्मस्तुतिरात्मश्लाघा, परनिंदान्यजुगुप्सा, जिह्वा रसनेंद्रियं, उपस्था स्पर्शनेंद्रियं, कषायाः क्रोधादयः, ते त्वेकतया गृहीताः, चशब्दः समुच्चयार्थः ॥ ७२ ॥ पुनरपि परावर्णवादस्य सर्वदोषाधिकतां दर्शयंस्तत्कर्तुरदृष्टव्यतामाह—

परपरिवायमईओ। दूसइ वयणेहिं जेहिं जेहिं परं॥ ते ते पावइ दोसे । परपरिवाई इय अपिच्छो ॥ ७३ ॥

व्याख्या—परपरिवादे अन्यदोषोद्घाटने मतिर्बुद्धिर्यस्यासौ परपरिवादमतिकः, स परं सदसद्दोषोत्कीर्तकैर्वचनैर्वाक्यैः कारणभूतैर्यैर्यैः सदसद्भिर्दोषैर्हेतुभूतैरिति गम्यते, दूषयति जनमध्येऽन्यं दुष्टं दर्शयति, तांस्तान् दोषस्तमसौ प्रापयति असद्भिर्योजयति, तद्योजनेन च महादुःखं तस्य जनयतीत्यर्थः. सद्भिः पुनर्बहिरपि व्यापयति, व्याप्तश्च खरतरमसौ निर्लज्जो भवति. परपरिवाद्यन्यदोषसूचक इति हेतोरप्रेक्ष्योऽप्रेक्षणीयोऽतिपापिष्टत्वाद् द्रष्टुमपि न कल्पत इत्यर्थः. ॥ ७६ ॥ तदिदमवेत्य यादृशैर्भाव्यं तदाचिख्यासुर्हेयतया व्यतिरेकद्वारेण तावद्दुर्विनीतदोषानाह—

थद्धा च्छिद्दप्पेही । अवणवाई सयंमई चवला ॥ वंका कोहणसीला । सीसा उव्वेअगा गुरुणो ॥ ७४ ॥

जस्स गुरुम्मि न भत्ती । न य बहुमाणो न गउरवं न भयं ॥ नवि लज्ज नवि नेहो । गुरुकुलवासेण किं तस्स ॥७५॥

रूसइ चोइज्जंतो। वहई य हियएण अणुसयं भणिओ ॥ न य कम्हिं करणिज्जे । गुरुस्स आला न सा सास॥७५॥

व्याख्या—स्तब्धा गर्वेणानम्र कायाः,छिद्रप्रेक्षिणो मत्सरितया गुरोरपि दोपस्थाननिरीक्षणशीलाः, अवर्णवादिनो गुरोरप्यश्लाघाकरणप्रवणाः, तथा स्वयमात्मनः संबंधिनी, न गुरोः,मतिर्बुद्धिः प्रक्रमात्प्रवर्तिका कार्येपु येषां ते स्वयंमतयः, चपलाश्चित्तकायाभ्यां तरलाः चित्तेनास्थिरतयाऽपरापरशास्त्रपल्लवग्राहिणः,कायेनासमंजसं गात्रविक्षेपणा. वक्रा मनोवाग्भ्यां. कुटिलाः, मनसा गुरुविषयेऽपि मायाविनो वाचा च ये वंचनं वितन्वंति. तथा क्रोधनेन स्वपरयोः कोपकरणेन शीलं समाधानं येषां ते तथा, एवं भूताः शिष्याः किं ? उद्वेजका मनस्तापहेतुत्वादुद्वेगकारिणः, कस्य गुरोर्भवतीति. किंच ' जस्स गुरुम्मित्ति गाहा ' यस्य गुरौ न भक्तिर्बाह्या सेवा, न च नैव बहुमानमांतरप्रीतिः, न गौरव समानदर्शितया पूज्योऽयमिति न बुद्धिरित्यर्थः,

न भयमकार्ये प्रवर्तमानस्य गुरोः सकशात्,नापि लज्जा त्रपा,नापि स्नेहः प्रतिबंधः.अपिशब्दौ समुच्चयार्थौ स्तुतिवचनं,तदभिमते प्रेम,तद्द्वेपिणि द्वेप',दानमुपकारकीर्तनममंत्रमूलवशीकरणमित्यादिगुणांतराभाव. संभावनार्थौवा बहुशो नञोऽभिधानमत्यंतनिर्गुणताख्यापनार्थ एवंविधस्य तस्य गुरुकुलवासेन गुर्वधिष्ठितगच्छमध्यस्थनेन किं? न किंचित्तदाधेयगुणविकलत्वादित्यभिप्रायः.किंच रुष्यति तदैव क्रुद्ध्यति चोद्यमानो विशेपतोदोषमुत्कीर्त्यानुशिष्यमाणः,तथा वहति हृदयेन धारयति चित्तेनानुशयं क्रोधानुबंधं,चशब्दात् कार्यं च कालांतरेण दर्शयति. भणितःसामा-

न्येन स्मारितो वारितो वा, न च नव कस्मिंश्चिदन्यतमेऽपि करणीये कर्तव्ये वर्तत इति शेषः. गुरोस्तदाचार्यस्य आलोदुस्तरत्वात्प्रतिप्रवेशो, नासौ शिष्योऽनुशासनानर्हत्वादिति ॥ ७४ ॥ ७५ ॥ ७६ ॥ सांप्रतं प्रकृतमाह—

उव्विलणसूअणपरि—भवेहिं अइभणियदुट्ठभणिएहिं ॥ सत्ताहिया सुविहिया । न चेव भिंदंति मुहरागं ॥७७॥

व्याख्या—अवपीडनादिर्दुर्जनकृतैः सुविहिता मुखरागं न भिंदंतीति क्रिया. तत्रावपीडनमपकर्णनं, सूचनं पैशून्यकरणं, परिभवोन्यत्कारः, अवपीडनं च सूचनं चेत्यादिद्वंद्वः, तैस्तैः, तथा अतिभणितमसंबद्धभाषणं, दुष्टभणितं कर्कशाभिधानं, अत्रापि द्वंद्वस्ताभ्यां, व्यस्तनिर्देशश्छन्दोवशात्, एभिर्हेतुभूतैः सत्त्वाधिकाः क्रोधादिजयसामर्थ्यप्रतिष्ठिताः सुविहिताः शोभना मुनयो नैव भिंदंति मुखरागं, न विच्छायमुखा भवंतीत्यर्थः, चशब्दात्तत्कारिणि करुणादिकं च भावयंतीति. ॥ ७७ ॥ किंच—

माणंसिणोवि अवमाण—वंचणा ते परस्स न करंति ॥ सुहदुक्खुग्गिरणत्थं । साहू उवहिव्व गंभीरा ॥७८॥

व्याख्या—मानः पूजा स विद्यते येषां ते मानवंतः, तेऽपींद्राद्यभ्यर्चिता अपीत्यर्थः. अपमानवंचने परिभवविप्रतारणे ते साधवः परस्यान्यस्य न कुर्वंति न आचरंति. किमर्थमेवं चेष्टंत इत्याह—सुखदुःखयोः सातासातयोरुद्गिरणं वमनमिति समासः, तदर्थं तत्कारणभूतपुण्यपापविच्छेदनिमित्तं तेषां प्रवृत्तिः, तथोदधय इव समुद्रा इव गंभीराः, अतुच्छत्वात्परैरलब्धमध्या इति. अथवा सुखदुःखोद्गिरणार्थमिति. शरीराह्लादपरितापकथनप्रयो-

जनमधिकृत्योदधय इव गंभीराः, परस्मै निःकारणं तदकथनान्न तुच्छा इति ॥ ७८ ॥ किंच—

मउआ निहुअसहावा । हासदवविवजिया विगहमुक्का॥असमंजसमइबहुअं । न भणंति अपुच्छिया साहू ॥७९॥

व्याख्या—मृदवो नम्रा निभृतस्वभावाः, निहुयं निव्वावारमिति देशीयवचनात्, शांततया संयमव्यापार पंतोऽपि निर्व्यापारधर्माण इत्यर्थः. तथा हास्यं सामान्येन हसनं, द्रवः परिहासः परोत्प्रासनं, ताभ्यां विवर्जिता रहिता इति समासः. विरूपा कथा विकथा देशादीनां, तया मुक्ताः स्वयमनुचितत्वेन त्यक्ता विकथामुक्ताः, असमंजसमसंबद्धं स्वल्पमप्यतिबहुसमर्गलाक्षरं संबद्धमपि न भणंति न वदंत्यपृष्टाः परेणाविहितपृच्छाः साधव इति ॥ ७९ ॥ पृष्टा अपि यादृग्वदंति तदाह—

महुरं निउणं थोवं । कज्जावडियं अगव्वियमतुच्छं ॥ पुव्विं मइसंकलियं । भणंति जं धम्मसंजुत्तं ॥८०॥

व्याख्या—मधुरं श्रोतुराह्लादकं निपुणं सूक्ष्मार्थं स्तोकं मिताक्षरं कार्यापतितं प्रस्तुतप्रयोजनादनुत्तीर्णं, अगर्वितं सोत्सेकरहितं, अतुच्छं गंभीरार्थं, पूर्वं भाषणात्प्राग्मतिसंकलितं बुद्ध्या पर्यालोचितमित्यर्थः, भणंति वचनमिति शेषः. यदिह धर्मसंयुक्तं निरवद्यमिति. ते चैवं घटमाना मोक्षमाक्षेपेण साधयंति. विवेकविकलितत्वात्. ॥ ८० ॥ अविवेकिनो पुनः क्लेशोऽनर्थक एव, तथा चाह—

सट्ठिं ग्रासइहस्सा । तिसत्तखुत्तोदयेण धोएणं ॥ अणुचिण्णं तामलिणा । अन्नाणतवुत्ति अप्पफलो ॥८१॥

व्याख्या—षष्टिं वर्षसहस्राणि त्रिःसप्तकृत्वा इत्येकविंशतिवारा इत्यर्थः, किं? उदकेन धौतं प्रक्षालितं यत्तेन कर्णभूतेन भैक्ष्येणेति गम्यते, गृहत्यागात्पश्चादनुचरितं सेवितं तप इति शेषः. केन? तामलिना न च तथाप्यसौ मोक्षं विशिष्टदेवत्वं वा साधितवानिति हेतोर्निश्चीयते एतदज्ञानतपोऽल्पफलमित्यक्षरार्थः भावार्थः कथानकादवसेयः, तच्चेदं—

तामलिप्त्यां तामलिनामा श्रेष्ठी जातालौकिकवैराग्यो विहितस्वोदरमानचतुर्विभागभिक्षाभाजनः प्रतिपद्याव्यक्तलिंगं तन्नगरीसमीपवर्तिनद्युपकंठे षष्टिं वर्षसहस्राणि तपस्तप्तवान्. स च तावंतं कालं भृत्वा भैक्ष्यस्य तद्भाजनं,दत्वा जलस्थलनभश्चरसत्वानां भागत्रयं,चतुर्थभागेनैकविंशतिवारा जलक्षालितेन स्वयं व्यापितत्वात्,इयता क्लेशेन देवेपूत्पन्नोऽल्पकषायत्वादनुकंपापरत्वाच्च. इतरथाऽसंतपोषणमनर्थांतरकारि स्यादिति. ननु केन हेतुना तदीयतपोऽल्पफलमित्युच्यते-संयमाभावादुन्मार्गप्ररूपकत्वाच्च. तथा चाह—

च्छजीवकायवहगा । हिंसगसत्थाइं उवइसंति पुणो ॥ सुबहुंपि तवकिलेसो । बालतवस्सीण अप्पफलो ॥८२॥

व्याख्या—पृथिव्यादिषड्जीवनिकायवधकाः संतः स्वयमपरेषामपि हिंसकशास्त्राणि जीवोपमर्दगर्भार्थानि वेदादीन्युपदिशंति व्याचक्षते. पुनःशब्दस्य विशेषणार्थत्वात्सर्वज्ञशासनपराङ्मुखाश्च, अनेन हेतुनासुबहुरपि तपः क्लेशो बालतपस्विनामन्यऋषीणां तामल्यादीनामल्पफलो भवति, अथवा अपि संभाव्यते.एतदफलो निष्फलः संसाररूपानिष्टफलत्वाच्चाफल इति. ॥ ८२ ॥ साधूनां पुनर्नैवं, यतः—

परियच्छंति असव्वं। जहट्ठियंअवितहं असंदिद्धं॥ तो जिणवयणाविहन्नू। स हंति बहुअस्स बहुआइं ॥८६॥

व्याख्या--पर्यवस्यंति बुद्ध्यंते, चशब्दात् श्रद्दधते च, सर्वं निःशेषं जीवादिकं यथास्थितं सर्वज्ञोपदेशादवितथ सद्भूतं,अत एवासंदिग्धं निःसशयं,कथमेतल्लक्ष्यते? इत्याह—ततो यथावस्थितपरिच्छेदाज्जिनवचनविधिज्ञाः सर्वज्ञागमविचारवेदिनः सहंते क्षमंते बहोः प्राकृतलोकस्य संबंधीनि बहूनि दुर्वचनादीनीति गम्यते, स्वकर्मणः फलमिदं, नैषां दोष इति भावनाविशेषादिति. ॥ ८३ ॥ मंदबुद्धयः पुनस्तानेव बालतपस्विनः, समर्थयंते, तत्रेदं कारणं--

जो जस्स वट्टए हियए। सो तं ठावेइ सुंदरसहावं॥ वग्घी च्छावं जणणी। भद्दं सोमं च मन्नइ ॥८४॥

व्याख्या—यः कश्चिद्यस्य कस्यचिन्मोहोपहततयान्येन वा कारणेन वर्तते हृदि लगति चित्ते स तं स्थापयतीति समर्थयतेऽसुंदरमपि सुंदरस्वभावं. दृष्टांतमाह–व्याघ्री शावमात्मीयं बालं जननी तन्माता भद्रं सुखं जंतुसुखहेतुत्वात्. सौम्य च क्रोधाद्युपशमेन शांतलेश्य, चः समुच्चये, मन्यते चिंतयतीति. ॥ ८४ ॥ न केवलं यत्यवस्थायां गृहस्थावस्थायामपि विवेकस्य महत्फलमिति दृष्टांतेनाह--

मणिकणगरयणधण–पूरियंमि भवणंमि सालिभद्दोऽवि॥अन्नो किर मज्झवि सामि-ओत्ति जाओ विगयकामो८५

न करंति जे तवं सं–जमं च ते तुल्लपाणिपायाणं॥ पुरिसा समपुरिसाणं। अवस्स पेसत्तणमुविंति ॥८६॥

सुंदरसुकुमालसुहो–इएण विविहेहिं तवविसेसेहिं॥हत सोसविओ अप्पा । जह नवि नाओ सभवणेऽवि८७

व्याख्या—तत्र प्रथमं कथानकं कथ्यते–धन्याभिधानाया वत्सपाल्यास्तनयः संगमनामा इंद्रोत्सवे गृहे गृहे क्षीरान्नं खाद्यमानं दृष्ट्वा तत्स्वमातरं याचितवान्. ततः क्षीराद्यभावाज्जातखेदां तामुपलभ्य दत्तं तत्पाटकवासिनारीभिरनुकंपया तत्तस्याः, राद्धमनया दत्तं संगमाय भोजनं, अत्रांतरे समागतो मासपारणको मुनिः, जातहर्षेण दत्तस्तस्मै संविभागोऽनेन, ततोऽतिलोलतया पायसस्य बहुभक्षणेन जातविसूचिको मृत्वासौ साधुदानोपार्जितपुण्यप्राग्भारवशाद्राजगृहे गोभद्रश्रेष्ठिनो भद्रायाः पत्न्याः शालिस्वप्नसूचितो विविधमनोरथपूरको जातस्तनयभावेन,प्रतिष्ठितं च तन्नाम शालिभद्र इति. प्राप्तः क्रमेण यौवनं,परिणीतास्त्रिभुवनातिशायिरूपा द्वात्रिंशत्कन्यकाः, बुभुजे ताभिः समं भोगान्. इतश्च विधिना कालं कृत्वा गतो दिवं तज्जनकः, प्रयुक्तावधिस्तत्पुण्यतो जातोऽस्य शालिभद्रं प्रति बहुतरः स्नेहः.ततो दर्शितात्मरूपः प्रतिदिनं दिव्यवस्त्रालंकारविलेपनकुसुमादीनि तस्मै सवधूकायोपजहार. भवनं च रत्नादीनां भारेण बभार. अथान्यदा तत्र केचिद्रत्नकंबलव्यापारिणः समागताः, दर्शितानि च तैस्तानि राजकुले, अतिमहर्घाणीति न गृहीतानि श्रेणिकेन. ततो गतास्ते भद्रामंदिरं, तया तु निर्विचारं गृहीत्वा कृतानि वधूनां चरणप्रमार्जनानि. इतश्च श्रेणिकराजेन प्रियया तद्ग्रहणार्थं प्रेर्यमाणेनाकारितास्ते व्यापारिणः, कथितस्तैर्वृत्तांतः, ततो जातविस्मयेन नृपेण द्रष्टव्योऽसौ यस्येदृशी स्फीतिरिति संचिंत्य प्रहितो भद्रायाः सूनुप्रस्थापनार्थं दूतः, गत्वागतः स चाह महाराज! भद्रा विज्ञपयति नानेन चंद्रसूर्यावपि सततं रत्नप्रकाशतया भवनस्य

कदाचिदपि दृष्टौ, तत्करोतु महाराजो मम भवनागमनेनानुग्रहमिति. तदाकर्ण्योल्लसितविस्मयातिरेको गतस्तत्र सपौरजनपरिकरो राजा. दृष्टं च विभवातिशयापहसितधनदालयं तेन तद्भवनं, समारूढश्चतुर्थभूमिकायां. भद्रापि विहितोचितप्रतिपत्तिर्गता सप्तमाले यत्रास्ति शालिभद्रः, विहिताभ्युत्थानोऽसावुक्तस्तया पुत्र! भवद्दिदृक्षया श्रेणिकराजोऽधस्तात्तिष्ठति,तं दृष्ट्वा कुरु तत्प्रतिपत्तिमिति,स प्राह यूयमेव तदर्थं जानीथ. इतराह तनय! नासौ पण्यं, सोऽवदत् तर्हि? साह त्वत्स्वामिको राजेति. ततो ममाप्यन्यः प्रभुरिति! अथवा युक्तमेवं मादृशां विषयपंकमग्नतया मोहराजवशवर्तिनां.मुनय एव लब्धात्मलाभा भवंतीति चिंतयतोऽस्य वैराग्यातिशयाजातश्चरणपरिणामः,तथापि जनन्युपरोधेनावतीर्य दृष्टस्तेन श्रेणिकः,तेनापि सस्नेहमवलोक्य स्थापितोऽसौ स्वोत्संगे.

ततः क्षणाद्विद्राणवदनं निर्गच्छन्नयनसलिलं तमवलोक्य भद्रा श्रेणिकंप्रत्याह, महाराज! अयं दिव्यविलेपनादिलालितेंद्रियत्वान्न शक्नोति सोढुं मनुष्यांगरागादिगंधं, तद्विसर्ज्यतामिति. राजाह कथं? ततः कथितस्तया देवव्यतिकरः. विसृष्टे च तस्मिन् भद्रया निमंत्रितो भोजनाय राजा,प्रतिपन्नमनेन, मज्जितुमारब्धस्य नृपस्य विविधरत्नकलधौतधौतांधकारविमलासु यंत्रवापीषु संभ्रमेण च पतितमंगुलीमुद्रारत्नं, ततस्तरलितं तारं विलोकयंतं तमुपलभ्य भद्राभिहितया चेट्या कीलिकाप्रयोगेण निष्कासिते तज्जले प्रकाशितदिक्चक्रवालविविधरत्नमयालंकारांतर्गतं निजांगुलीमुद्रारत्नमंगारमिव विच्छायमुपलभ्य स वैलक्ष्यः सन् प्राह किमेतदिति. परिजनेनोक्तं देवोपनीतशालिभद्रवधूनिर्माल्यमिदमिति. ततो नास्त्यसाध्यमुत्कृष्टपुण्यानां, येनैवं देवा अपि किंकरत्वं प्रतिपद्यंत इति.

जातो नृपस्य गाढतरविस्मयः, विहितभोजनादिप्रतिपत्तिर्निर्गतो राजा. शालिभद्रोऽपि पुनर्विशेषतो धर्मघोषसूरिसमीपे धर्मं श्रुत्वा पश्चाद्भगवति वीरे समवसृते संभाल्य भद्रां परिजनं च नानोपायैः स वधूको निष्क्रांतः,ततो गृहीतसूत्रार्थः प्रवर्तन् सामाचारीं, कुर्वन् विविधतपोविशेषान् बहुकालं विहृत्य सह भगवता गतो राजगृहं,गोचरे प्रविशंश्चोक्तोऽसौ भगवता, माताद्य भवंतं प्रतिलंभयिष्यति, क्रमेण गतो निजभवनं, तपोदुर्बलगात्रतया स न प्रत्यभिज्ञातो भद्रादिना केनापि. निर्गच्छंश्च स नगरात्पूर्वभवजनन्या प्रतिलाभितो दध्ना. तत आगत्य तेनतद्विषये पृष्टो भगवान्. भगवतापि कथितो जन्मांतरवृत्तांतः,ततो जातजातिस्मरणस्तदेवदधि पारयित्वा कृतपादपोपगमनो मृत्वा स समुत्पन्नः सर्वार्थसिद्धिविमाने. ततश्च्युत्वावाप्य केवलश्रियं सेत्स्यतीति. अधुनाक्षरार्थः—

तत्र मणयश्चंद्रकांताद्याः, कनकं स्वर्णं, रत्नानि कंबलादीनि, धनं चतुष्पदादि,मणयश्च कनकं चेत्यादिद्वंद्वः. तैः पूरितं भृतं,तस्मिन्शब्दस्येह संबंधो भवने शालिभद्रोऽन्यः किलेत्येवं श्रूयते ममापि स्वाम्येव स्वामिक इति हेतोर्जातो विगतकामो विषयान्प्रति निरभिलाष इति, स तदाचिंतयद्युक्तमिदं मादृशां, यतो न कुर्वंति ये तपोऽनशनादि, संयमं पृथिव्यादिरक्षणात्मकं, चः समुच्चये,ते पुरुषा अवश्यं प्रेष्यत्वं किंकरत्वमुपयांतीति संबंधः. केषां? तुल्यपाणिपादानां समपुरुषाणां समानावयवतया तुल्यानामपीत्यर्थः, तस्यैव यतित्वमधिकृत्याह—सुंदरः सुरूपः, सुकुमारो मृदुशरीरः, सुखोचितो लालितेंद्रियः, सुंदरश्चासौ सुकुमारश्च स चासौ सुखोचितश्चेति समासः, तेन प्रागेवं सता विविधैर्नानारूपैस्तपोविशेषैरष्टमादिभिस्तथा शोषितः कृशीकृत आत्मा देहः कथं . . . य इत्यपि-

त्कत्वात्, जीवस्य शोषणानुपपत्तेः, यथा न ज्ञातो नोपलक्षितः स्वभवनेऽपि निजगृहेऽपीति. ॥ ८५ ॥ ८६ ॥ ८७ ॥ ननु किमित्यनेनैवं शरीरं शोषितमित्युच्यते—धर्मार्थं. किं चात्यल्पमिदमुच्यते, अन्ये तदर्थं शरीरमपि त्यजंतीति, अत्र कथानकं—उज्जयिन्यां भद्राश्राविकासत्कयान शालास्थितसूरिसुहस्तिनो रात्रौ नलिनीगुल्मविमानवक्तव्यता-प्रतिबद्धमध्ययनं परावर्तयतः श्रुत्वा भद्रातनयोऽवंतिसुकुमारः संजातजातिस्मरणस्तद्विमानच्युतत्वाज्जातौत्सुक्योऽवतीर्योपरितनप्रासादतलाद्गत्वाचार्यसमीपं तान् पप्रच्छ. भगवन् कथं युष्माभिरिदं दृष्टं? कथं वा लभ्यत इति. सूरिराहागमदृष्ट्या दृष्टं, लभ्यते तु मोक्षार्थं प्रवृत्तैरनुषंगेण. स प्राह प्रतिपन्ना मया भवतो भगवदनुभावात्प्रव्रज्यानशनं च, कुरु तदनुज्ञयानुग्रहमिति. ततो ज्ञानावलोकेन विज्ञायानिवर्तकनिर्बंधमाराधकत्वं च दत्तं तस्मै द्रव्यलिंग प्रत्याख्यानं चाचार्यैः, ततो निर्गत्यानुचितभूमिगमनतयातिसुकुमारत्वात्क्षरद्रुधिरचरणो गतो विविक्तस्थंडिलं. तद्गंधानुसारेण तत्रागतया सनिजबालकदंबकया शिवया स खादितुमारब्धः. तथाप्यचलितसत्वः समाधिनापि विहाय देहपंजरं उत्पन्नस्तत्रैव विमान इति तथा चाह—

दुक्करमद्धोसकरं । अवंतिसुकुमालमहरिसीचरियं ॥ अप्पावि नाम तह त—ज्जइति अच्छेरयं एयं ॥८८॥

व्याख्या—दुष्करं दुरनुष्ठेयं. अत एवोद्धोपकरं रोमहर्षजननं, किं तत्? अवंतिसुकुमारमहर्षेश्चरितं, कथं? आत्मापि पूर्वोक्तयुक्त्या शरीरमपि. नामेति प्रसिद्धमिदमागमे, तथा कथानकोक्तप्रकारेणात्यजत इति आश्चर्यमेतच्चित्रमिदमिति. ॥ ८८ ॥ न वा चित्रं, यतः—

उच्छूढसरीरघरा । अन्नो जीवो सरीरमन्नंति ॥ धम्मस्स कारणे सु—विहिया सरीरंपि छड्डुंति ॥ ८९ ॥

व्याख्या—'उच्छूढसरीरघरत्ति' अवक्षिप्तदेहगेहाः,कथं? अन्यो जीवः शरीरमन्यदिति,भावनया धर्मस्य कारणाद्धर्मनिमित्तमाश्रित्य सुविहिताः साधवः शरीरमपि, आस्तां धनकनकादिकं, त्यजंतीति. ॥ ८९ ॥ ननु कथमसौ तावता क्षणेन तद्विमानमासादितवानित्यत आह—

एगदिवसंपि जीवो । पव्वज्जमुवागओ अनन्नमणो ॥ जइवि न पावइ मुक्खं । अवस्स वेमाणिओ होइ॥९०॥

व्याख्या—एवं मन्यते, किं ? बहुकालापेक्षया एकदिवसमपि जीवः, उपलक्षणं चैतन्मुहूर्तादीनां, किं ? प्रव्रज्यामुपगतोऽर्हद्दर्शितां दीक्षां प्रतिपन्नः, किंभूतः? अनन्यमना निश्चलचित्तः सन्मोक्षं प्राप्नोति धृतिसंहननकालादिसामग्रीविरहाद्यद्यपि न प्राप्नोति न लभते मोक्षं, तथाप्यवश्यं नियमेन वैमानिको विमानाधिपतिर्देवो भवति, चरणोपबृंहितसम्यग्दर्शनस्याणीयसोऽपि विशिष्टफलहेतुत्वादिति ॥९०॥ न केवलमनेनैव धर्मार्थं देहत्यागोऽकारि, किं तर्हि ? बहुभिरिति दर्शयन् दृष्टांतांतरमाह—

सासावेढेण सिरम्मि । वेढिए निग्गयाणि अच्छीणि॥ मेयज्जस्स भगवओ। न य सो मणसावि परिकुविओ॥९१॥

व्याख्या—वेष्ट्यतेऽनेनेति वेष्टः, शिरसो वेष्टः शिरोवेष्टस्तेन करणभूतेन शिरसि वेष्टिते निर्गते अक्षिणी, कस्य ? मेतार्यस्य भगवतः, न च नैवासौ मनसापि, आस्तां वाक्कायाभ्यां, परिकुपितस्तत्कारिणीति गम्यत इति

संक्षेपार्थः ॥ ९१ ॥ विस्तरार्थः कथानकगम्यस्तच्चेदं—राजगृहे मेतार्यनामा तपस्वी गोचरचर्यया प्रविष्टः सुवर्णकारभवनं, तत्र श्रेणिकराजदेवार्चनिकार्थं निर्वर्त्याष्टशतं सौवर्णिकयवानां प्रविष्टोऽभ्यंतरे सुवर्णकारः, भक्षितं तत्क्रौंचेन. निर्गतस्तदद्दृष्ट्वासौ मुनिं पृष्टवान्. क्रौंचकरुणया नाख्यातं मुनिना, ततोऽसकृत्प्रश्नेऽप्यकथयति मुनौ राजभयाज्जातोऽस्य कोपः, वेष्टितमार्द्रचर्मरज्ज्वा तन्मस्तकं, गाढबंधान्निर्गते लोचने. समुल्लसितजीववीर्यानलदग्धकर्मेंधनः प्राप्य केवल तत्क्षणमेव समासायुष्कः प्राप्तो मोक्षमिति. तदेवमनेन शरीरं त्यक्तं, न च तत्त्यागकारिणि क्रुद्धः, इदमेव मुनीनां कर्तुं युक्तं, यत आह—

जो चंदणेण बाहुं । आलिंपइ वासिणा वि तच्छेइ ॥ संथुणइ जो अ निंदइ । महरिसिणो तत्थ समभावा ९२

व्याख्या—यः कश्चिच्चंदनेन गोशीर्षादिना बाहु भुजमालिंपति समालभते, वास्या वा तक्षणोत्यवलिखति, यः इति वर्तते, तदनेन शारीराद्युपकारापकारयुक्तौ, अधुना मानमाद्यधिकृत्याह—संस्तौति श्लाघते यो वा निंदति तिरस्कुरुते, महर्षयः सुसाधवस्तत्र लेपकादौ समभावस्तुल्यचित्ताः, न चंदनालेपकस्तावकयोस्तोषवंतो, नापि वासीतक्षकनिंदकयो रोषवंत इत्यर्थः. ॥ ९२ ॥ ते तर्हि एवंभूताः कुतो भवंतीत्युच्यते—गुरूपदेशात्, अत एव निर्विकल्पं गुरुवचनग्राहिणामुपबृंहणां कुर्वन्नाह—

सिंहगिरिसुसीसाणं । भद्दं गुरुवयण सद्दहंताणं ॥ वयरो किर दाही वा—यणत्ति न विकोविअं वयणं ९३

व्याख्या—तत्र तावत्कथानकं कथ्यते—प्राकथितो वैरस्वाम्यतिशिशुः साधूनां हस्तीभूत आसीत्. स प्रथमं साध्वीनामुपाश्रये तिष्ठन्नेकादशांगानि तासां पठंतीनां पदानुसारितया जग्राह.पश्चादानीतः साधुमध्ये स्थिरतया यत्किंचित्पठन्ननुपलक्ष्यस्तस्थौ. अन्यदा तं वसतिपालं विधाय गतेषु, गोचरे साधुषु बहीर्भूमावाचार्यसीहगिरिषु च स स्थापनामाधून् कृत्वामहता शब्देन परिपाट्या वाचना ददौ. आगतैश्चाचार्यैरुपाश्रयाभ्यर्णे श्रुत्वा तद्ध्वनिमचिंति,किं झटित्यागताः साधवः? स्थित्वोपयुज्य ननु वैरः खल्वयमिति निरूपयद्भिश्च लक्षितो वाचयन्नेकादशाप्यंगानि.ततो माभूदस्य संक्षोभ इत्यपसृत्य बृहद्ध्वनिना कृता नैषेधिकी.इतरेणापि संवृत्याकारं कृता प्रतिपत्तिरिति. ततः पुरुषरत्नमिदं माऽज्ञातवीर्याः परिभूवन्नेते इति साधूनां किंचित्कार्यमुद्दिश्य प्रस्थिता ग्रामांतरं गुरवः. तेऽप्याहुः कोऽस्माकं वाचनां दास्यतीति? सूरिभिरुक्तं वैर इति. ततस्तथेति प्रतिपन्नमेतैः, गता गुरवः, वैरेणापि समुत्सारितस्तेषां स्वल्पकालेन बहुगुणः स्वाध्यायः, संमाह्लादितानि च चित्तानि. आगतैर्गुरुभिरुक्तास्ते किमुत्सृतः स्वाध्यायः? ते प्राहुर्बाढु अयमेवास्माकं वाचनाचार्योऽनुग्रह्य क्रियतां. तैरुक्तं करिष्यते कृतोपधान इति. अधुनाक्षरार्थः—सीहगिरिसुशिष्याणां भद्रं कल्याणं भवत्विति शेषः, कीदृशां? गुरुवचनं,अनुस्वारलोपः प्राकृतत्वात्, श्रद्दधतां भावसारं गृह्णतां तथाहि—तैर्वैरो दास्यति वाचनामिति वचनमाचार्यसंबंधि न किल विकोपितं न विकल्पितं, अपितु निर्विचारं गृहीतमिति संटंकः. ॥ ९३ ॥ किंच—

मिण गोणसंगुलीहिं । गणेहि वा दंतचक्कलाइं से ॥ इच्छं भ[illegible] ॥ ९४ ॥

व्याख्या—मिमिष्व ? इयत्तापारच्छदाय, ...

परसंख्याहि ? दंतचक्कलानि दशनमंडलानि से अस्य गोनसस्येति वा ब्रूयुः. वाशब्दो विकल्पार्थः, तत्र शिष्येण इच्छामीति भणित्वा वचनेन प्रतिपद्येत्यर्थः, अनुष्टानेनापि कार्यं कार्तव्यं. किमित्यत आह–तदेव. नान्यत्. मिथ्याविनीतत्वप्राप्तेः,तुशब्दस्य विशेषणार्थत्वात्कालविलंबेनादेशे प्रतिपृच्छय कर्तव्यं.किमिति? अत आह–जानंति युक्तायुक्तं यतो गुरव इति गम्यते. पाठांतरं वा 'इच्छंति भणियव्वं। कज्जं तु त एव जाणंति ॥' अयमर्थः–इच्छामीति भणितव्यं शिष्येण, न अयुक्तमेतदिति गुरुवचनप्रतिघातः कर्तव्यः. किमिति ? यतः कार्यं यत्तथाविधभणने प्रजोजनं तत्त एव गुरवो जानंति, विशिष्टतरज्ञानत्वात्. तुशब्दादिहापि पक्षे कर्तव्यमपि तदेवेति. ॥९४॥ तथाह–

कारणविऊ कयाई । सेयं कायं वयंति आयरिया ॥ तं तहसद्दहिअव्वं । भविअव्वं कारणेण तहिं ॥९५॥

व्याख्या—कारणविदो निमित्तज्ञाः कदाचित्कस्मिंश्चित्प्रस्तावे श्वेतं धवलं काकं वायसं वदेयुराचार्या गुरवस्तद्वचनं तथा श्रद्धातव्यं भावसारं प्रतिपत्तव्यं. किमिति ? भवितव्यं कारणेन तस्मिन् , न निष्प्रयोजना गुरुगिरः प्रवर्तेत इति मत्वा. ॥ ९५ ॥ एवंकारिणां गुणमाह—

जो गिण्हइ गुरुवयणं । भण्णं तं भावओ विसुद्धमणो ॥ ओसहमिव पिज्जंतं । तं तस्स सुहावहं होइ ९६

व्याख्या— यो गृह्णाति गुरुवचनं भण्यमानं, गुरुणोच्यमानं भावतोंतःकरणेन,अत एव विशुद्धमना निष्क-

लंकचित्तः, औषधमिव पीयमानं तद्गुरुवचो गृह्यमाणं तस्य गृहीतुः सुखावहं भवति,कर्मरोगोच्छेदकत्वादिति. ॥९६॥ अन्यच्च सुशिष्योऽपि स एव, यत आह--

अणुवत्तगा विणीया । बहुक्खमा निच्चभत्तिमंता य ॥ गुरुकुलवासी अमुई । धन्ना सीसा इह सुसीला ९७

व्याख्या--अनुवर्तका अनुकूलवृत्तयो,विनीताः कृत्यकारिणो,बहुक्षमा नीरोषाः, नित्यं भक्तिमंतो गुरौ सदा तत्करणप्रतिबद्धाः, चशब्दः समुच्चये, गुरुकुलवासिनः स्वगुरुगच्छसेविनः, श्रुतग्रहणार्थमाचार्यांतरांतिकं गताः, पुनरमोचका ग्रंथसमाप्तावपि न झटिति तं मुंचंति,धन्याः पुण्यभाजः शिष्या विनेया इत्येवं सुशीला भवंति,स्वपरयोः समाधिजनकत्वादिति ॥ ९७ ॥ किमितीयंतो गुणा मृग्यंत इत्याशंक्य तेषां माहात्म्यमाह--

जीवंतस्स इह जसो। कित्ती य मयस्स परभवे धम्मो॥सगुणस्स य निग्गुणस्स य। अयसो कित्ती अहम्मो य ९८

व्याख्या--जीवतः प्राणान् धारयत इह लोके स गुणस्य यशः, अहो पुण्यभागयमिति श्लाघारूपं भवतीति संबंधः मृतस्य कीर्तिस्तद्रूपैव संशब्दता. परभवे परलोके धर्मश्च सुदेवगत्यादिहेतुर्भवति. चशब्दस्य समुच्चयार्थस्य व्यवहितः संबंधः. व्यतिरेकमाह-निर्गुणस्य तु अनुवर्तकत्वादिगुणशून्यस्य पुनर्जीवतोऽयशः, मृतस्याकीर्तिः,परलोकेऽधर्मश्च कुगतिकारणं भवतीति ॥ ९८ ॥ तदेवं सुविनेयदुर्विनेययोर्गुणदोषान् प्रतिपाद्येदानीं विशेषतो दुर्विनेयदोषानेव दृष्टांतेनाह--

वुड्ढावासेवि ठियं । अहव गिलाणं गुरुं परिभवंति ॥ दत्तुव धम्मवीमंसएण दुस्सिक्खियं तंपि ॥ ६९ ॥

व्याख्या—इह वृद्धः क्षीणजंघाबलोऽभिधीयते, तस्य आ मर्यादयात्र वृद्धवर्षाकालशेषमासचतुर्मासाभ्यासमभ्यधिकं वसनं वृद्धावासस्तस्मिन्नपि स्थितं, आस्तामनियतविहारिण, अथवेति पक्षांतरद्योतकः, ग्लानं रोगग्रस्तमपवादपदेषु वर्तमानमिति गम्यते, गुरुं परिभवंति न्यक्कुर्वंति मंदबुद्धयः. केन ? धर्मविमर्शकेन, तत्र विमर्शनं विमर्शः, कुत्सितो विमर्शो विमर्शकः, धर्मस्य विमर्शको धर्मविमर्शक इति समासः, तेन, वयं धार्मिका निरतिचारत्वात्, अयं तु न तथा सातिचारत्वात्, एवंविधकुविकल्पेनेत्यर्थः, दुःशिक्षितं दुरभ्यस्तं कुगतिहेतुत्वाद्दुष्टचेष्टितमित्यर्थः. एतदपि स्थितमन्यतरापि गुरुपरिभवनं, आस्तां निरुपाधिदुर्विनीततयेत्यपि शब्दार्थः. किंवत्परिभवंति ? दत्तवदिति. अत्र कथानकं—

कोल्लपुरे नगरेऽनागतमत्यंतं दुर्भिक्षं विज्ञाय देशांतरे गच्छं विसर्ज्य विहितनवभागक्षेत्राः क्षीणजंघाबलाः सूरिसंगमस्थविरास्तस्थुः. तेषां च तथाविधाप्रमत्ततापराणां किल नगरदेवतोपशांता. अथान्यदा समागतस्तदुदंतान्वेषणार्थं दत्तनामा तच्छिष्यः परिपाट्या प्राग्दृष्टवसतिभागस्थं सूरिं दृष्ट्वा स विकल्पितवान् वसतियतनामप्येष न करोति, नूनमयमग्रीभूत इति विकल्प्य स स्थितः पृथगुपाश्रये, अन्विष्टा वार्ता, गुरुणाकारितः प्रविशता गोचरे, अंतप्रांतकुलेषु बहुटाट्यमानस्य जातोऽस्य संक्लेशः, लक्षितो गुरुणा तदभिप्रायः, प्रविष्टः श्रेष्ठिगृहे गुरुः, तत्र च रेवतीगृहीतं रुदंतं दारकंप्रत्याह मा रुदिहि दारकेति. ततः कृत्वारार्टी नष्टा रेवती

प्रगुणीभूतो बालो, जातहर्षैः स्वजनैः प्रतिलंभितो गुरुर्मोदकैः, भृतभाजनः प्रहितो दत्त्वाश्रितयतीद्दशानि स्थापनाकुलान्यस्य मंति. तथापि मामन्यत भ्रमयति. ततः प्रांतकुलेष्वटित्वा भुक्तं गुरुभिः. पश्चादावश्यके आलोच्योपविशंतं दत्तंप्रति गुरुराह वत्स सम्यगालोचय! स प्राह किमत्रासम्यक्? गुरुराह नालोचितस्त्वया धात्रीपिंडपरिभोगः. ततोऽसूयया अतिसूक्ष्मदर्शी भवानिति वदन्नुपविश्य प्रतिक्रम्य गतो निजोपाश्रयं. सूरिगुणावर्जितया च देवतया दर्शयाम्यस्य गुरुपरिभवतरुकुसुममिति संचिंत्य कृतं महांधकारं प्रबलवातहिमशकलवर्षं तद्वसतौ. त्रस्तश्चासौ पूत्कुर्वन् गुरुणाभिहित इत आगच्छेति. स प्राह न पश्यामि द्वारं, गुरुणा कृतः संघृष्य प्रदीपवज्ज्वलंत्यंगुल्या प्रकाशः सोऽचिंतयत्प्रदीपोऽप्यस्यास्तीति.समागतस्तन्मूलं,समनुशिष्टो देवतया हे दुर्मते! किमेतत्! महात्मानं गुरुं परिभवन् लप्स्यसे कुगतिपातमिति. ततः संजातपश्चात्तापः पतितोऽसौ गुरुचरणयोः, प्रतिपन्नं च तेन प्रायश्चित्तमिति. यतो दुर्विनीतस्यायं दोषः, गुरुविषयमेव प्रतिबंधदार्ढ्यं विनेयस्य दृष्टांतेनाह—

आयरिय भत्तिरागो। कस्स सुनक्खत्तमहरिसीसरिसो॥अविजीवियं ववसियं। न चेव गुरुपरिभवो सहिओ॥१००॥

व्याख्या—आचार्यभक्तिरागो गुरुगोचरांतरस्नेहः कस्य सुनक्षत्रमहर्षिसदृशो? न कस्यचित्प्रायः, तेन हि जीवितमपि व्यवसितं निष्टां नीतं त्यक्तमित्यर्थः.अपिशब्दस्य व्यवधानसंबंधात्,नैव गुरुपरिभव आचार्यतिरस्कारः सोढः क्षांतः, चशब्दात्तिरस्कृतश्च प्रतिपक्षः, तथाहि—सोऽननुकूलप्रत्यनीकं भगवदवर्णवादं कुर्वंतं गोशालकं ज्ञाततत्मामर्थ्योऽपि निराकृतवान्. निरुत्तरतया जातकोपेन [illegible]

महर्धिकवैमानिकभावेनेति. ॥ १०० ॥ तदेवमस्य महात्मनः परमगुरो भगवतोहश [illegible]
भागयं, तथा चाह—

पुण्णेहिं चोइआ पुर—क्खडेहिं सिरिभायणं भविअसत्ता॥गुरुमागमेसिभद्दा॥देवयमिव पज्जुवासंति॥१०१॥

व्याख्या—पुण्यैश्चोदिताः प्रेरिताः पुराकृतैर्जन्मांतरकृतैर्गुरुं पर्युपासत इति संबंधः, के? भव्यसत्वा प्रत्यासन्नमोक्षा जंतवः, ते चेह लोक एव श्रीभाजनं ज्ञानादिलक्ष्मीपात्रं भवंति.परलोके पुनरागमिष्यद्भावि भद्रं कल्याणं येषां ते तथा, स्वर्गापवर्गप्राप्तेः. किंवत्पर्युपासते? देवतामिव परमात्मबुद्ध्येत्यर्थः. यतः सुखदुःखावाप्तिपरिहारौ प्रायः प्राणिनां तत्प्रभावजन्याविति. अत्र कथानक—

श्वेतांव्यां प्रदेशी राजा, मंत्री चित्रनामा परमश्रावकः. स तद्बहिरुद्याने समवसृतं केशिनामानमाचार्यमाकर्ण्याचिंतयदयं राजा मिथ्यात्वग्रहग्रस्तः पापानुष्ठानप्रसक्तो दुर्बुद्धिर्मय्यपि मंत्रिणि यास्यति नरकं, तदेनं नयामि केनचिदुपायेन भगवन्मूलं. ततोऽश्ववाहनिकाव्याजेन नीतः स तेने तं प्रदेशं, खेदविनोदच्छलेनोपवेशितश्च, यत्र बहुजनपरिषन्मध्यगतो भगवान् धर्ममाचष्टे. स मंत्रिणं प्राह किमयं मुंडो रारटीति? मंत्रिणोक्तं न जानीमोऽभ्यर्णीभूयाकर्णयामः. गतौ निकटे, ततः सूरिणा प्ररूपिते देवताविशेषस्वरूपे जीवादिषु च स प्राह सर्वमिदमसंबद्धमसत्यं च प्रत्यक्षगोचरातीतत्वाद्वियदरविंदवत्. सत् हि न प्रत्यक्षगोचरातीतं भूतचतुष्टयवत्. सूरिराह भद्र किमिदं भवतोऽध्यक्षविषयातीतमुत सर्वासुमतां? आद्यपक्षे तावत् स्तंभादिमध्यगपरमभागादीनामभावप्रसंगः,

भवदर्शनस्यार्वाग्भागवर्तित्वग्रहणायैव व्यापारात्, नापि द्वितीयः पक्षः, तस्याप्यसिद्धत्वात्, तत्सिद्धौ तवैव सर्वज्ञजीवतासिद्धेः, देवताविशेषजीवादिप्रतिषेधानुपपत्तिः, जीवे सति बंधादीनां सूपपादकत्वात्. इत्यादिना वादेन निराकृतो जातसम्यग्दर्शनपरिणामः स प्राह भगवन्नेवमेव, नष्टो मे मोहपिशाचो युष्मद्वचनमंत्रैः, केवलं कुलक्रमागता अस्माकं नास्तिकता, सा कथं मोक्तव्या? गुरुराह—भद्र! न किंचिदेतत्, सति विवेके किं कुलक्रमागतो व्याधिर्दारिद्र्यं वा न त्यागार्हमिति? किंच कुलमकुलं वा प्राणिनामेकाकिनामेव, अनादौ भवे भ्रमणात्सर्वकुलेपूत्पादसंभवाच. ततोऽसौ संजाततत्त्वनिर्णयः प्रतिपद्य श्रावकधर्मं, प्रतिपाल्य निरतिचारं, पश्चात्पुरुषांतरासक्तया सूर्यकांताभिधया भार्यया पारणके दत्तविषो ज्ञातव्यतिकरोऽप्यचलितचित्तः समाधानेन मृत्वा समुत्पन्नो वरविमानाधिपतिभावेन. यद्याचार्यो नाभविष्यंस्तदा नरकमगमिष्यदिति. तथा चाह—

बहुसोक्खसयसहस्साण--दायगा मोअगा दुहसयाणं॥आयरिया फुडमेअं। केसिपएसीअ [व] ते हेऊ ॥१०२॥

नरयगइगमणपडि—हत्थाए कए तह पएसिणा रण्णा ॥ अमरविमाणं पत्तं । तं आयरियप्पभावेणं ॥१०३॥

व्याख्या—बहुसौख्यशतसहस्राणां प्रभूतसुखलक्षाणां दायकाः, तथा मोचका दुःखशतेभ्यः, के? आचार्या गुरवः, स्फुटमेतन्निःसंदिग्धमिदं. कथं? केशिप्रदेशिवत्. केशिना प्रबोधितः प्रदेशी केशिप्रदेशी, तद्वत्, तथा-

रु:. इदमेव भावयति-गम्यत इति गतिर्नरकरूपा गतिस्तस्यां यद्गमनं तस्मिन् ...
निर्वर्तिते कर्मणीति गम्यते,तथा प्रदेशिना राज्ञा अमरविमानं प्राप्तं, तदाचार्यप्रभावेण गुरुमाहात्म्येनेति.॥ १०२ ॥
॥१०३॥ तदिदमवेत्य गुरुराराधनीयो, गुरुणापि शिष्यः सम्यक् शिक्षणीय इत्याह—

धम्ममएहिं अइसुं—दरेहिं कारणगुणोवणीएहिं ॥ पल्हायंतोव्व मणं । सीसं चोएइ आयरिओ ॥ १०४ ॥

धर्मेण निर्वृत्तानि निरवद्यत्वाद्धर्ममयानि तैः ,तथा सुंदरैर्वचनदोषरहितैः,तथा कारणगुणोपनीतैः,तत्र कारणं स्वभणनप्रयोजनं, गुणाः शिष्यमाणस्य ज्ञानभाजनतादयः कारणं च गुणाश्चेति द्वंद्वः, तैरुपनीतान्युपढौकितानि, शिष्यस्यापि प्रतीतावारोहितानीत्यर्थः तैर्वचनैरिति गम्यते,प्रह्लादयन्निव मनश्चित्तं.अन्यस्याश्रुतत्वात्तस्यैव, शिष्यं चोदयति शिक्षयत्याचार्यो गुरुरिति. ॥ १०४ ॥ तेन च मनःप्रह्लादनं सत्यवचनैरेव कार्यं, न पुनरसत्यं प्रियमपि वक्तव्यं,तदुक्तं-सत्यं ब्रूयात् प्रियं ब्रूयात् । न ब्रूयात् सत्यमप्रियं॥प्रियं च नानृतं ब्रूया-देष धर्मःसनातनः॥१॥येन च प्राणात्य येऽप्यसत्यं प्रिमपि न भाषितं,तं दृष्टांतद्वारेणाभिधित्सुराह—

जीअं काऊण पणं । तुरुमिणिदत्तस्स कालिअज्जेण ॥ अवि अ सरीरं चत्तं। न य भणिअमहम्मसंजुत्तं ॥१०५॥

व्याख्या—जीवनं जीवः प्राणधारणं, तं कृत्वा पणं मूल्यं, जीवितमपि व्ययीतं विधायेत्यर्थः, तुरुमिण्यां नगर्यां दत्तस्तुरुमिणीदत्तः, तस्य पुरत इति गम्यते, कालिकाचार्येण शरीरमपि त्यक्तं,अपिशब्दस्य व्यवहितसंबं-

धात्.चशब्दात्स्वाभिप्रायेण,न पुनस्त्यक्तमेव,न च नैव भणितमुक्तं अधर्मसंयुक्तं सपापं वचनमिति शेषः, अक्षरार्थोऽयं ॥५॥अधुना कथानकं–तुरुमिण्यां दत्तनामा द्विजो मंत्री राज्यं वशीकृत्य जितशत्रुराज्यं च निष्कास्याधिष्टितराज्यो वहुयागानिष्टवान्. अन्यदा तत्र कालिकाचार्या आगताः, तदा भद्रा माता प्राह पुत्र ! मातुलं गत्वा पश्य ? गतोऽसौ सहर्षः,प्रणामं कृत्वा चोपविष्टः. धर्ममाकर्णयामीति यागफलं पृष्टवान्. गुरुराह हिंसादिसाध्योऽधर्मः, स प्राह यागफलं कथय ? गुरुराह हिंसा कुगतिहेतुः. स प्राह किमिदमप्रस्तुतं ? गुरुराह यद्येवं तर्हि नरकपातः फलं यज्ञानां. स प्राह कोऽत्र प्रत्यः? गुरुराह सप्तमेऽह्नि आस्वादिताशुचिः कुंभीपाकेन पक्ष्यसे त्वमित्ययं प्रत्ययः. स प्राह त्वं क यास्यसि ? गुरुराह कृतधर्मो दिवमिति. ततः सक्रोधोऽसौ तन्निरोधकान् पुरुषान् विधायशोधिताशेषराजमार्गः स्थितोंतःप्रविष्टः. सप्तमे दिने भ्रांत्या मारयामि तं दुष्टश्रमणकमिति निर्गतो राजमार्गेऽतिवेगितमालाकारमुक्ता पुष्पस्थगिनाश्वखुराहता प्रविष्टा विष्टातद्वदने, तदास्वादनाज्जातप्रत्ययत्वादुत्पन्नभयो निवर्तितुमारब्धोऽसौ, ततो विरक्तत्वादानीतजितशत्रुभिः पुनर्दुर्ग्रहोऽयं भविष्यतीत्यालोच्य गृहीतः सामंतैः, पक्वश्च सह श्वभिः प्रक्षिप्य कुंभे, विलपन्महाक्लेशेन गतो नरकं. गुरुरपि प्रपाल्य पर्यायं गतो दिवमिति. एवमन्येनापि परिस्फुटो धर्मः कथनीयः, यस्त्वन्यथा कथयेत्तद्दोषं दृष्टांतेनाह—

फुडपागडमकहंतो। जहट्ठियं बोहिलाभमुवहणइ ॥ जह भगवओ विसालो। जरमरणमहोअही आसि॥१०६॥

व्याख्या—स्फुटं, व्यक्तं वर्णैः, प्रकटितमनिगूढार्थतया, स्फुटं च तत्प्रकटं चेति समासः, तमकथयन् यथा-

वरिथंत धर्ममिति गम्यते,किं? बोधिलाभं प्रेत्य जिनधर्मप्राप्तिरूपमुपहंति नाशयति,किंवत्? यथा भगवतो वीरस्य विशालो विस्तीर्णो,जरामरणे एव बहुत्वान्महोदधिर्जरामरणमहोदधिः स आसीत. ॥६॥ तथाहि—ऋषभदेवपौत्रेण मरीचिना प्रव्रज्याभग्नतया त्रिदंडयात्मवेषेण ग्लानावस्थायामसंयततया साधुभिरप्रतिचारितत्वात् करोमि कंचित्सहायमित्यभिप्रायेण धर्मोपस्थितं कपिलंप्रति यदुक्तं कपिल इहापीत्यत्रापि इति मत्संबंधिनि साधुसंबंधिनि चानुष्टाने धर्मोऽस्तीत्यर्थः,तन्माहात्म्यादसौ नष्टबोधिः संसारे सागरोपमकोटाकोटीं भ्रांतः पश्चाच्च वर्धमानस्वामिभावेनोत्पन्न इति. तदेष भाविभवभ्रमणत्याद् व्रताद्चालीत्, अन्ये तु न चलंत्येवेति.आह च--

कारुण्णरुण्णसिंगार—भावभयजीवियंतकरणेहिं ॥ साहू अवि अ मरंति न य। अ निअनिअमं विराहिंति १०७

व्याख्या—कारुण्यादिभिर्न च नैव निजनियममात्मीयव्रतं विराधयंति खंडयंति साधव इति संबंधः. तत्र कारुण्यं करुणाभावः, रुदित स्वजनादिविप्रलपितं.शृंगारभावाः कामोद्रेककारिणो योषिदादिविब्बोकाः. भयं राजादेस्त्रास , जीवितांतकरणं प्राणप्रहाणसंपादनं, कारुण्यं करुणाभावः,रुदितं चेत्यादि द्वंद्वः. तैरनुकूलप्रतिकूलोपसर्गैर्हेतुभूतैरपीत्यर्थः.अपि चेत्यभ्युच्चये,म्रियंते त्यजंति प्राणान्,परं नैव निजनियमं विराधयंतीति. ॥ ७ ॥ तदेवं स्वयं व्रतदार्ढ्यं विधेयं, तद्वति च प्रमोदः कार्यः, सद्यस्तद्वतोऽपि महामलः,तथा चाह--

अप्पहियमायरंतो । अणुमोअंतो य सुग्गइं लहइ ॥ रहकारदाणअणुमो—यगो मिगो जह य बलदेवो ॥१०८॥

आत्महित स्वपथ्यं तपःसंयमादिकमाचरन्, कुर्वन् सुगतिं स्वर्गादिकां लभते, अनुमोदयंतश्च दानमाना-
भ्यां समर्थयंतश्चेति भावः. किंवत् ? रथकारस्तद्दानानुमोदको मृगो हरिणो बलदेवश्चैते यथा सुगतिं लब्धवंतः,
चशब्दस्य व्यवहितसंबंधादित्यक्षरार्थः. ॥ ८ ॥ भावार्थः कथानकगम्यस्तच्चेदं—बलदेवस्य गृहीतप्रव्रज्यस्य विहरत
स्तद्रूपदर्शिताक्षिप्तचित्तया कयाचिन्निजदारको घटकभ्रांत्या नियम्य रज्ज्वा कूपेऽवतारितः, तं दृष्ट्वाहो मे रूपमन-
र्थहेतुरतोऽयुक्तो मे ग्रामादिप्रवेश इति संप्रधार्याटव्यां स विजहार. तद्दर्शनदेशनाभ्यां प्रतिबुद्धा बहवोऽटवीसत्वाः,
मृगश्चैकोऽतिभक्ततया न मुमोच तत्पार्श्वं, अन्यदा समायातो दारुनिमित्तं रथकारः, समुपस्थितो भिक्षार्थं भोज-
नकाले मासपारणको बलदेवः, प्रतिलंभितुमारब्धस्तेन. चिंतितं कुरंगेण पुण्यवानयं सुलब्धमस्य जन्म योऽमुंमहा-
नुभावं पारयति. अत्रांतरे प्रबलपवनप्रेरितार्धच्छिन्नतरुणा निपत्य व्यापादिताः समुत्पन्नास्त्रयोऽपि ब्रह्मलोके
महर्द्धिकवैमानिकभावेनेति. तदेवं मद्गोचरमनुमोदनामात्रमपि महाफलं भवति. असद्विषयस्तु महाक्लेशोऽप्य-
नर्थक एवेत्याह

जं तं कयं पुरा पूर—णेण अइदुक्करं चिरं कालं ॥ जइ तं दयावरो इह। करितु तो सफलयं हुंतं ॥१०९॥

व्याख्या—यत्कृतं तप इति शेषः, पुरा पूरणेनेति पूरणनाम्ना श्रेष्ठिनातिदुष्करं चिरं कालं, यदि तद्दयापरः
सन्निह सर्वज्ञशासने स्थितोऽकरिष्यत्ततः सफलमभविष्यत्, मोक्षादिसाधकं संपद्येत. कथानकं तामलिवद् द्रष्टव्यं.
॥ ९ ॥ सर्वज्ञशासनस्थो हि कारणेऽपवादे वर्तमानोऽपि स्वशक्त्योद्यच्छन्नाराधक एवेत्याह—

कारणनीयावासी । सुट्ठुयरं उज्जमेण जइयव्वं ॥ जह ते संगमथेरा । सपाडिहेरा तया आसि ॥११०॥

व्याख्या—कारणेन जंघाबलत्वादिना नित्यवास एकत्र वसनं, तस्मिन् सुष्टुतरमतिशयेनोद्यमेन यतितव्यं यत्नः कार्यः, एवं हि क्रियमाणे यथा ते संगमस्थविराः सप्रातिहार्या देवतासंपाद्यातिशयवंतस्तदासन्, तथान्येऽपि भवंतीति गम्यते. कथानकं प्राक्कथितमिति. ॥ १० ॥ विपर्ययदोषमाह—

एगंतनियवासी । घरसरणाईसु जइ ममत्तंपि ॥ कह न पडिहंति कलिकलु--सदोसरोसाण आवाए ॥१११॥

व्याख्या—एकांतनित्यवासिनो निःकारणं सर्वदैकत्रवसनशीलाः,तथा गृहशरणादिषु भवननीव्रादिषु, आदिशब्दाद्बंधुजनादिपरिग्रहः, किं ? यदि ममत्वमपि कुर्वंतीति शेषः, ममेति निपातः, अहमस्य स्वामीत्यर्थे वर्तते, तद्भावस्तत्त्वं तदपि, आस्तां स्वयंकरणादिकं,तदा कथं न पतिष्यंति ? पतिष्यंत्येवेत्यर्थः. क्व ? इत्याह—कलिः कलहः, कलुष पापं, रोषः क्रोधः, मानाद्युपलक्षणं चैतत्, कलिश्च कलुषं चेत्यादिद्वंद्वः. त एव तेषां वा तज्जनितत्वाद्दोषाः कलिकलुषरोषदोषाः, तेषां य आपातो मीलकस्तस्मिन्निति. ॥ ११ ॥ किमित्येतदेवमत आह—

अवि कत्तिऊण जीवे । कत्तो घरसरणगुत्तिसंठप्पं ॥ अवि कत्तिआ य तं तह । पडिया असंजयाण पहे॥११२॥

व्याख्या—अविकर्त्य जीवान् , तर्वादीनां छेदादिकमकृत्वेत्यर्थः, कुतः ? गृहशरणगुप्तिसंस्थाप्यं कर्तुं शक्यं नैवेति शेषः. तत्र गृहं सदनं, शरणं नीव्रं, गुप्तिर्वृत्तिप्राकारादिका, गृहं शरणं चेत्यादिद्वंद्वः, तासां संस्थाप्यं समा-

रचनीयं पतितप्रदेरित्यर्थः. अतोऽपि संभाव्यत एतत्, कर्तित्वा स्वयं, चशब्दात्कर्तयित्वा च परैर्जीवान्, तद्गृहादिकं संस्थाप्यं तथा ये कुर्वंति, तेऽसंयतानां गृहस्थानां पथि मार्गे पतिता भवंति, तत्कर्मकारित्वाद्वेषस्य चार्किचित्करत्वादिति. ॥ १२ ॥ न केवलं गृहकर्माणि यतेर्दोषाय, किं तर्हि ? तत्संबंधमात्रमपीत्याह—

थोवोऽवि गिहिपसंगो । जइणो सुद्धस्स पंकमावहई ॥ जह सो वारत्तरिसी । हसिओ पज्जोयनरवइणा ॥११३॥

व्याख्या—स्तोकोऽपि गृहिप्रसंगो गृहस्थसंबंधो यतेः साधोः शुद्धस्य निर्मलस्य पंकं मलमावहति संपादयति. दृष्टांतमाह—यथासौ वारत्तकऋषिर्हसितः प्रद्योतनरपतिना, तथान्योऽपि गृहिसंबंधाज्जातमालिन्यो हस्यत इत्युपनयः. कथानकं पुनरत्र—सुसुमारनगरे धुंधुमारराजसुतया अंगारवत्या वादे तिरस्कृतनिष्कामितया परिव्राजिकया दर्शिततद्रूपाक्षिप्तचित्तेन दूतप्रेषणाऽदानक्रुद्धेनोज्जयिन्या आगत्य चंडप्रद्योतराजेन रुद्धं तन्नगरं, विषण्णेन राज्ञा किमत्र भविष्यतीति पृष्टो नैमित्तिकः, स प्राह निरूप्य कथयामि, ततो गतोऽसौ निमित्तग्रहणार्थं, त्रासितानि तेन रममाणानि डिंभरूपाणि, इतश्च वारत्तकनामा मुनिस्तत्रैव नागगृह स्थित आसीत्, तन्मूलं गतानि कथंचित्तानि, तेनोक्तं मा भैपुरिति, इतरेणापि श्रुतं तद्वाक्यं, कथितं च राज्ञः, गृहीत्वा तदर्थं जातावष्टंभेन तेन दत्वावस्कंदं गृहीतश्चंडप्रद्योतः, आनीतश्च स्वगेहमुक्तश्च किमिदानीं भवतः क्रियते? स प्राह यद्भवद्गृहमागतानां युज्यते तत्कुरु ? ततो वशीकृतेषु नीचेषु कृपावंतः संत इत्यालोच्य दत्ता अंगारवती तस्मै. स तया सह भ्रमन्नगरेऽल्पसामग्रीकं तदवलोक्य तां पृष्टवान् कथमहं गृहीत इति, सा प्राह निमित्तबलेन, स प्राह कथं ? ततः कथित-

स्तथा मुनिवृत्तांतः. अन्यदा स वारत्तकमुनिर्दर्शितस्तया तस्य, ततोऽसौ लोकसमक्षं हासगर्भं तमब्रवीत्–नैमित्तकक्षपक नमस्ते. ततः क मया निमित्तं प्रयुक्तमित्युपयुक्तो मुनिर्जन्मप्रभृति स्वापराधेषु, आः ज्ञातं दारकमाभिदानमिति. ततो जातपश्चात्तापोऽसौ दत्वालोचनां प्रतिक्रांत इति. तदयं सामान्येन गृहस्थसंबंधे दोषोऽभिहितः. अधुना विशेषतो युवतिसंबंधमवेत्याह––

सब्भावो वीसंभो । नेहो रइवइयरो य जुवइजणे ॥ सयणघरसंपसारो । तवसीलवयाइं फेडिज्जा ॥ ११४ ॥

व्याख्या––सद्भावस्तामामकाले यमतो विद्यमानता, विश्रंभो विश्वासः, स्नेहो रागः, रतिव्यतिकरो मदनोत्काचकारिकथाप्रबंधः, चशब्दोऽनुक्तेंगितादिसमुच्चयार्थः. युवतिजने स्त्रीलोकविषयः, तथा स्वजनगृहसंप्रसारो बंधुविषयो भवनविषयश्च, ताभिः सह पर्यालोच इत्यर्थः, किं? तपःशीलव्रतानि 'फेडिज्जत्ति' नाशयेत्. तत्र तपोऽनशनादि, शीलमुत्तरगुणाः, व्रतानि मूलगुणाः, यद्विवा हे शिष्य तव शीलव्रतानि नाशयेदिति. ॥१४॥ अन्यच्च––

जोइसनिमित्तअक्खर--कोउयआएसभूइकम्मेहिं ॥ करणाणुमोअणाहिअ । साहुस्स तवक्खओ होइ ॥११५॥

व्याख्या––ज्योतिष्कं ग्रहगणितं, निमित्तं होराज्ञानादि, अक्षराणि मातृकादीनि, कौतुकं स्नपनादि, आदेश एतद्भविष्यतीत्यादिनिर्णयकरणं, भूतिकर्म रक्षार्थं भूतिक्रिया, मंत्राद्युपलक्षणं चैतत्, ज्योतिष्कं च निमित्तं चेत्यादि द्वंद्वः, तैरविषये स्वयं प्रयुज्यमानैः कारणानुमोदनाभ्यां च, तेषां किं? साधोस्तपःक्षयो भवति, अनशना-

दितपः कुर्वतोऽप्येतन्निरतस्य तन्नश्यति विरुद्धत्वादित्यर्थः. तदिदं विज्ञायादित एव एवंविधानुष्ठानैः संगो न कार्यः. स हि दुरंत इति. ॥ १५ ॥ आह च--

जह जह कीरइ संगो। तह तह पसरो खणे खणे होइ॥ थेवोवि होइ वहुओ। न य लहइ धीइं निरुंभंतो॥११६॥

व्याख्या-यथा यथा क्रियते संगः संबंधो दुरनुष्ठानैरिति गम्यते, तथा तथा प्रसरोऽतिप्रवृत्तिरूपः क्षणेक्षणेऽपरापरकाललवे भवति गाढतरं वर्धत इत्यर्थः. बहुः खल्वेवं स्वल्पस्तु न दोषाय इति यो मन्येत तंप्रत्याह--स्तोकोऽपि भवति बहुः, प्रमादस्यानादिभवाभ्यस्तत्वात्, स चाशक्तः, पश्चान्न च नैव लभते धृतिं स्वस्थतां निरुद्ध्यमानो वार्यमाणो गुर्वादिभिरिति. ॥ १६ ॥ कथं स्वल्पोऽपि संगो बहुर्भवतीत्याह--

जो चयइ उत्तरगुणे। मूलगुणेवि अचिरेण सो चयइ॥ जह जह कुणइ पमायं। पेलिज्जइ तह कसाएहिं॥ ११७॥

व्याख्या--यस्त्यजति उत्तरगुणान् पिंडविशुद्ध्यादीन्, मूलगुणानपि प्राणातिपातविरमणादीन्, अचिरेण स्वल्पकालेन स त्यजति, यतो यथा यथा करोति प्रमादं शैथिल्यं प्रयते स्वगुणेभ्यः प्रज्वाल्यते लब्धावकाशत्वात्. तथा कषायैस्तथैव प्रमादवद्दीप्तया स्थिता ये क्रोधादयस्तैरित्यर्थः ॥ १७ ॥ व्यतिरेकमाह--

जो रथनिएण गिलइ। देहच्चाएवि न य धिइं मुयइ॥ सो साहेइ सकज्जं। जह चंडवडिंसओ राया॥ ११८॥

व्याख्या—यो निश्चयेन गाढं गृह्णाति सदनुष्ठानमिति शेषः, तथा देहत्यागेऽपि शरीरव्ययेऽपि सति न च नैव धृतिं मुंचति, स साधयति स्वकार्यं,निष्पादयत्यात्मप्रयोजनं किंचदित्याह,यथा चंद्रावतंसको राजा, तथाह्युपोषितः स रात्रौ यावत् प्रदीपः प्रज्वलति तावन्मया स्थातव्यमिति प्रतिज्ञाय कायोत्सर्गेण स्थितवान्, दासीदारिकया तु कथं स्वाम्यंधकारे स्थास्यतीत्यभिप्रायेणापरापरतैलप्रक्षेपेण सर्वरजनीं प्रज्वालितः. ततः शरीरसौकुमार्यादुपक्रांतायुष्कोऽचलितसद्ध्यानो गतो देवलोकमिति ॥ १८ ॥ किंच—

सीउण्हखुप्पिवासं । दुंस्सेज्जपरीसहं किलेसं च ॥ जो सहइ तस्स धम्मो । जो धिइमं सो तवं चरइ॥११९॥

व्याख्या—शीतं हिमं, उष्णो घर्मः, क्षुधा बुभुक्षा, पिपासा तृट्, एषां समाहारद्वंद्वः, तत्, तथा दुःशय्या निम्नोन्नता शयनभूमिः, परीषहा नानारूपपीडाः, अत्रापि स एव समाहारद्वंद्वः, तत्, तथा क्लेशं दिव्यादिकृतोपसर्गरूपं. चशब्दः समुच्चये, यः सहते क्षमते तस्य धर्मो भवति, न चैतदविशेषेणोच्यते, किं तर्हि? यो धृतिमान्निःप्रकंपचित्तः स तपः शीतादिसहनक्लेशादिकं चरत्यनुतिष्ठति. अन्यस्यार्त्तध्यानादिहेतुत्वेन धर्मक्षतिकारित्वादिति ॥ १९ ॥ केवलं सैवधृतिर्विज्ञातसर्वज्ञशासनतत्वानामवश्यंभावीनीति दृष्टांतेनाह—

धम्मामिणं जाणंता । गिहिणोऽवि दढव्वया किमुअ साहू?॥ कमलामेलाहरणे । सागरचंदेण इत्थुवमा॥१२०॥

व्याख्या—धर्ममिमं सर्वज्ञप्रणीतं जानंतो गृहिणोऽपि दृढव्रता भवंति, किमुत साधव ! तैः सुतरां दृढव्रतै-

र्भाव्यं, तन्मात्रधनत्वादित्यभिप्रायः,कमलामेलाहरणे सागरचंद्रेणात्रोपमा उपमानं, तथाह्यसौ गृहस्थोऽपि गाढनियमो जात इति. ॥ २० ॥ अत्र कथानकं--द्वारवत्यां बलदेवपौत्रस्य सागरचंद्रस्य चित्रे नारददर्शितायां नभःसेनकाय दत्तायां कमलामेलाकन्यकायां जातोऽनुरागातिरेकः, तस्य सर्वं तन्मयं पश्यतः प्रलपतः परिहासतः शांबेन स्थगिते नयने,स प्राह मुंच कमलामेले! तेनोक्तं नाहं कमलामेला,अपितु कमलामेलः,स तु प्रत्यागतचित्त प्राह मीलय तर्हि कमलां ! इदानीं छलितत्वान्निर्वोढव्येयं प्रतिज्ञेति संचिंत्य तेन विद्याबलेन विवाहकाले नीत्वोद्यानमुद्वाहिता सा. तेन च प्रद्विष्टो जातो न भःसेनकः सागरचंद्रोपरि. अथान्यदा भगवदरिष्टनेमिपादमूले धर्मं श्रुत्वा प्रतिपन्नाणुव्रतो गाढतरसंवेगात् स्थितः कायोत्सर्गेण श्मशानभ्यर्णे सागरचंद्रः, दृष्टो नभःसेनकेन,चिंतितं तेनाद्य पूरयामि स्वमनोरथान्,ततः कृत्वा मृत्तिकयार्वेष्टनं पूरितं तच्छिरः प्रज्वलितखदिरांगारैः. इतरोऽप्यचलितचित्तो गाढतरं प्रवर्धमानशुभध्यानो विमुच्य देहपंजरं गतो दिवमिति.अत्रैवार्थे दृष्टांतांतरमाह—

देवेहिं कामदेवो । गिहीवि न वि चाओ तवगुणेहिं ॥ मत्तगयंदभुयंगम—रक्खस्स घोरट्टहासेहिं ॥१२१॥

व्याख्या--देवस्य एते तत्कृतत्वाद्दैवाः, तैः कामदेवश्चंपायां श्रावको गृह्यपि न च नैव 'चाइओत्ति' शकितस्तपोगुणेभ्यश्चालयितुमिति शेषः. कैर्दैवैरित्याह--मत्तगजेंद्रभुजंगमराक्षसघोराट्टहासैः, तथाहि--शक्रवर्णनाश्रद्धानागतेन देवेन स कायोत्सर्गस्थो वैक्रियगजादिभिः कदर्थ्यमानोऽपि न क्षोभ गतो दृढव्रतत्वात्. साधवस्तु

मितरामक्षोभवंत। विशिष्टतरविवेककलितत्वात् ॥ २१ ॥

रेण चाभुक्तभोगा अप्यनर्थकं कुगतौ पतंतीति, आह च—

**भोगे अभुंजमाणावि । केइ मोहा पडंति अहरगइं ॥ कुविओ आहारत्था । जत्ताइजणस्स दमगुव्व ॥१२२॥**

व्याख्या-भोगान् शब्दादीनभुंजाना अपि अननुभवंतोऽपि केचित्प्राणिनो मोहादज्ञानात्पतंति यांति अधरगतिं नरकमित्यर्थः कुपितः क्रुद्ध आहारार्थी भोजनप्रार्थको यात्रायामुत्सवे जनस्योपरि द्रमक इवेत्यक्षरार्थः ॥२२॥ कथानकमधुना—राजगृहे महोत्सवे गते वैभारगिरिसमीपमुद्यानिकायां लोके भिक्षामलभमानः कश्चिद्द्रंकः श्रुत्वा रक्षकेभ्यो गतस्तत्रैव. तत्रापि प्रमत्ततया लोकस्यालब्धभैक्ष्यस्य जातोऽस्य तीव्रः कोपः,चूर्णयाम्येनं सर्वं दुरात्मानं जनमिति चिंतयंश्चटितः पर्वतं, खनित्रेणोन्मूलितो गंडशैलः, तेन च पतता प्रवर्धमानरौद्रध्यानश्चूर्णितो गतः सप्तमनरकपृथिवीं, लोकस्तु नष्ट इति. तदिदमविवेकविजृम्भितं विज्ञाय लब्धे विवेके तत्र यत्नः कार्य इति. आह च—

**भवसयसहस्सदुलहे । जाइजरामरणसागरुत्तारे ॥ जिणवयणंमि गुणायर । खणमवि मा काहिसि पमायं ॥१२३॥**

व्याख्या—भवशतसहस्रदुर्लभे जन्मलक्षदुःप्रापे जातिजरामरणसागरोत्तारे, मोक्षरूपतत्प्रापकत्वात्, जिनवचने सर्वज्ञभाषिते गुणाकर! ज्ञानाद्युत्पत्तिस्थानइत्युत्साहनाय सबहुमानं शिष्यामंत्रणं, क्षणमपि स्वल्पकाललवमपि माकार्षीः प्रमादं शैथिल्यं,अपि तु तद्ग्रहणात्तदुक्तकरणोद्योगं विदध्या इति ॥ २३ ॥ प्रमादस्य च राग-

द्वेषौ हेतू, यत आह—

जं न लहइ सम्मत्तं। लध्धूणवि जं न एइ संवेगं ॥ विसयसुहेसु य रज्जइ । सो दोसो रागदोसाणं ॥१२४॥

व्याख्या—यन्न लभते सम्यक्त्वं तत्वार्थश्रद्धानरूपं, लब्ध्वापि तु यन्नैति न गच्छति संवेगं मोक्षाभिलापं, विपयसुखेपु च शब्दादिजनितेपु रज्यते प्रसक्तो भवति यत्स दोपोऽपराधो रागद्वेपयोः नान्यस्य, तयोरेव जीवान्यथात्वकारित्वादिति. ॥ २४ ॥

तो बहुगुणनासाणं । सम्मत्तचरित्तगुणविणासाणं ॥ न हु वसमागंतव्वं । राग दोसाणपावाणं ॥ १२५ ॥

व्याख्या—तत्तस्माद्बहुगुणः श्रेष्ठतरो नाशोऽपगमो ययोस्तौ तथा तयोः, तथा सम्यक्त्वचारित्रगुणानां सम्यग्दर्शनचरणज्ञानानां विनाशः प्रलयो यत्र तथा तयोः, न हु नव वशमागंतव्यं रागद्वेपयोः पापयोः. न तदायत्तैर्भाव्यमित्यर्थः. ॥ २५ ॥ किमित्यत आह—

नवि तं कुणइ अमित्तो सुट्ठुवि सुविराहिओ समच्छोवि॥जं दोवि अणिग्गहिया। करंति रागो य दोसो य।१२६।

व्याख्या—नापि नैव तत्करोति अमित्रः शत्रुः सुष्ठ्वप्यतिशयेनापि सुविराधितः प्रबलीकृतः समर्थोऽपि लब्धात्मलाभोपीत्यर्थः. तस्य तथाभूतस्याप्येकभविकमरणहेतुत्वात् . यत्किं ? द्वावप्यनिग्रहीतावुच्छृंखलौ कुरुतो

रागश्च, चशब्दो द्वयोरपि तुल्यबलतां द्योतयति. ॥ २६ ॥ कि कुरुत इत्याह—

इह लोए आयासं । अजसं च करेंति गुणविणासं च ॥ पसवंति अ परलोए । सारीरमणोगए दुक्खे ॥१२७॥

व्याख्या—इह लोके आयासं शरीरमनसोर्व्यायामं, अयशश्च अश्लाघां लोकतः कुरुतः, गुणविनाशं च चरणादीनामिह लोके एव पूज्यत्वहेतूनां प्रलयं चेत्यर्थः. प्रसुवाते जनयतः परलोकेऽन्यजन्मनि नरकपातादिहेतुत्वात् शारीरमनोगतानि देहजमानसानि दुःखानीति. ॥ २७ ॥ एवं स्थिते—

धिद्धी अहो अकज्जं । जं जाणंतोऽवि रागदोसेहिं ॥ फलमउलं कडुअरसं । तं चेव निसेवए जीवो ॥१२८॥

व्याख्या—धिग्धिगिति संभ्रमे द्विर्वचनं, अहोशब्दः खेदे, पश्यत यूयमिति पार्श्वस्थामंत्रणे वा, अकार्यं धिक्कारार्हं कष्टमेतत्, यज्जानन्नपि रागद्वेषाभ्यां फलमसत्प्रवृत्तेः कार्यमतुलं महत्कटुकरसमुग्रविपाकं, तथापि तदेव तत्कारणभूतमसच्चेष्टितं निषेवते जीवः प्राणीति. ॥ २८ ॥ तथाहि—

को दुक्खं पाविज्जा? कस्स व सुक्खेहिं विम्हओ हुज्जा? ॥ को व न लभिज्ज मुक्खं । रागद्दोसा जइ न हुज्जा ॥१२९॥

व्याख्या—को दुःखं प्राप्नुयात्? हेत्वभावान्न कश्चित्, कस्य वा सौख्यैः प्राप्तैर्विस्मय आश्चर्यबुद्धिर्भवेत्? न कस्यचित्, विबधकाभावेन सुलभत्वात्. अत एव को वा न लभेत मोक्षं शिवं? रागद्वेषौ यदि न भवेतामिति. ॥ २९ ॥ तदिदं रागद्वेषावधिकृत्योक्तं, अधुना तत्प्रकृतीरुद्दिश्याह—

माणी गुरुपडणीओ। अणच्छभणिओ अमग्गचारी य ॥ मोहं किलेसजालं। सो खाइ जहेव गोसालो ॥१३०॥

व्याख्या--मानी गर्वितो, गुरुप्रत्यनीक आचार्यप्रतिकूलः, अनर्थभूतो दुःशीलत्वादनेकापायपूरितः, अमार्गचारी उत्सूत्रकर्तव्यः, चशब्दः समुच्चये, एवंविधो यः स्यात् स किं ? मुधायां भवं मौधं निष्प्रयोजनमेव, एवशब्दस्येह संबंधः, क्लेशजालं शिरस्तुंडमुंडनतपश्चरणादिकं खेदवृंदं खादयत्यात्मसात्करोति, तत्साध्यफलाभावात्, दृष्टांतमाह, यथा गोशालः पूर्वोक्तस्वरूप एवंगुणो भगवद्वीरशिष्याभास इति. ॥ ३० ॥ किंच—

कलहणकोहणसीलो भंडणसीलो विवागसीलो य ॥ जीवो निच्चुज्जलिओ। निरत्थयं संयमं चरइ ॥१३१॥

व्याख्या--कलहनं राटिकरणं, क्रोधनं स्वपरयोः क्रोधजननं, ताभ्यां शीलं समाधानं यस्य स तथा,तथा भंडनशीलो लकुटादियुद्धं समाधानः, विवादशीलो राजकुलादौ व्यवहारे स्वरतरप्रवृत्तिः, चशब्दः स्वगतानेकभेदद्योतकः. एवंविधो जीवो नित्योज्ज्वलितः सदा क्रोधाध्मातो निरर्थकं निःप्रयोजनं संयमं चरतीति ॥३१॥ किमित्य त आह--

जह वणदवो वणं दव--दवस्स जलिओ खणेण निद्दहइ ॥ एवं कसायपरिणओ। जीवो तवसंजमं दहइ १३२

व्याख्या--यथा वनदवः काननाग्निर्वनं 'दवदवस्सत्ति' त्वरितंत्वरितमिति क्रियाविशेषणं, ज्वलितः समिद्धः क्षणेन स्वल्पेन कालेन निर्दहति विशेषेण भस्मीकरोति, एवं कषायपरिणतः क्रोधाद्यनुगतो जीवस्तपःप्रधानः संय-

मस्तपःसंयमस्तं दहतीति. सांप्रतं तदुवाहःकर्तव्यस्तपःसंयमविनाश इयत्ता विभाणपुस्तावत्सवधगाथामाह—

परिणामवसेण पुणो । अहिओ ऊणयरओ व हुज्ज खओ ॥ तहवि ववहारमित्तेण । भण्णइ इमं जहाथूलं ।१३३।

व्याख्या—परिणामवशेन तीव्रमंदाद्यध्यवसायायत्ततया पुनः प्रतिपादिताद्विशिष्टः कथमधिकोऽमल ऊनतरको वा हीनतरो वा भवेत् क्षयः, तपःसंयमयोरिति शेषः. कः? तथापि व्यवहारमात्रेण भण्यते इदं वक्ष्यमाणं यथा स्थूलं बादरदृष्ट्या न निश्चीयत इत्यर्थः ॥ ३३ ॥ किं तत्?—

फरुसवयणेण दिणतवं । अहिक्खिवंतो अ हणइ मासतवं।वरिसतवं सवमाणो । हणइ हणंतो अ सामण्णं१३४

व्याख्या—परुषवचनेन कर्कशवचसा दिनतपो दिवसकृतमनशनादि, उपलक्षणत्वात्संयमं च हंति, एवं सर्वत्र योज्यं. अधिक्षिपन् जात्यादिभिर्हीलयन् मासतपः, तथा वर्षातपः शपमान आक्रोशन् हंति, घ्नंस्ताडयंस्तु पुनः श्रामण्यं सर्वपर्यायमिति ॥ ३४ ॥

अह जीविअं निकिंतइ । हंतूण य संजमं मलं चिणइ ॥ जीवो पमायबहुलो । परिभमइ अजेण संसारे॥१३५॥

व्याख्या—अथ जीवितं प्राणधारणं निकृंतति छिनत्ति मारयतीत्यर्थः, तथा हत्वा चशब्दात्सकलकालजनितं संयमं, मलं पापं चिनोति बध्नाति, जीवः प्रमादबहुलः सन् परिभ्रमति येन पापेन हेतुभूतेन संसारे इति॥३६॥

अक्कोसणतज्जणाताडणाय अवमाणहीलणाओ अ ॥ मुणिणो मुंणियपरभवा । दढप्पहारिव्वि विसहंति ॥१३६॥

व्याख्या—आक्रोशो वचनैः शपनं, तर्जना साक्षेपमंगुल्यादिभिर्निर्भ्रंछनं, ताडना रज्ज्वादिभिः कुट्टनं आक्रोशश्च तर्जना च ताडना चेत्यादिद्वंद्वः, ते तथा, अपमान क्रियया परिभवः, हीलना जात्यादिभिर्निंदा, अनयोरपि द्वंद्व एव, चः समुच्चये, ता मुनयो मुणितपरभवा ज्ञातपरलोकमार्गा विपहंते क्षमंते, किंवदित्याह, दृढप्रहारिवत् ॥३६ ॥ तथाहि-स पल्लीपतिः सन् पतितो ग्रामे, तच्चौरैर्विलुप्यमानैरेकस्य धिग्जातेः स्नानायगतस्य गृहाद्दारटनां सब्राह्मणीनां पृथुकानामानीय पायसं भक्षितुमारब्धं. समागतो भट्टः, एतं वृत्तांतं श्रुत्वा रुपा गृहीत्वार्गलां गत्वा तन्मध्ये तान् प्रहर्तुमारब्धोऽसौ ब्राह्मणः, व्यापादितास्तेन कतिचिच्चोराः, ततो जातरोपेण दृढप्रहारिणा करवालेन स द्विधा कृतः, अंतरागता सडिंभा गर्भवती ब्राह्मण्यपि तेन व्यापादिता, इतस्तस्या गर्भः स्फुरंस्तत्र पतितः. तद्दर्शनाद्विग्मामतिपापकारिणं, कुतो मे शुद्धिरिति जातोऽस्य गाढः पश्चात्तापः. ततो भवितव्यतयामाद्य सुगुरुं तद्देशनया जातविवेको निःक्रांतोऽसौ यावत्तं गर्भं स्फुरंतं स्मरामि तावन्मया न भोक्तव्यमिति गुर्वनुज्ञातो गृहीत्वाभिग्रहं तस्मिन्नेव देशे प्राग्विराधितजनैराक्रोशादिभिः प्रतिक्षणं खलीक्रियमाणोऽपि जानन् त्वनिर्णयत्वाददीनमनस्को विहृत्य कंचित्कालं निरशनः प्रक्षाल्य पापं गतः शिवमिति. अन्यच्च—

अहमाहओत्ति न य पडि—हणंति सत्ताऽवि न य पडिसवंति ॥ मारिज्जंताऽवि जई । सहंति साहस्समल्लुव्व १३७

व्याख्या--अधमैर्नीचैराहता मुष्टयादिभिरिति हेतोर्न च नैव प्रतिघ्नंति, सप्ताअपि न च नैव प्रतिशपंत, आक्रोशिता अपि तान्नाक्रोशंतीत्यर्थः. किं बहुना ? मार्यमाणा अपि यतयः सहंते सहस्रमल्लवत् ॥ ३७ ॥ स हि वीरसेननामा पदातिः सन् जीवनं दीयमानमपि राज्ञा त्वयि तुष्टे सर्वं शोभनं भविष्यतीत्यभिधाय नाग्रहीत्. अन्यदा प्रात्यंतिककालसेनोपद्रुते राजनि सभागते कस्तं निग्रहीष्यतीत्यभिदधाने स प्राहाहं भवदादेशात्. राजाहैवं कुरु ? ततः कृतप्रणामो गत्वैकाकी बध्ध्वानीतवांस्तं. राज्ञापि जातप्रमोदातिरेकेण सश्लाघमनेकग्रामलक्षदानपूर्वकं दत्तं सहस्रमल्ल इत्यभिधानं,जातोऽसौ राजान्यदा सुदर्शनाचार्यसमीपे धर्ममाकर्ण्य जातवैराग्यो निःक्रांतः, क्रमेण प्रतिपन्नजिनकल्पोऽसौ दृष्टः कालसेनेन, सोऽयं दुरात्मा, अपनयाम्यस्याधुना पौरुषमिति वदता पुरुषैः कदर्थयितुमारब्धस्तेन. ततो मन्निमित्तमेते वराका दुर्गतिं यास्यंतीति करुणापरीतचित्तत्वात् प्रबलशुद्धध्यानो मृत्वा गतः सर्वार्थसिद्धिमिति. तदयं महात्मा प्राणप्रहाणेऽपि न क्षांतेश्चलितः, युज्यते चेदं साधूनां, यत आह--

दुज्जणमुहकोदंडा । वयणसरा पुव्वकम्मनिम्माया ॥ साहूण ते न लग्गा । खंतीफलयं वहंताणं ॥१३८॥

व्याख्या--दुर्जनमुखं खलवक्त्रं कोदंडं धनुरिव येषां, ततो निर्गमास्ते तथा, वचनान्येव भेदकत्वात् शरा बाणा वचनशराः, पूर्वकर्मनिर्मिताः पुराकृतकर्मजनिताः साधूनां ते न लग्नाः, भूतनिर्देशः स्थितमेतदिति ज्ञापनार्थः, अन्यथा न लगंति न लगिष्यंतीत्यपि द्रष्टव्यं, क्षांतिरेव तन्निवारणदक्षत्वात्फलकं, तद्वहतां धारयतामिति. ॥३८॥ अन्यथाविवेकिनः क्रोधावकाशः, न विवेकिन इत्याह--

पत्थरेणाहओ कीवो । पत्थरं डक्कुमिच्छइ ॥ मिगारिओ सरं पप्प । सरुप्पत्तिं विमग्गइ ॥ १३९ ॥

व्याख्या—प्रस्तरेण पाषाणेन आहतः क्लीवः श्वा प्रस्तरं दष्टुं रोषतो भक्षयितुमिच्छति, न च शक्नोति. मृगारिस्तु सिंहः पुनः शरं बाणं प्राप्य भेदकत्वेनासाद्य शरोत्पत्तिं, कुतोऽयमायात इति विमृगयति विशेषेण निभालयतीत्यर्थः. ॥ ३९ ॥ तथा अविवेकी केनचित्कदर्थ्यमाणः श्ववत्प्रस्तरे तदपकाराय यतते, विवेकी तु मृगारिवन्मूलोत्थानमन्वेषयन्नेवं भावयति--

तह पुव्विं किं न कयं। न बाहए जेण मे समत्थोऽवि?॥ इण्हिं किं कस्सव कुप्पि—मुत्ति धीरा अणुप्पिच्छा॥१४०॥

व्याख्या--तथा पूर्वं जन्मांतरे किं न कृतं येन न बाधते न पीडयति कुशलकर्मणा हेतुभूतेन, 'मेत्ति' मां समर्थोऽपि प्रभविष्णुरपि, आस्तां नीचादिः, अतो ममैवायं दोषः, न कदर्थयितुः, इदानीं कुप्यामः-किमिति निःकारणं कुप्यामः? कस्य चोपरि कुप्याम इति पर्यालोच्य धीरा महात्मनः 'अणुप्पेच्छन्ति' अविह्वला भवंतीति. ॥ ४० ॥ तदेवं द्वेषिणि द्वेषत्यागोऽभिहितः, अधुनानुरागिण्यपि स्वजनादिके रागत्यागं दृष्टांतेनाह---

अणुराएण जइस्सऽवि । सियायपत्तं पिया धरावेइ ॥ तहवि य खंदकुमारो । न बंधुपासेहिं पडिबद्धो ॥१४१॥

व्याख्या--अनुरागेण स्नेहेन यतेरपि सतः सितातपत्रं धवलछत्रं पिता जनकोधारयति, तथापि स्कंद-

ऽपि प्रतिबंधकारणे सति स्कंदकुमारो न बंधुपाशैः स्वजनस्नेहबंधनैः प्रतिबद्ध इति ॥ ४१ ॥ अत्र कथानकं—श्रावस्त्यां कनककेतो राज्ञः सुतः स्कंदकुमारो विजयसेनाचार्यसमीपे धर्ममाकर्ण्य भवविरक्तचित्तो बहूपायैः पितरं प्रत्याय्य निःक्रांतः. पितापि स्नेहातिरेकेणाद्यदिनादारभ्याप्तपुरुषेण शुभ्रातपवारणं तस्योपरि धारयांचकार. क्रमेण प्रतिपन्नजिनकल्पो गतोऽसौ काचीनगर्यां,दृष्टश्च गोचरे प्रविष्टो बालकालानीतया सुंदाभिधानया लघुतरभगिन्या, ततो हृदयस्फुरितकथितबंधुभावां सुचिर स्निग्धदृष्टया निरीक्षमाणां प्रत्यभिजानन्नपि स्नेहलेशेनाप्यस्पृष्टचित्तो निर्गतोऽसौ व्यापादितश्च किलेर्ष्यया तत्पतिना. सापि विज्ञाय व्यतिकर ग्रहग्रहीता सती प्रगुणीकृता नानोपायैर्मंत्रिभिरिति. सांप्रतममुमेवार्थं दृढयन्नाह—

गुरु गुरुतरो य अइगुरु। पियमाईअवच्चपियजणसिणेहो॥चिंतिज्जमाणगुविलो। चत्तो अइधम्मतिसिएहिं ।१४२।

व्याख्या—गुरुर्गुरुतरोऽतिगुरुः क्रमेण पितृमात्रपत्यप्रियजनस्नेहः, तत्र पित्रा सह माता पितृमाता, सा चापत्यानि च प्रियजनश्चेति द्वंद्वः, तेषु तद्विषयः स्नेह इति समासः ततः पितृमातृस्नेहो गुरुर्दुस्त्यजत्वात्, अपत्यस्नेहो गुरुतरो दुस्त्यजतरत्वात्. प्रियजनो भार्याभगिन्यादिर्यतस्तत्र गाढश्चित्तविश्रामः, ततस्तत्स्नेहोऽतिगुरुः, तद्वियोगस्य मरणादिहेतुत्वात. एष च चिंत्यमानो गुपिलः, सर्वोऽपि पर्यालोच्यमानो गहनो दुरंतभवकारत्वात्. अतस्त्यक्तोऽसावतिधर्मतृषितैर्दृढधर्मलंपटैः साधुभिर्विरुद्धत्वात्तस्येति ॥ ४२ ॥ तथाहि—

अमुणियपरमत्थाणं । बंधुजणसिणेयवइयरो होइ ॥ अवगयसंसारसहाव—निच्छयणं समं हिययं ॥१४३॥

व्याख्या—अमुणितपरमार्थानाममज्ञाततत्त्वानां बंधुजनस्नेहव्यतिकरः स्वजनानुरागसंबंधो भवति अवगतो ज्ञातः संसारस्वभावस्य भवस्वरूपस्य विशारारुरूपतया निश्चयो निर्णयो येषां ते तथा तेषां पुनः समं तुल्यं स्नेहद्वेषरहितं हृदयं सर्वत्र भवतीति ॥ ४३ ॥ किं चेह लोकेऽप्यनर्थहेतुत्वाद्बंधूनां निर्निमित्तास्तद्गोचरः स्नेह इति दृष्टांतैः प्रतिपिपादयिषुर्द्वारगाथामाह—

माया पिया य भाया। भज्जा पुत्ता सुही य नियगा य ॥ इह चेह बहुविहाइं। करंति भयवेमणस्साइं ॥१४४॥

व्याख्या—माता पिता, चशब्दाः समुच्चये, भ्राता भार्या पुत्राः सुहृदो मित्राणि निजकाः स्वजना इहैव बहुविधानि कुर्वंति भयवैमनस्यानि त्रासमनोदुःखानीति समासार्थः, अवयवार्थं तु पुनः प्रतिद्वार वक्ष्यति ॥४४॥ तत्राद्यद्वारमधिकृत्याह—

माया नियगमइवि—गप्पियंमि अत्थे अपूरमाणंमि॥ पुत्तस्स कुणइ वसणं। चुलणी जह बंभदत्तस्स ॥१४५॥

व्याख्या—माता जननी निजकमतिविकल्पिते स्वीयबुद्धिचर्चिते अर्थप्रयोजनेऽपूर्णमाणेऽसघटति पुत्रस्य करोति व्यसनमापदं, चुलनी यथा ब्रह्मदत्तस्येत्यक्षरार्थः. ॥ ४५ ॥ कथानकमथा मने ब्रह्मराजे तत्पत्नी चुलिनी कामांधा

दीर्घनाम्ना तन्मित्रेण सह विनष्टा. विज्ञाता धनुमन्त्रिणा, व्युत्पादितस्तेन तत्सुतो ब्रह्मदत्तः काककोकिला... योगदर्शनेन, दत्तश्च सहचरस्तस्य वरधनुरात्मतनयः. तथापि कुतश्चिद् ज्ञात्वा तं व्यतिकरं चिंतितं भविष्यति मे रतिविघ्नः, ततोऽमुमेव ब्रह्मदत्तं व्यापादयामीति जनापवादक्षालनार्थमुद्वाहितः कांचित्कन्यकां, प्रवेशितः पूर्वरचितजतुगृहे, दापितोऽलक्ष्योऽग्निः, मंत्रिसुतेन प्राग्नचितप्रयोगेण निष्कासितो भूमिखातेन गतो देशकालिकयेति. पितृद्वारमभिकृत्याह—

सव्वंगोवंगविगत्तणाओ । जगडणविहेडणाओ अ ॥ कासी य रज्जतिसिओ । पुत्ताण पिया कणयकेऊ १४६

व्याख्या—सर्वांगोपांगविकर्तनाः समस्तावयवच्छेदनाः, जगडनविहेठनाश्च कदर्थनविबाधाश्च अकार्षीत् कृतवान्, चशब्दात्कारितवांश्च. राज्यतृषितो वर्धमाना ममैते राज्यं हरिष्यंतीत्यभिप्रायेणेत्यर्थः, पुत्राणां पिता कनककेतुर्नाम राजा ॥ ४६ ॥ स हि विविधयातनाभिर्जातान् स्वसुतान् मारितवान्. पश्चात्तेतसुतमंत्रिणा महादेव्या दारिका जाता सा च मृतेतिव्याजेन कनकध्वजस्तत्सुतः स्वगृहे निधाय रक्षितः, स च तस्मिन् मृते राज्येऽभिषिक्त इति. अधुना भ्रातृद्वारमुद्दिश्याह—

विसयसुहरागवसओ । घोरो भायाऽवि भायरं हणइ ॥ आहाविओ वहत्थं । जह बाहुवलिस्स भरहवई॥१४७॥

व्याख्या—विषयसुखरागवशकः शब्दादिसुखसमृद्धिपराधीनो घोरो भयानकः सहरणग्रहणात् भ्रातापि भ्रातरं

हंति. अधावितोऽभिमुखं गतो वधार्थं व्यापादननिमित्तं यथा बाहुबलिनो भरतपतिश्चक्रवर्ती. कथानकं प्राक्कथितमिति ॥ ४७ ॥ सांप्रतं भार्याद्वारं विवृण्वन्नाह—

भज्जाऽवि इंदियविगार—दोसनडिया करेइ पइपावं ॥ जह सो पएसिराया । सूरियकंताई तह वहिओ॥१४८॥

व्याख्या—भार्यापि पत्न्यपि,आस्तामन्याः. इंद्रिविकारदोपनटिना चक्षुरादिविकृत्यपराधविगोतापिता करोति पापं भर्तारं मारयतीत्यर्थः. यथासौ प्रदेशिराजः सूर्यकांतया तथा विपदानप्रकारेण वधितो मारितः. प्राक्कथितमिदमपि कथानकमिति. ॥ ४८ ॥ पुत्रद्वारोद्देशेनाह—

सासयसुक्खतरस्सी नियअंगसमुब्भवेण पियपुत्तो ॥ जह सो सेणियराया । कोणियरण्णा खयं नीओ ॥ १४९ ॥

व्याख्या—तरो वेगस्तद्विद्यते यस्यासौ तरस्वी,शाश्वतसौख्ये मोक्षसुखे तरस्वी क्षायिकदर्शनत्वात् शाश्वतसौख्यतरस्वी. स किं ? निजकांगसमुद्भवेन पुत्रेणेत्यर्थः, प्रियः पुत्रो यस्येति प्रियपुत्रः सन् यथासौ श्रेणिकराजः कोणिकराजेन क्षयं नीतः,तथान्योऽपि नीयत इत्यक्षरार्थः ॥४९॥ भावार्थः कथानकादवसेयस्तच्चेदं—राजगृहे श्रेणिकराजपत्न्याश्चेल्लणाया गर्भदोपाद्भर्तुरंत्रभक्षणे दोहदमभूत्. पूरितं तदंधकारे कृत्रिमांत्रैर्मंत्रिणा. जातश्चोज्झितो दुष्टोऽयमिति दारकस्तया गृहोपवने, दृष्टः श्रेणिकेन समर्पितो धात्र्याः, कृतमशोकचंद्र इति नाम. तस्य चोज्झितस्य कुक्कुटेनांगुली मनाग्भक्षितासीत्. तत्पीडया रुदतोऽतिस्नेहेन तस्य श्रेणिको तामंगुलीं पिता चूषितवान्.

प्रगुणाभूता च सा काना जाता, तदुद्धारणात्सा कोनिक इत्याकारिता. पश्चात्कोनिकाय राज्य [illegible] विहल्लाभ्यामष्टादशचक्रो हारः कुंडलयुग्मं हस्तिरत्नं च दत्तं. अज्ञाततदभिप्रायस्योत्पन्नः कोनिकस्य मत्सरः, ततोऽसौ सामंतान् सहायीकृत्य श्रेणिकं स्वपितरं बध्ध्वाचारकेऽक्षिपत्. कशाना शतेन च स कदर्थयति तं प्रतिदिनं क्रोधावेशात्. अन्यदा भुंजानस्योत्संगोपविष्टेन तस्य सुतेन भाजने मूत्रितं, मनागपमार्ग्य भुक्तं तत्तेन, चेल्लणां च प्रत्युक्त भो दृष्टो ममापत्यस्नेहः! मा गदगदवागाह यत्तवोपर्यपि त्वत्पितुर्गुरुतरः स्नेहोऽभूत्तत्फलमनुभवति स इदानीं. स प्राह कथं? तयापि कथितस्तस्य पूर्ववृत्तांतः. ततो जातपश्चात्तापः स्वयमेव गृहीत्वा निगडखंडनार्थं परशुं गतः कारागृहं. आगच्छन् स दृष्टो गुप्तिपालैः, कथितश्च तैः श्रेणिकाय. तेनापि दुःखमारेण मामयं मारयिष्यतीति संचिंत्य भक्षितं तालपुटं विषं, प्राग्बद्धायुष्कत्वान्मृत्वा गतः स प्रथमपृथिवीं, इतरोऽपि कालेन षष्ठीमिति. अधुना सुहृदुद्वारमधिकृत्याह——

लुद्धा सकज्जतुरिआ। सुहिणोवि विसंवयंति कयकज्जा॥ जह चंदगुत्तगुरुणा। पव्वयओ घाइओ राया ॥१५०॥

व्याख्या—लुब्धा लोभवंतः स्वकार्यार्थं त्वरिताः सोत्साहाः स्वकार्यत्वरिताः सुहृदोऽपि विसंवदंति अन्यथा भवंति कृतकार्या निष्पादितप्रयोजनाः संतः, यथा चंद्रगुप्तगुरुणा चाणाक्येन पर्वतको म्लेच्छाधिपतिर्घातितो राजा. स हि तेन नंदोच्छेदार्थं सुहृत्त्वेन गृहीत्वानीतः, पश्चान्निष्कासिते नंदे, अधिष्ठिते पाटलिपुत्रे, अभिषिक्ते चंद्रगुप्ते

राजनि, परिणते राज्ये,अयमधराज्यहर इति नोपेक्षणीयः,प्रकाश च मार्यमाणे स्यात्प्रकृतिविराग इत्यालोच्य विषभावितकन्यापरिणायनद्वारेण मारितः पर्वतकश्चाणाक्येन. तथान्योऽपि कृतकार्येण मार्यते सुहृदित्युपनयः. ॥५०॥ निजकद्वारमधिकृत्याह--

निययाऽवि निययकज्जे। विसंवयंतंमि हुंति खरफरुसा॥जह रामसुभूमकओ। वंभक्खत्तस्स आसि खओ॥१५१॥

व्याख्या--निजका अपि बंधवोऽपि निजककार्ये स्वप्रयोजने विसंवदति विघटमाने भवंति खरपरुषाः खराः कर्मणा निष्ठुराः परुषा वाचा कर्कशा इति भावः. यथा रामसुभूमकृतो ब्रह्मक्षत्रस्य, समाहारद्वंद्वैकवद्भावादासीत् क्षयः.इह च यथायोगं संबंधः,रामकृतः क्षत्रक्षय इहासीत्,सुभूमकृतस्तु ब्रह्मक्षय इत्यक्षरार्थः.॥५१॥अधुना कथानकं--गजपुरेऽनंतवीर्यराजभार्याया भगिनी रेणुकाभिधाना परिणीता जमदग्नितापसेन. सान्यदायाता गजपुरे भगिनीसमीपे,राज्ञा च समुत्पादितस्तस्यास्तनयः,नीता ऋषिणा सा सपुत्रा. तस्याश्च विद्याधरदत्तपरशुविद्यो रामाख्यः पूर्वं ज्येष्ठतनय आसीत्,तेन कुलकलंकभूतेयमिति जातक्रोधेन व्यापादिता सा ससुता.तत् श्रुत्वानंतवीर्येणागत्यपैराश्रमो विनाशितः,रामेणापि तच्छिरश्छिन्नं परशुना.जातोऽनंतवीर्यसुतः कार्तवीर्यो राजा.तेनाकर्ण्य वृत्तांतं जातमत्सरेणागत्य हतो यमदग्निः,रामेणाप्यसाविति.कार्तवीर्यभार्या तारासन्नगर्भा भयात्प्रपलायमाना गता तापसाश्रमं.तत्र च विह्वलत्वात्पतितो निष्पन्नदारको भूमिं गृह्णात्स्येन.कृतं तद्द्वारेण तस्य नाम सुभूम इति. रामेणापि

पृष्टस्तेन नैमित्तिकः कुतो मे मरणमिति. स प्राह यत्सन्निधानादेताः स्थालस्थिता दंष्ट्रा पायसीभविष्यंति तत इति. ततस्तदुपलंभार्थं कारितं तेन सिंहासनस्याग्रतो निवेश्य स्थालमवारितसत्रं. इतश्च नैमित्तिकसूचितसुतावरत्वान्मेघनादविद्याधरेण सेव्यमानो गतो वृद्धिं सुभूमः. स मातरमपृच्छत् किमियानेव लोक इति. तत् श्रुत्वा वचो रुदितं तया, सोऽवाचदंब किमेतत् ? तया कथितस्तस्य वृत्तांतः. ततोऽसावभिमानेन गतो गजपुरं, प्रविष्टः सत्रमंडपं, अधिष्टितं सिंहासनं, पायसीभूता दंष्ट्रा भक्षयितुमारब्धाः. श्रुतं तद्रामेण, समागतस्तत्र स सबलः, ततः सुभूमपुण्यानुभावाद्यः प्राक् क्षत्रियसन्निधाने जज्वाल स विध्यातः परशुः, प्रहरद्बलं भग्नं मेघनादेन, परशुरामंप्रत्युपस्थितो भुक्त्वा गृहीतस्थालः सुभूमः, कृतं तद्दैवतया तच्चक्रं. ततस्तेन तं निपात्य राज्यमधिष्टायैकविंशतिवारान्निर्ब्राह्मणीकृत्य पृथिवीं गतः सप्तमपृथिवीमिति. यतोऽदः स्वजनस्नेहपर्यवसानमतः—

कुलघरनियसुहेसु अ।सयणे अ जणे य निच्च मुणिवसहा॥विहरंति अणिस्साए।जह अज्जमहागिरी भयवं१५२

व्याख्या—कुलगृहनिजकसुखेषु कुटुंबभवनात्मीयमातेषु.चशब्दाद्देशादौ च, स्वजने बंधुवर्गे,जने सामान्यलोके चशब्दो निर्विशेषताद्योतनार्थो,नित्यं सदा अनुस्वारलोपात् , अथवा नित्यमुनिवृषभाःस्थिरमुनिवृषभाः सुसाधवो विहरंत्यनिश्रया।निरालंबनतया,न कुलादीन्निश्रां कृत्वेत्यर्थः,दृष्टांतमाह–यथार्यमहागिरिर्भगवान्.स हि व्यवच्छिन्नेऽपि

जिनकल्पे आर्यसुहस्तिनि गच्छं निक्षिप्य गच्छनिश्रयैव जिनकल्पिक इव विजहार. अन्यदा पाटलिपुत्रेऽभिनवश्रावको वसुभूतिः श्रेष्ठी स्वजनधर्मकथार्थं आचार्यसुहस्तिसूरिं गृहे नीतवान्. तस्मिन् कथयति प्रविष्ट आर्यमहागिरिर्गोचरे. तं दृष्ट्वा कृतं तेन संभ्रमेणाभ्युत्थानं. निर्गते च तस्मिन् वसुभूतिरब्रवीत् भगवन्! किं भवतामप्याचार्याः? ततस्तैः कथितः सबहुमानस्तद्वृत्तांतश्चर्या च. गतः सुहस्ती. द्वितीयदिने तेनापि कारितमुज्झितधर्मकाद्यन्नपानं गृहे गृहे. ततो दत्वोपयोगं विज्ञाततत्वतया गोचरान्निवर्त्यार्यसुहस्तिनंप्रत्याहुरार्यैस्त्वयानेषणा कृता, सोऽवोचत् कथं? तेनोक्तं गतदिने त्वया यदभ्युत्थानमकारि तत इत्यभिधाय गतः क्षेत्रांतरे स भगवानिति ५२किंच—

रूवेण जुव्वणेण य। कन्नाहि सुहेहिं वरसिरीए य ॥ न य लुब्भंति सुविहिया। निदरिसणं जंबुनामुत्ति ॥१५३॥

व्याख्या—रूपेण सुंदरेण हेतुभूतेन, तथा यौवनेनोदग्रेण, चशब्दात्कलाभिश्च कन्याभिः सुगुणाभिः सुखैः मातैर्गृहश्रिया च नैव लुभ्यंति लोभं यांति सुविहिताः साधवः, निदर्शनं दृष्टांतस्ते जंबूनाम इति. ॥ ५३ ॥ कथानकं प्राक्कथितं. अत एवैहिकसुखनिःपिपासेन सुगुरुनियंत्रितबहुसाधुमध्ये स्थातव्यमिति उपदिशन्स्तत्कारिद्वारेणाह—

उत्तमकुलप्पसूया। रायकुलवडिंसगाऽवि मुणिवसहा ॥ बहुजणजइसंघट्टं। मेहकुमारु व्व सहंति ॥१५४॥

व्याख्या—उत्तमकुलप्रसूताः ... राजकुलावतंसका अपि प्रधानतया तिलकभू...

वा, बहवो जना नानादेशजाः, साधुलोकाः तत्कारिततया यस्मिन् स तथा. बहुजनश्चासौ यतिसंघट्टश्चेति समासः, तं मेघकुमार इव सहेत इति ॥ ५४ ॥ अत्र कथानकं—राजगृहे श्रेणिकनृपस्य अभयकुमाराराधितदेवपूरितमेघदुर्दिनदोहदाया भार्याया धारिण्याः सुतो मेघकुमारो भगवत्समीपे निःक्रांतः. स संकटवसतौ द्वारदत्तसंस्तारकः साधुभिश्चरणघट्टितः शैक्षकत्वादचिंतयन्ममैते गृहिणः प्रियवचनादिकमुपचारमकार्षुः, अधुना चैवं मां परिभवंति तद्वरं गृहस्थतेति भग्नचित्तः प्रभाते गतो भगवदंतिकं. वंदित्वोत्थितो भगवताभिहितो मेघकुमार! विरूपकस्तेऽभिप्रायः, न स्मरसि? यद्भवानितस्तृतीयभवे गजः सन् वनदवभयात्तटे प्रविशन् पंकमग्नः प्राग्विराधितगजेन दशनाभ्यां भिन्नो महादुःखेन मृतः सप्तरात्रेण समुत्पन्नः पुनः करितया. संजातजातिस्मरणेन दवरक्षणार्थं कृतं त्वया स्थंडिलत्रयं. लग्ने दवे धावता त्वया दृष्टं तत्सत्वसंघातपूरितं. प्रविष्टश्च तत्र कथंचित्, कर्णकंडूयनार्थमुदस्तचरणेन त्वया दृष्टोऽधस्ताच्छशकः, तत्करुणया स्थितस्त्वं तथैवाहोरात्रत्रयं. इतो मृतो जातस्त्वमयं श्रेणिकतनय इति. एतदाकर्ण्य जातिस्मरणेन सह संजातोऽस्य पश्चात्तापः, पतितो भगवच्चरणयोरब्रवीच्चाद्यप्रभृति सर्वावयवेषु साधुचरणैर्मृद्यमानेष्वपि मया न मनोदुःकृतं विधेयमित्यभिग्रहं कृतवान्. निर्वाहितं च तेन तन्महात्मना, अनुपाल्य द्राघीयःपर्यायं स गतः सर्वार्थसिद्धिमिति.दुष्करश्च क्षुद्रजंतुभिर्गच्छे वासः, यतः—

अवरुप्परसंवाहं । सुक्खं तुच्छं सरीरपीडा य ॥ सारण वारण चोयण । गुरुजण आयत्तया य गणे॥१५५॥

व्याख्या—परस्परं संवाधोऽन्यान्यघट्टनं भवति, तथा सौख्यं वैषयिकं तुच्छं न किंचित्, कारणाभावात् पीडा च परीषहोदयस्यावश्यं भावित्वात्. तथा स्मारणवारणचोदनाश्च भवंति. तत्र विस्मृते कचित्कर्तव्ये दं न कृतमिति स्मारणा, अकर्तव्यानां निषेधो वारणा, उक्तमप्यकुर्वति असकृत्खरमधुरवचनैः प्रवर्तनं चोदना. गुरुजनायत्तता च गणे गच्छे गुरुमनापृच्छ्योच्छ्वासव्यतिरेकेण न किंचित्कर्तुं लभ्यते इति ॥ ५५ ॥ एवं तर्हि कृतं गच्छे—[illegible] स्येव धर्मं कुर्यामिति यो मन्येत तंप्रत्याह—

मो ? । सच्छंदगईमईपयारस्स ॥ किं वा करेइ इक्को । परिहरउ कहं अकज्जं वा? ॥१५६॥

एकस्य कुतो धर्मः ? किंभूतस्य ? स्वच्छंदसा निजाकूतेन गतिमतिप्रचारो बहिश्चेष्टाबुद्ध्योः प्रसरो तथा तस्य, किंवा करोत्वेकः कृत्यं, परिहरतु कथमकार्यं वा अकृत्यमुपायाभावात्, वाशब्दो परस्परापे-विकल्पार्थाविति ॥ ५६ ॥ किंच—

—पडिपुच्छणचोयणा य इक्कस्स ॥ विणओ वेयावच्चं । आराहणया य मरणंते ?॥१५७॥

कुतः सूत्रार्थागमप्रतिप्रच्छनं चोदनं वा, एकस्य, तत्र सूत्रार्थागमः सूत्रार्थयोर्लाभः, प्रतिप्रच्छनं तथा प्रश्नः, चोदना व्युत्पन्नमतिस्खालना, वाशब्दः प्राग्वत्. ताः कुतः ? एकस्य प्रतिप्रच्छनमूत्रयत्-

नमस्कारप्रत्याख्यानादिमात्ररूपा, मरणांते मरणलक्षणायमानकाले कृत इति वर्तते ॥ ५७ ॥ तथा—

पिल्लिज्जेसणमिक्को। पइन्नपमयाजणाउ निच्च भयं॥काउमणोवि अकज्जं । न तरइ काऊण बहुमज्झे॥१५८॥

व्याख्या--प्रेरयेन्निर्भयत्वादुल्लंघयेत एषणां गवेषणग्रहणग्रामविषयामागमोक्तां मार्गणामेकः, प्रकीर्णप्रमदाजनादितस्ततो विक्षिप्तस्त्रीलोकात् सकाशादेकस्य नित्यभयं सदाभीतिश्चारित्रधनापहारित्वात्तस्य, व्यतिरेकमाह—कर्मोदयात्कर्तुमना अप्यकार्यं न तरति, न शक्नोति कर्तुं, बहुमध्ये नियंत्रितत्वादिति ॥ ५८ ॥ यथा—

उच्चारपासवणवंत—पित्तमुच्छाइमोहिओ इक्को॥ सद्दवभाणविहत्थो। निक्खिवइ व कुणइ उड्डाहं॥१५९॥

व्याख्या--उचारं पुरीषं, प्रश्रवणं मूत्रं, वांतं वमनं, पित्तमूर्छा पित्तोद्रेकादाकस्मिकी विह्वलता, आदिशब्दाद्वातविसूचिकादिग्रहः, एतैरकांडप्रवृत्तैर्मोहितो विधुरितशरीर एकः सद्रवभाजनविहस्तः सपानकपात्रव्यग्रकरः सन्, वाशब्दो यदिशब्दार्थो, यदि तद्भाजनं निक्षिपति विह्वलतापातेन प्रेरयति तदात्मसंयमविराधनेति गम्यते. अथागृहीतेनाचरति उचारादीनि, ततः करोत्युड्डाहं प्रवचनलाघवमिति ॥ ५९ ॥ अन्यच्च—

एगदिवसेण बहुआ। सुहा य असुहा य जीवपरिणामा॥ इक्को असुहपरिणओ। चइज्ज आलंबणं लध्धुं ॥१६०॥

व्याख्या —एकदिवसेन प्रचुराः शुभाश्चाशुभाश्च जीवपरिणामा मनोवितर्का भवंति, यदि नामैवं ततः किमि-

त्याह—एकोऽसहायोऽशुभपरिणामतः क्लिष्टाध्यवसायगतचित्तः सन् त्यजेदुज्झेत्संयममिति गम्यते, आलंबनं स्वमतिविकल्पितं किंचित्कारणं लब्ध्वा प्राप्येति ॥ ६० ॥ किंच—

सव्वजिणप्पडिकुट्ठं । अणवत्था थेरकप्पभेओ अ॥ इक्को अ सुआउत्तोवि । हणइ तवसंजमं अइरा॥१६१॥

व्याख्या—सर्वजिनैः ऋषभादिभिः प्रतिकुष्टं प्रतिषिद्धं इति समासः, एकाकित्वमिति गम्यते. तथाह्यस्मिन्सत्यनवस्था भवति प्रमादप्रचुरतया प्राणिनामपरेषामपि तथा प्रवृत्तेः,अतः स्थविरकल्पभेदश्च, अयःशलाकाकल्पतापत्तेः. किंबहुना ? एकः, चशब्दोऽवधारणार्थः, स च पर्यंते संभत्स्यते, स्वायुक्तोऽपि सुष्ठुप्रमत्तोऽपि, आस्तां परः, किं? हंति विनाशयति तपःप्रधानः संयमस्तपःसंयमस्तमचिरादेव शीघ्रमेवेत्यर्थः ॥ ६१ ॥ बहुवस्तु संविग्नाः सर्वापायान् परिहर्तुं समर्था भवंतीत्याह—

वेसं जुण्णकुमारिं । पउत्थवइअं च बालविहवं च ॥ पासंडरोहमसइं । नवतरुणिं थेरभज्जं च ॥ १६२ ॥
सविडं कुब्भधरुवा । दिट्ठा मोहेइ जा मणं इत्थी ॥ आयहियं चिंतंता । दूरयरेणं परिहरंति ॥ १६३ ॥

व्याख्या—वेश्यां गणिकां,जीर्णकुमारीमपरिणीतप्रौढां,प्रोषितपतिकांगतभर्तृकां,चशब्दाः समुच्चयार्थाः, बालविधवां बालरंडां,पाखंडेन रोधो यस्याः सा तथा तां व्रतिनीमित्यर्थः. असतीं कुलटां,नवतरुणीं प्रत्यग्रयौवनां,स्थविरभार्यां वृद्धपत्नीं च परिहरंतीति सर्वत्र क्रियासंबंधः. [illegible]

या काचिन्मनोंनःकरणं स्त्री योषितां,आत्महितं स्वस्य पथ्यं चिंतयंतो गणयंतः साधवो दूरतरेण गाढं दूरेण परि हरंति वर्जयंतीति. ॥६२॥६३॥ अयं च स्त्रीजनितापायः सकलविषयनिबंधतया गुरुतरसंसारकारणत्वादुपलक्षणत्वेन शेषापायानामुपन्यस्तः, यतः—

सम्मद्दिट्ठीवि कया–गमोवि अइविसयरागसुहवसओ ॥ भवसंकडंमि पविसइ। इत्थं तुह सच्चई नायं ॥१६४॥

व्याख्या—सम्यग्दृष्टिरपि तत्वार्थश्रद्धानयुक्तोऽपि. तथा कृतो विहितः सामर्थ्यादात्मन्यागमः श्रुतं येन स कृतागमः, असावपि, किं पुनरन्य इत्यपिशब्दार्थः. किं ? अतीवविषयेषु शब्दादिषु रागश्चेतमोऽभिष्वंगः, तस्मात् सुखं, दुःखेऽपि विपर्यासात्सुखबुद्धेस्तद्वशकस्तदायत्त इति समासः. स किं? भवसंकटे क्लिष्टसंसारे प्रविशति याति, शिष्यंप्रत्याह–अत्रार्थे तवेति विनेयपरामर्शः,सत्यकी ज्ञातमुदाहरणमिति गाथासमासार्थः ॥६४॥ कथानकमधुना–पेढालाभिधानेन विद्याधरेण स्वविद्यानिक्षेपपात्रधिया ब्रह्मचारिण्युदरजे महाचलेन क्षिपामीत्याकूतेन ज्येष्ठानामार्यायामुपपादि सुतत्वेन सत्यकी, वर्धितः स साध्वीमध्ये, गृहीतमुपश्रुत्या तेन बहु श्रुतं. अन्यदा कालसंदीपकविद्याधरेण पृष्टो भगवान् वीरः कुतो मे भयमिति. भगवतोक्तमितः सत्यकितः ततो मां रे मारयिष्यसि त्वमित्या दिहीलितः स तेन स्वचरणयोः पातितः. तेन च सत्यकेस्तस्योपर्यामर्षो बभूव . ततो दत्ताः पित्रा तस्य विद्याः,

तेनापि साधयितुमारब्धाः. ततः सिद्धया रोहिणीविद्यया तमुपसर्गयन् कालसंदीपको वारितः. तया च पुरा किल भवपंचकं यावत्सत्यकी साधयन् हत आसीत्. षष्ठे भवे षण्मासशेषायुषा सिद्ध्यंती सा तेन निषिद्धा, कथितं च तस्यै भवांतरे त्वया मे सहायः कर्तव्य इति. ततोऽतिगाढमनुरक्ता सती सा सत्यकिं प्राह त्यज त्वमधुनैकमंगं यथा तावके देहे प्रविशामीति. दर्शितमनेन निजं ललाटं, तद्विदार्य प्रविष्टया तुष्टया च तया कृतं तत्र विलोचनं. स चाचिंतयन्मदीयजननी व्रतिनी सती धर्षिता पापेनानेति व्यापादितः पेढालः, दृष्टश्च नश्यन् कालसंदीपकोऽनेन, लग्नश्च तत्पृष्टे, तेनाकारि नभसि मायामयं तद्भयसमाय त्रिपुर, वह्नियुध्ध्वा च तेन घातितोऽसौ प्रविशन् लवणे महापाताले. अन्ये तु ब्रुवते भगवच्चरणमूले तेन सार्धं क्रोधोपशमः संजात इति. ततो जातबलोत्कर्षोऽयमतिमल्लतया यथादर्शं राजादियोषितो धिग्वर्णकन्यका ऋषिपत्नीश्च भुंजानस्त्रिसंध्यं च भगवतामायतनेषु वंदनपूजनगीतनृत्यादि विदधानो यथेष्टं भुवि विचचार. अन्यदोज्जयिन्यां चंडप्रद्योतकः कः खल्वेनं पापं घातयिष्यतीति महतोऽमर्षात्सदसि न्यगादीत्. त गणिकोमा प्राह भवदादेशादहमिति. सोऽवोचदेवं कुरु! अथान्यदा निजहर्म्ये गवाक्षगा सोमा नभस्तलादवतरंतं सत्यकिंप्रति विकसितकुशेशयकर प्रसारयं त्रिविधहावभावमाविष्कुर्वती जगाद, भो सत्यके! नून त्व मुग्धांगनानामेव योग्योऽसि, न पुनर्विकसितकामकौशलानां मादृशीनां. एवं तद्वचनकौशलाकृष्टचेतास्तत्स्निग्धदृष्टिप्रहतश्चासावभिमानी निपेतेतद्गेहे. तत्सौंदर्यावर्जितहृदयस्य जातस्तस्य तस्यामनुरागोत्कर्षः, निवृत्तश्चान्यनार्यभिलापः. संजातात्यंतविश्रंभश्चाभिदधे तया स एकस्मिन्नवसरे कदा भवतो विद्या

अपसरंतीति ? इत्युक्तवत्या मस्नेहमालिंगितया तया वंचितोऽनाकलय्य योषिच्चापलं स आह निधुवनकाले इति. ततो न्यगादि तद्राज्ञे तया. राज्ञापि तद्घातार्थं नियुक्ताः पुरुषा'.मात्रवीत्कथं मां रक्षिष्यथ ? ततस्तदुदरोपरि वर्तिपद्मदलादिच्छेदद्वारेण प्रत्यायिता सा तैः.अथ गतायां च तस्यां राजा मनुजान् प्राह,भवद्भिर्द्वयमपि हतव्य, माभूदितः कश्चिदनर्थ इति ततस्तैरपि तथैव कृतं. ततस्तच्छिष्यो नंदीश्वरो विद्याभिरधिष्ठितो बृहच्छिलामाधा योपरि नगरस्याह, न भवतां मद्गुरुघातकानां मोक्षः, नूनं सर्वानपि पौरान् सनृपाश्चूर्णयिष्यामि. ततस्तदर्घदान-पुरस्सरं सनागरिको राजोवाच, प्रसीदतु भगवानजानद्भिरनुष्ठितमिति सोऽवादीद्यद्येवंस्थितयोरेतयोः पूजां प्रतिष्ठां च देवसद्मसु कुरुध्वेति. प्रतिपद्य कृतं तत्तेर्गत परां काष्ठामिति. स तु सत्यकी मृत्वा नरक जगामेति. तदेते विषया-भिष्वंगिणां दोषाः, यस्तु गृहस्थोऽपि विधिना साधून् पर्युपास्ते तद्गुणानाविर्भावयन्नाह—

सुतवस्सियाण पूया—पणामसक्कारविणयकज्जपरो ॥ बद्धंपि कम्ममसुहं । सिढिलेइ दसारनेया व ॥ १६५ ॥

व्याख्या—सुतपस्विनां शोभनसाधूनां पूजाप्रणामसत्कारविनयकार्यपर इति. अत्र पूजा वस्त्रादिभिः, प्रणामो मूर्ध्ना, सत्कारो वाचा गुणोत्कीर्तनं, विनयोऽभ्युत्थानासनदानादि'. एतान्येव'कार्याणि,'यदिवा कार्यं प्रत्यनीकोप द्रववारणादि; पूजा च प्रणामश्चेत्यादिद्वंद्वः. तत्परस्तन्निष्टः, किं ? बद्धमपि उपात्तमपि कर्म ज्ञानावरणादि अशुभं क्लिष्ट शिथिलयत्युद्वेष्टयति. कइवेत्यत्र दृष्टांतमाह, दशार्हनेतृवत् कृष्ण इवेत्यर्थः ॥ ६५ ॥ स हि भगवंतमरिष्टनेमिं सपरिकरं द्वादशावर्त्तवंदनेनाभिवंद्य संजातश्रमातिरेकः पप्रच्छ भगवन् ! त्रिभिः षष्ट्यधिकैः शतैः ...

श्रमो नाभूद्यादृगद्य साधुवंदनेन, भगवानाह कृष्ण नूनमद्य बहु साधितं भवता, क्षायिकं सम्यग्दर्शनं तीर्थकरनामगोत्रं च लब्धं, सप्तमनरकपृथिवीप्रायोग्यं च ते कर्म यदासीत्तत्तृतीयपृथिवीयोग्यं निर्वर्तितमिति. अत एवाह—

अभिगमणवंदणनमं---सणेण पडिपुच्छणेण साहूणं॥ चिरसंचियंपि कम्मं। खणेण विरलत्तणमुवेइ ॥१६६॥

व्याख्या—अभिगमनं आगच्छतोऽभिमुखं यानं, वंदन गुणोत्कीर्तनं, नमस्करण कायमनःप्रह्वता, अभिगमनं च वंदन च नमस्करण चेति द्वंद्वैकवद्भावः. तेन, तथा प्रतिपृच्छनेन शरीरपाटवादिवार्तान्वेषणेन क्रियमाणेन साधयंति ज्ञानादिभिर्मोक्षमिति साधवः, तेषां चिरसंचितमपि प्रभूतजन्मोपात्तमपि कर्म ज्ञानावरणादि क्षणेन स्वल्पकालेन विरलत्वं स्तोकत्वमुपैति प्राप्नोति, तत्कर्तुरिति गम्यते ॥ ६६ ॥ तदेवमभिगमनादिविनयः कर्मक्षयहेतुत्वात् सर्वसाधूनां विधेयः, विशेषतो गुरूणां च. तथा च कुर्वंस्तेषामपि श्रद्धां जनयतीति. आह च—

केइ सुसीला सुहमाइ। सज्जणा गुरुजणस्सऽवि सुसीसा॥ विउलं जणंति सद्धं। जह सीसो चंडरुद्दस्स ॥१६७॥

व्याख्या—केचिन्न सर्वे, सुशीलधर्मातिसज्जना इति. अत्र सुशीला विशिष्टेंद्रियनोइंद्रियसमाधानवंतः सुधर्माणः श्रुतचारित्रधर्मोपेताः,अत एवातीवसंतश्च ते जनाश्चेति सज्जनाः,सर्वप्राणिनामसृतरूपत्वात्, सुशीलाश्च ते सुधर्माणश्चातिसज्जनाश्चेति कर्मधारयः, गुरुजनस्यापि, आस्तामपरेषां, सुशिष्याः शोभनविनयाः, किं? विपुलां महतीं जनयंत्युत्पादयंती,श्रद्धां संवेगलक्षणां, क इवेत्याह, यथा शिष्यश्चंडरुद्रस्येति. ॥६७॥ अत्र कथानक—उज्ज-

ष्विन्यां चंडरुद्राभिधानः सूरिरतिरोषणप्रकृतित्वात्साधुभ्यः पृथगामांचक्रे माभूत्कोपोत्पत्तिरिति. इतश्चेभ्यसुतोऽभिनवपरिणीतो दुर्ललितगोष्ठीपरिकरः साधून् ववंदे, केलिप्रियतया तन्मित्रैः साधवोऽभिदधिरे प्रव्रजयतामुं, तैरपि शठाः खल्वेते इति दर्शितः सूरिरेभ्योऽस्माकं गुरुरिति. गतास्ते तत्समीपे तथैव चोक्तवंतः, स रोषादाह ढौकयत भूतिं ! तथा कृतं तैः, कृतोऽनेन लोचः, विलक्षीभूतास्ते तत्स्वजनभयाद्गताः स्वगृहेषु. इतरस्त्वाह भगवन् ! केलिरेव मद्भावीभूतोऽयं, तद्गच्छामोऽन्यत्र यावन्नागच्छंति मद्बंधव इति. गुरुराहाहं रात्रौ न पश्यामि, तद्गच्छ पंथानं निरूप्यागच्छ ! कृतं तत्तेन, प्रवृत्तौ रात्रौ तौ गंतुं, निम्नोन्नतस्खलनेन गुरोरभूद्रोषोत्कर्षः, हे दुष्टशिष्य कीदृशं निरूपितं त्वयेत्यादि वदता ताडितः शिष्यः शिरसि दंडेन, ततो हा नष्टभाग्येन मयायं महात्मेदृशीमवस्थां प्रापित इति जातोऽस्य संवेगः, पुनः पुनस्ताड्यमानस्य तस्य प्रवृद्धश्च, जातमचिरं शुक्लध्यानमुत्पन्नं च केवलमिति सम्यक्पथा तं नेतुमारब्धः प्रभाते च गलच्छोणितस्नपितमूर्तिं तं पश्यतः सूरेरप्यहोस्याद्यदिनदीक्षितस्यापि प्रशमप्रकर्षः ! मम तु निर्विवेकत्वमित्यादिभावतपश्चात्तापानलदंदह्यमानकर्मणोऽचिन्त्यतया जीववीर्यशक्तेरुत्पन्नं केवलमिति. तदेवंरूपेऽपि गुरौ विनयः कार्य इत्युक्ते मा कश्चिदभव्यमपि तं न त्यक्ष्यतीति तच्छिक्षणार्थमाह—

अंगारजीववहगो । कोई कुगुरूसुसीसपरिवारो ॥ सुमिणे जईहिं दिट्ठो । कोलो गयकलहपरिकिन्नो ॥१६८॥

सो उग्गभवसमुद्दे । सयंवरमुवागएहिं राएहिं ॥ करहोवक्खरभरिओ । दिट्ठो पोराणसीसेहिं ॥ १६९ ॥

व्याख्या—गाथाद्वयस्याप्यर्थः कथानकगम्यस्तच्चेदं—विजयसेनसूरेः शिष्यैः स्वप्ने शूकरो गजकलभशतपंचकेन परिवारितो ददृशे, कथितं गुरोः, सोऽवोचदभव्यः कश्चित्सुपरिकरः समागमिष्यति ततस्तद्दिन एवागतो रुद्रदेवनामाचार्यः शतपंचकेन साधूनां, कृतःचिता प्रतिपत्तिः, निशि परीक्षार्थं गुरूक्तैः स्थंडिलमार्गे प्रकीर्णाः साधुभिरंगाराः, ततः शेषागंतुकसाधवः पादपातात् किशिकिशिकाशब्दमाकर्ण्य सानुक्रोशं मिथ्यादुष्कृतमिति वदंतो निवर्ततेस्म. रुद्रदेवनामाचार्यस्तु तदाकर्णनात्सहर्षं गाढतरं ममर्द, उवाच च अर्हद्भिरेतेऽपि जीवा इत्युक्ताः. दृष्टं तत्प्रतिजागृद्भिर्मुनिभिः प्रभाते गुरुस्तच्छिष्याणुपपत्तिभिः प्रत्याय्याभव्योऽयमिति तं बहिश्चकार. कृत्वा तपस्ते गता दिवं. ततश्च्युत्वा वसंतपुरे दिल्लीपनृपतेः सर्वेऽपि सुतत्वेन संजज्ञिरे. अन्यदा गजपुरे कनकध्वजभूपतिकन्यकास्वयंवरमंडपे जग्मुस्ते. तत्रारोपितबृहद्भारं जराजीर्णशरीरं महाकाय कृतार्त्तनादं करभमेकं ददृशुः. आविर्भूत्तेषां तस्योपरि करुणा, संजातं जातिस्मरणं. तदनुसारेण विज्ञातमेतैरेषोऽसावस्मद्गुरुः, अहो विचित्रः संसारः, तादृशीं ज्ञानलक्ष्मीमवाप्य सद्भावतोऽश्रद्दधानो वराकोऽयमिमामवस्थां लेभे. अनंतं च भवं लप्स्यत इति कृपया स विमोचितः. ततस्ते सर्वेऽपि निःक्रांताः. अधुनाक्षरार्थः—अंगारजीववधक इति अंगारा एव तद्बुद्ध्या जीवाः प्राणिनस्तेषां वधको विनाशकः कश्चित्कुगुरुः कदाचार्यः सुशिष्यपरिवारः शोभनविनेयपरिवारः स्वप्ने यतिभिः साधुभिर्दृष्टः कोलः शूकरो गजकलभपरिकीर्णो लघुहस्तिपरिवारित इति. स उग्रभवसमुद्रे रौद्रसंसारसागरे भ्रमन्निति शेषः. स्वयंवरमिति भीमसेनन्यायेन स्वयंवरमंडपमुपागतैः प्राप्तै राजभिर्नृपैः करभ उपस्करभृतो

भारपूरित इत्यर्थः, दृष्टः पुरातनशिष्यैर्जन्मांतरांतेवासिजीवैरिति. ॥६८-६९॥ ननु कथमयमाचार्यपदप्राप्तोऽप्येवंविधक्लिष्टपरिणामोऽभूत? उच्यते—भवाभिनंदित्वात्, अत आह—

संसारवंचणा नवि । गणंति संसारसूअरा जीवा ॥ सुमिणगएणऽवि केई । बुज्झंति पुप्फचूला वा ॥१७०॥

व्याख्या—संसारे भवे वंचनाः स्वल्पविषयसुखगृद्धानां नरकादियातनस्थानप्राप्त्या विप्रलंभनास्ताः, नापि नैव गणयत्याकलयंति संसारशूकरा भगवत्कोलकल्पा जीवा गुरुकर्मकाः प्राणिनः, किं सर्वेऽपि नेत्याह—स्वप्नगतेनापि गमेर्ज्ञानार्थत्वात् निद्रानिमित्तज्ञानेनापि; आस्तां जाग्रद्दशावस्थाधर्मदेशनयेत्यपिशब्दार्थः, केचिल्लघुकर्मका बुद्ध्यते तत्वमिति गम्यते, पुष्पचूलावदिति ॥७०॥ अत्र कथानकं—पुष्पभद्रे नगरे पुष्पकेतुर्नृपतिः, तेन निजराज्या पुष्पवत्या यमलयुग्ममुपपादि, पुष्पचूलः पुष्पचूला च. तयोर्यौवने गाढतमस्नेहभावमुपलक्ष्य जनकोऽचिंतयत्, यद्येतन्मिथुनकं वियोक्ष्यते तदा नूनं प्राणास्त्यक्ष्यति अतोऽवियोग एव श्रेयानित्यालोच्याकरोत्सचिवादिभिर्वार्यमाणोऽपि तयोर्दांपत्यं. तन्निर्वेदेन प्रवव्राज पुष्पवती, कृत्वा च तपोऽगमद्दिवं तत्र प्रयुक्तावधेर्विज्ञाय प्राग्भवमनयोर्विषयव्यामूढयोर्भवभ्रमणं माभूदिति संचिंत्याय प्रतिबोधोपाय इति स्वप्ने दर्शयामास नरकांनस्तीव्रवेदनाविलुप्यमानान्नारकान् पुष्पचूलाया मध्यासं विबुद्धया न्यवेदि तया भर्तुः, तेनापि गते ज्ञास्यतीत्याहूय पृष्टाः पाषंडिनो नरकस्वरूपं. ते चान्योन्य विरुद्धं प्रलेपुः. तत्र च मासकल्पेनस्थितोऽन्निकासुतनामा सूरिः, तमाहूय पप्रच्छे. स दृष्टाद्विशिष्टतरमाचचक्षे. साबोचत् किं भगवतापि स्वप्नो दृष्ट. गुरुराह न स्वप्नः किंतु सर्वज्ञा

व्याख्या—गाथाद्वयस्याप्यर्थः कथानकगम्यस्तच्चेदं—विजयसेनसूरेः शिष्यैः स्वप्ने शूकरो गजकलभशतपंचकेन परिवारितो ददृशे, कथितं गुरोः, सोऽवोचद् भव्यः कश्चित्सुपरिकरः समागमिष्यति ततस्तद्दिन एवागतो रुद्रदेवनामाचार्यः शतपंचकेन साधूनां, कृतःचिता प्रतिपत्तिः. निशि परीक्षार्थं गुरूक्तैः स्थंडिलमार्गे प्रकीर्णाः साधुभिरंगाराः. ततः शेषागंतुकसाधवः पादपातात् किशिकिशिकाशब्दमाकर्ण्य सानुक्रोशं मिथ्यादुष्कृतमिति वदंतो निवर्ततेस्म. रुद्रदेवनामाचार्यस्तु तदाकर्णनात्सहर्षं गाढतरं ममर्द, उवाच च अर्हद्भिरेतेऽपि जीवा इत्युक्ताः. दृष्टं तत्प्रतिजागृद्भिर्मुनिभिः प्रभाते गुरुस्तच्छिष्यानुपपत्तिभिः प्रत्याय्याभव्योऽयमिति तं बहिश्चकार. कृत्वा तपस्ते गता दिवं. ततश्च्युत्वा वसंतपुरे दिल्लीपनृपतेः सर्वेऽपि सुतत्वेन संजज्ञिरे. अन्यदा गजपुरे कनकध्वजभूपतिकन्यकास्वयंवरमंडपे जग्मुस्ते. तत्रारोपितबृहद्भारं जराजीर्णशरीरं महाकायं कृतार्त्तनादं करभमेकं ददृशुः. आविर्भूत्तेषां तस्योपरि करुणा, संजातं जातिस्मरणं. तदनुसारेण विज्ञातमेतैरेषोऽसावस्मद्गुरुः, अहो विचित्रः संसारः, तादृशीं ज्ञानलक्ष्मीमवाप्य मद्भावतोऽश्रद्दधानो वराकोऽयमिमामवस्थां लेभे. अनंतं च भवं लप्स्यत इति कृपया स विमोचितः. ततस्ते सर्वेऽपि निःक्रांताः. अधुनाक्षरार्थः—अंगारजीववधक इति अंगारा एव तद्बुद्ध्या जीवाः प्राणिनस्तेषां वधको विनाशकः कश्चित्कुगुरुः कदाचार्यः सुशिष्यपरिवारः शोभनविनेयपरिवारः स्वप्ने यतिभिः साधुभिर्दृष्टः कोलः शूकरो गजकलभपरिकीर्णो लघुहस्तिपरिवारित इति. स उग्रभवसमुद्रे रौद्रसंसारसागरे भ्रमन्निति शेषः. स्वयंवरमिति भीमसेनन्यायेन स्वयंवरमंडपमुपागतैः प्राप्तैः राजभिर्नृपैः करभ उपस्करभृतो

भारपूरित इत्यर्थः, दृष्टः पुरातनशिष्यैर्जन्मांतरांतेवासिजीवैरिति. ॥६८-६९॥ ननु कथमयमाचार्यपदप्राप्तोऽप्येवं-विधक्लिष्टपरिणामोऽभूत? उच्यते—भवाभिनंदित्वात्, अत आह—

संसारवंचणा नवि । गणंति संसारसूअरा जीवा ॥ सुमिणगएणऽवि केई । बुज्झंति पुप्फचूला वा॥१७०॥

व्याख्या—संसारे भवे वंचनाः स्वल्पविषयसुखगृद्धानां नरकादियातनस्थानप्राप्त्या विप्रलंभनास्ताः. नापि नैव गणयंत्याकलयंति संसारशूकरा भगवतैकोलकल्पा जीवा गुरुकर्मकाः प्राणिनः. किं सर्वेऽपि? नेत्याह—स्वप्नगतेनापि, गमेर्ज्ञानार्थत्वात् निद्रानिमित्तज्ञानेनापि, आस्तां जाग्रद्दशावस्थाधर्मदेशनयेत्यपिशब्दार्थः. केचिल्लघुकर्मका बुद्ध्यंते तत्वमिति गम्यते, पुष्पचूलावदिति ॥ ७० ॥ अत्र कथानकं—पुष्पभद्रे नगरे पुष्पकेतुर्नृपतिः, तेन निजराज्यां पुष्पवत्यां यमलयुग्ममुत्पादि, पुष्पचूलः पुष्पचूला च. तयोर्यौवने गाढतमस्नेहभावमुपलक्ष्य जनकोऽचिंतयत्, यद्येतन्मिथुनकं वियोक्ष्यते तदा नूनं प्राणांस्त्यक्ष्यति अतोऽवियोग एव श्रेयानित्यालोच्याकरोत्सचिवादिभिर्वार्यमाणोऽपि तयोर्दांपत्यं. तन्निर्वेदेन प्रवव्राज पुष्पवती, कृत्वा च तपोऽगमद्दिवं ततः प्रयुक्तावधेर्विज्ञाय प्राग्भवमनयोर्विषयव्यामूढयोर्भवभ्रमणं माभूदिति संचिंत्याय प्रतिबोधोपाय इति स्वप्ने दर्शयामास नरकांतस्तीव्रवेदनाविलुप्यमानान्नारकान् पुष्पचूलायाः. सध्यासं विबुद्धया न्यवेदि तया भर्तुः, तेनापि एते ज्ञास्यंतीत्याहूय पृष्टाः पाखंडिनो नरकस्वरूपं. ते चान्योन्यं विरुद्धं प्रलेपुः, तत्र च मासकल्पेनस्थितोऽन्निकासुतनामा सूरिः, तमाहूय पप्रच्छ. स दृष्टाद्विशिष्टतरमाचचक्षे. सावोचत् किं भगवतापि स्वप्नो दृष्टः? गुरुराह न स्वप्नः किंतु सर्वज्ञा-

गमः. ततः पुनरन्यदा देवेन दर्शितास्तस्तथैव तस्या देवलोकाः तेष्वपि गुरुभिः सविशेषमाख्यातेषु साह भगवन्! कथमेतेषु गम्यते ? गुरुणोक्तं सुचरितधर्मेण. ततो विमोच्य सा भर्तुरात्मानं प्राव्राजीत्, जज्ञे च मार्गज्ञा. अथ ज्ञानातिशयेन भाविमहादुर्भिक्षमाकलय्य जंघाबलपरिक्षीणतया साधून् देशांतरेषु विसृज्य सूरयस्तत्रैव तस्थुः पुष्पचूला च. सा हि राज्ञात्रैवावस्थानव्यवस्थया मुक्ता प्रव्राजितेति कृत्वा तस्याश्च गुरुर्वैयावृत्त्यं सबहुमानमाचरंत्या विशुद्धाध्यवसायतया समुत्पन्नं केवलज्ञानं,ततश्च सा यथेष्टं गुरूणां संपादयामास. ते प्रोचुर्मच्चिंतितं कथं भवती जानीते ... गाह केवलेनेति. अन्ये तु ब्रुवते किल वर्षति पर्जन्ये भक्तमादायागता तैरुक्ता कथमागतासि ? ... शेनेति. कथमिति पृच्छतां कथित केवलज्ञानावलोकेन. ततः किमहं न सेत्स्यामीति चिंतापरोऽभू ... मोन्मनीभव ? भविष्यति भवतां गगामुत्तरतां केवलमिति. ते च गच्छप्रस्थापनदिनादारभ्य व... नरतपःसंयमैरात्मानं भावयामासुः. अथैकदा गंगायां नावारूढा यत्र ते तिष्टंति तत्र तत्रासौ मध्ये स्थिताश्च मज्जितुमारब्धाः, ततः स्वमरणभयाद्रोपाच्च नाविकैः क्षिप्यमाणानां जले मदीरजीवा विनश्यतीति करुणापरीतचेतसामासादितशुक्लध्यानानामुत्पन्न केवलं क्षीणमायुः, ति. अत एवाह—

लं तवं सं—जमं च साहू करिज्ज पच्छाऽवि ॥ अन्नियसुयव्व सो नियग मट्ठमचिरेण साहेइ॥१७१॥

ख्या—यः कश्चिदविकलं संपूर्णं तपोऽनशनादि संयम च ...

श्चादपि पर्यंतकालेऽपीत्यर्थः. स किं ? अन्निकासुत इव कथानकोक्ताचार्यवत् स साधुनिजकमात्मीयार्थं प्रयोजनम चिरेण क्षिप्रं साधयति निष्पादयतीति. ॥७१॥ इह च तपःसंयमौ परमार्थसाधनहेतुत्वेनोक्तौ, तौ च भोगत्यागाद्भवतः,स चार्त्ता नरा धर्मपरा भवंतीति वचनाद् दुःखितैरेव क्रियते,न सुखितैरिति यो मन्यते तं निराकर्तुमाह—

सुहिओ न चयइ भोए। चयइ जहा उक्खिओत्ति अलियमिणं॥ चिक्कणकम्मोलित्तो। न इमो न इमो परिच्चई१७२

व्याख्या—सुखमाह्लादरूपं संजातमस्येति सुखितः, तारकादित्वादितच् प्रत्ययः. न त्यजति न मुंचति भोगान् शब्दादीन् ,त्यजति यथा दुःखित इति यदेतदुच्यते अलिकमनृतमिदं,च इति शेषः, यतश्चिक्कणकर्मावलिप्तो निविडज्ञानावरणादिस्थगितो जीव इति गम्यते. ' न इमोत्ति ' नायं दुःखितः, ' न इमोत्ति ' नायं सुखितः परित्यजति भोगानित्यतो लघुकर्मतात्र कारणं, न सुखितत्वदुःखितत्वे. ॥ ७२ ॥ तथाह—

जह चयइ चक्कवट्टि। पवित्थरं तत्तियं मुहुत्तेण ॥ न चयइ तहा अहन्नो । दुब्बुद्धी खप्परं दमओ ॥१७३॥

व्याख्या—यथा त्यजति चक्रवर्ती भरतादिः प्रविस्तरं परिग्रह तावंतं षट्खंडभरतादिप्रमाणं मुहूर्तेन क्षणमात्रेण, न त्यजति तथा अधन्यो निर्भाग्यो दुर्बुद्धिः कलुषमतिः कर्परं घटादिकपालं द्रमको रंक इति ॥ ७३ । संजातकर्मविवराः पुनर्देहमपि त्यजतीत्याह—

देहो पिवीलियाहिं। चिलाइपुत्तस्स चालणीव्व कओ॥ तणुओवि मणपओसो। न चालिओ तेण ताणुवरिं॥१७४॥

व्याख्या--देहः काय पिपीलिकाभिः कीटिकाभिश्चिलातीपुत्रस्य पूर्वकथानकोक्तस्य चालनीवत्कृतः, तथापि त्यक्तोऽयमिति मत्वा तनुरपि स्वल्पोऽपि मनःप्रद्वेषश्चित्ताप्रीतिलक्षणो न चालितो नोदीरितस्तेन चिलातीपुत्रेण तासां पिपीलिकानामुपरीति ॥ ७४ ॥

पाणच्चएऽवि पावं। पिवीलियाएऽवि जे न इच्छंति॥ ते तह जई अपावा। पावाइँ करेंति अन्नस्स ॥१७५॥

व्याख्या—प्राणात्ययेऽपि आयुष्कादिविनाशेऽपि पाप द्रोहाभिसंधिलक्षणं, कारणे कार्योपचारात्, पिपीलिकाया अपि, आस्तां मनुजादेः, ये भगवन्तो नेच्छंति नाभिलषंति, ते कथ केन प्रकारेण यतयः साधवोऽपापा अवद्यरहिता. पाप करिष्यंति अन्यस्य ? अमभव एवायमित्यभिप्रायः. ॥ ७५ ॥ माभून्निरापधे पापकरण, मापराधे तु न कश्चित् क्षमत इति योमन्येत तम्प्रत्याह--

जिणपहअपंडियाणं । पाणहराणंऽपि पहरमाणाणं ॥ न करंति य पावाइं । पावस्स फलं वियाणंता ।१७६।

व्याख्या--जिनपथापंडितानां जिनप्रणीतमार्गाज्ञानां, तथा प्राणहराणामपि जीवघातकानामपि, तथा प्रहरमाणानां खड्गादिना घात ददतामपि, पुरुषाधमादीनामिति गम्यते, न कुर्वंति च पापानि तदुपरि द्रोहाभिप्रायमारणचिंतनादिरूपाणि, चशब्दात्प्रत्युत करुणां भावयंति, यथास्मन्निमित्तोऽमीषां वराकाणां नरकपात इति. पापस्य फल नरकादिक विजानतोऽवबुध्यमाना इति ॥ ७६ ॥ पापफलमेव व्यवहारतोऽभिधित्सुराह--

वहमारणअब्भक्खाण-दाणपरधणविलोवणाईणं ॥ सव्वजहन्नो उदओ दसगुणिओ इक्कसि कयाणं ॥१७७॥

व्याख्या—वधस्ताडन, मारणं प्राणच्यावनं, अभ्याख्यानदानमलीकदोषारोपणं, परधनविलोपनमदत्तपरस्वग्रहणं, वधश्च मारणं चेत्यादिद्वंद्वः. तान्यादिर्येषां मर्मोद्घट्टनादीनां तानि तथा तेषां,सर्वजन्योऽत्यंतनिकृष्ट उदयो विपाको दशगुणितः 'इक्कसित्ति' एकां वारां कृतानां विहितानां, एकवारं वधको दशवारान् वध्यत इत्यादि योजनीयं ॥ ७७ ॥

तिव्वयरे उ पओसे । सयगुणिओ सयसहस्सकोडिगुणो ॥ कोडाकोडिगुणो वा । हुज्ज विवागो बहुतरो वा १७८

व्याख्या—तीव्रतरे उत्कटतरे, तुशब्दात्कालातरांनुबंधिनि च, प्रद्वेषेऽप्रीतिलक्षणे सति शतगुणितः शतसहस्रोकोटीगुणः, शतसहस्रो लक्षं, कोटीकोटीगुणो वा, शतलक्षा कोटी, भवेद्विपाकस्तदुदयो बहुतरो वा, प्रद्वेषोत्कर्षापकर्षस्य विचित्रत्वात्, तदपेक्षया कर्मबंधविपाकस्यापि नानारूपतेत्यभिप्रायः ॥ ७८ ॥ तदिदमेवेत्य यथादित एव कर्मसंश्लेशो न भवति तथाऽप्रमादो विधेय इति. ननु किमप्रमादेन ? न हि तत्साध्यस्तत्क्षयो वा, किं तर्हि ? यादृच्छिको मरुदेवादीनां तथैवोपलभादिति दुर्विदग्धबुद्धिवचने ये मुग्धबुद्धयः प्रतिबधं विदध्युस्तान् शिक्षयितुमाह—

केइत्थ करेंतालं—बणं इमं तिहुयणस्स अच्छेरं ॥ जह नियमा खवियंगी। मरुदेवी भगवई सिद्धा ।१७८।

व्याख्या—केचिदसत्वज्ञा अत्र व्यतिकरे कुर्वंति, आलंब्यत इत्यालंबनमवष्टंभस्तदिदं वक्ष्माणं, त्रिभुवनस्याश्चर्यं कादाचित्कभावरूपत्वाददद्भुतं. यथा किं ? नियम्यते वशीक्रियते आत्मा आभ्यामिति नियमौ तपःसंयमौ ताभ्यामक्षपितांगी तपःसंयमानिष्टप्तशरीरेत्यर्थः, मरुदेवीभगवती ऋषभदेवजननी सिद्धा निष्ठितार्था जाता, तथा वयमपि सेत्स्यामः, किमप्रमादेन ? ॥ ७८ ॥ तथाहि—गजस्कंधारूढायास्तस्या भगवतश्छत्रातिच्छत्रदर्शनेन प्रमोदातिशयादुल्लसितजीववीर्यायाः कर्मक्षयः, केवलज्ञानमायुःसमाप्तिर्मोक्षप्राप्तिश्चाक्षेपेण श्रूयत इति. कथमेतद् उग्रालंबनमित्याह—

किंपि भहिंपि कयाई । एगे लद्धाहिं केहिऽवि निभेहिं ॥ पत्तेयबुद्धलाभा । हवंति अच्छेरयभूया ॥ १८० ॥

व्याख्या—यतः किमपि वस्तु वृषभादिकं प्राप्येति गम्यते, तथा कस्मिन्नपि क्षेत्रे, कदाचित्काले एके करकंड्वादयः, लब्धिभिस्तदावरणीयकर्मणां क्षयक्षयोपशमोपशमरूपाभिः कैश्चिदपि निमित्तैस्तस्यैव वृषभादेर्वस्तुनो जराजीर्णत्वादिलक्षणैः, किं ? प्रत्येकबुद्धलाभा भवंत्याश्चर्यभूताः, इत्यतो न तन्निदर्शनेनान्यैस्तपःसंयमयोः शैथिल्यं विधेयं, कादाचित्कभावरूपत्वात्तेषां. तत्रैकं वस्तुप्रति प्रत्येकं, बोधो बुद्धं, तस्य लाभो बुद्धलाभः प्रत्येकं बुद्धलाभो येषां करकंड्वादीनां ते तथा ॥८०॥ ये तु तानेवोररीकृत्य प्रत्येकबुद्धान् प्रमादिनो भवंति, अन्येभ्यश्च तच्चरितमुपदिशंति, ते स्वयं नष्टाः परानपि नाशयंतीति. आह च—

निहिसंपत्तमहन्नो । पत्थिंतो जह जणो निरुत्तप्पो ॥ इह नासइ तह पत्तेअ—बुद्धलच्छि पडिच्छंतो ॥१८१॥

व्याख्या—निधिं रत्नादिभृतभाजनं संप्राप्तं तद्धमधन्यो निर्भाग्यः प्रार्थयन्नभिलपन् यथा येन प्रकारेण जनो लोकः ' निरुत्तप्पोत्ति ' निरुद्यमस्तद्ग्रहणे बलिविधानादिक्रियाशून्य इत्यर्थः, इह लोके नश्यति, न तल्लाभभाग्भवति, हस्यते च लोकैः, तथा प्रत्येकबुद्धलक्ष्मीं करकंड्वादिघोषसमृद्धिमतीच्छन् प्रतीक्ष्यमाणो निधिकल्पं मोक्षं संयमादिविधानेनागृह्णन् सन्मार्गान्नश्यतीति. ॥ ८१ ॥ अतः प्रेक्षावता न किंचिद्दुष्टालंबनं विधेयं, यतो दुर्जयो रागादिग्रामः, सर्वदाऽविश्वासहेतुत्वात्. तथा चाह—

सोऊण गइं सुकुमालि—याए तह ससगभसगभइणीए ॥ ताव न वीससियव्वं । सेयट्ठी धम्मिओ जाव ॥१८२॥

व्याख्या—श्रुत्वाकर्ण्य गतिमवस्थां सुकुमारिकायाः, तथा शशकभसकभगिन्याः, तावन्न विश्वसितव्यं रागादीनामिति शेषः, श्वेतानि धवलानि अस्थीनि यस्यासौ श्वेतास्थी मृतो भण्यते, धर्मेण चरतीति धार्मिको यतिः, श्वेतास्थिकश्चासौ धार्मिकश्चेति समासः. स यावन्न संपन्न इत्युपस्कारः. यावच्छरीरी मुनिस्तावत्तेन रागादिभ्यो भेतव्यमिति भावः. यद्विवा श्रेयोऽर्थी मोक्षार्थी धार्मिको यतिर्यावत्तावन्न विश्वसनीयं, निष्ठितार्थेन सता विश्रंभः कार्य इत्यक्षरार्थः. ॥ ८२ ॥ अधुना कथानकं—

वसंतपुराद्राजसुतौ शशकभसकाभिधानौ निःक्रांतौ, पश्चाद्गीतार्थौ जातौ भगिनीं सुकुमारिकां तौ प्रव्राजयामासतुः. तस्याश्चोत्कृष्टरूपतयाकृष्टचेतसस्तरुणाः साध्वीप्रतिश्रये प्रविश्य तां निरीक्षांचक्रिरे.ततस्तदुपद्रवः कथितस्तयोर्महत्तरया. पश्चात्तामेकगृहे निक्षिप्य रक्षतोस्तयोस्तरुणा योद्धुमारब्धाः. ततो मन्निमित्तोऽयमनयोः क्लेश

इति धिग्मामनर्थकारिशरीरमिति वैराग्यात्प्रतिपन्नं तयानशनं. ततोऽतीवक्षीणशरीरत्वात्संजातमोहातिरेका मृतेयमिति मत्वा परिष्ठापिता बहिस्ताभ्यां. तत्र शीतपवनसंपर्कात्प्रत्यागतप्राणा दृष्टा सैकेन सार्थवाहेन. स्त्रीरत्नमेतदिति बुद्ध्याभ्यंगोद्वर्तनौषधादिक्रमेण स तां पुनर्नवीचक्रे. चकमे च स तयापि तथाभवितव्यतया कर्मवैचित्र्यादनुपकृतवत्सलोऽयमिति मत्वा, स्थिता च तेन सह कियंतमपि कालं विषयसुखमुपभुंजाना सा तत्र. अन्यदा तया दृष्टौ तौ स्वभ्रातरौ, पतिता तयोश्चरणेषु, निवेदितो वृत्तांतः, ताभ्यां विमोच्य सार्थवाहात्पुनः प्रव्राजिता सा ययौ दिवमिति. तदिदमवेत्य सर्वदायमात्मा दांतो धारणीयः, दुर्दमश्चायं, तत आह—

खरकरहतुरयवसहा। मत्तगइंदाऽवि नाम दम्मंति ॥ इक्को नवरि न दम्मइ। निरंकुसो अप्पणो अप्पा ॥१८३॥

व्याख्या—खरा रासभाः, करभा ऊष्ट्राः, तुरगा अश्वाः, वृषभा बलिवर्दाः, एतेषां द्वंद्वः. मत्तगजेंद्रा अपि मदोत्कटकरिवरा अपि, नामेति प्रसिद्धं, दम्यंते वशीक्रियते, एको नवरं यदि परं न दम्यते निरंकुशस्तपःसंयमांकुशरहितः सन्नात्मन आत्मेति. ॥ ८३ ॥ अन्यच्च—

वरं मे अप्पा दंतो। संजमेण तवेण य ॥ माऽहं परेहिं दम्मंतो। बंधणेहिं वहेहि अ ॥ १८४ ॥

व्याख्या—वरं प्रधानं मे मम यत्स्वीय आत्मा दांत इति. केन कृत्वा? संयमेन चारित्रेण च तपसेति. परमेतादृशश्च मा भूयामहं यथा कुगतौ गतः परैरन्यैर्दाम्यन् वश्यामानीयमानो भवेयं, कैः? बंधनैर्निगडादिभिः,

वधश्च लकुटादिभिरिति. ॥ ८४ ॥ अन्यच्च--

अप्पा चेव दमेयव्वो । अप्पा हु खलु दुद्दमो ॥ अप्पा दंतो सुही होइ । अस्सिं लोए परत्थ य ॥१८५॥

व्याख्या--आत्मैव दमयितव्यः, यत आत्मैव हुरवधारणे, खलुर्वाक्यालंकारे, दुर्दमः. न च बाह्यशत्रव इत्यवधारणफलं. आत्मा दमितः सुखी भवत्यस्मिन् लोके, इह के, परत्र च परलोके चेति. ॥८५॥ उच्छृंखलः पुनरयं महतेऽनर्थायेत्याह--

निच्चं दोससहगओ । जीवो अविरहिअमसुभपरिणामो ॥ नवरं दिन्ने पसरे । तो देइ पमायमयरेसु ।१८६।

व्याख्या--नित्यं सदा दोषसङ्गतो रागादिग्रस्तो जीव आत्मा अविरहिताशुभपरिणामोऽत्यक्तसंक्लिष्टाध्यवसायो न वरं केवलं दत्ते वितीर्णप्रसरे यथेष्टचेष्टायां, किं ? ततः प्रसरलाभाद्ददात्यनेकार्थत्वात्करोति प्रमादं विषयकषायप्रवृत्तिलक्षणं अतरेषु लोकागमविरुद्धेषु कर्तव्येष्विति गम्यते च. अनात्मज्ञोऽयमिहलोकक्षतिमप्यात्मनो न जानातीति ॥ ८६ ॥ आह च--

अच्चिय वंदिय पूईअ। सक्कारिय पणमिओ महग्घविओ ॥ तं तह करेइ जीवो। पाडेइ जहप्पणो ठाणं ।१८७।

व्याख्या-अर्चितो गंधचंदनादिभिर्देवतावत्,वंदितः सद्गुणोत्कीर्तनेन,पूजितो वस्त्रादिभिः,सत्कारितो अभ्युत्थानाऽदिभिः प्रणमितो मूर्ध्ना,अर्चितश्चासौ वंदितश्चासौ पूजितश्चेत्यादिकर्मधारयः. तथा महार्घितो महार्घः कृत

आचार्यादिपदस्थापनेन तद्गुणपक्षपातिभिरिति गम्यते. स तु मूढस्तथा तत्करोति किमपि दुष्टचरितं जीवः,पातंयति विनाशयति यथात्मनः संबंधि स्थानं अर्चनादिनिबधनं.पतितश्च पश्चात्तेपामपि निंद्यो भवति,स्तोकेन च बहु हारयति ॥ ८७ ॥ अत एवाह—

सीलव्वयाइं जो बहु--फलाइं हंतूण सुक्खमहिलसइ ॥ धिइदुव्वलो तवस्सी । कोडीए कागिणिं किणई १८८

व्याख्या—शीलव्रतानीत्यत्र शीलं मूलोत्तरगुणसमाधानं, व्रतान्यहिंसादीनि. तेषां पृथग्ग्रहणं प्राधान्यख्यापनार्थं,यो मंदबुद्धिर्बहुफलानि स्वर्गापवर्गदायीनि हत्वा विलोप्य सौख्य वैषयिकं तुच्छमभिलपति प्रार्थयते,स किं? धृतिदुर्बलो विशिष्टचेतः प्रतणिधानविकलस्तपस्वी वराकः सतां करुणास्पदभूतः कोट्या लक्षशतलक्षणया काकिनीं रूपकाशीतितमभागरूपां क्रीणाति गृह्णातीति ॥ ८८ ॥ न चायमात्मा विषयैस्तोषयितुं शक्यो, भोगाभ्यासमनु विवर्धंते रोगा अकौशलानि चेंद्रियाणामित्यन्यैरप्यभिधानात्. ॥ ८८ ॥ आह च—

जीवो जहामणसियं । हियइच्छियपत्थिएहिं सुक्खेहिं ॥ तोसेऊण न तीरई । जावज्जीवेण सव्वेण ॥ १८९ ॥

व्याख्या—जीवो यथामनस्कृत यथाचिंतितं हृदयेष्टप्रार्थितैर्मनोवल्लभपत्न्यादिभिः संपादितैरित्यर्थः, कैः? सौख्यैस्तोषयितु तुष्टीकर्तुं 'न तीरइत्ति' न शक्यते दिनेन, नापि मासेन, न संवत्सरेण, किं बहुना? यावज्जीवेन सर्वेण समस्तायुषापीत्यर्थः. यावच्छब्दोपादानात्प्राग्दिनादयो गम्यंत इति ॥ ८९ ॥ तथाहि—

सुमिणंतराणुभूयं । सुक्खं समइच्छियं जहा नत्थि ॥ एवमिमंपि अईयं । सुक्खं सुमिणोवमं होई ॥ १९० ॥

व्याख्या—स्वप्नांतरे स्वप्नमध्येऽनुभूतं सुक्खं, एतादृशं सौख्यं समतिक्रांतं जागरणानंतरं यथा नास्ति, एवमिदमपि जाग्रदवस्थाभावि अतीतं सौख्यं वैषयिकं स्वप्नोपमं स्वप्नतुल्यं भवति तुच्छत्वात् ॥ ९० ॥ अतो नास्था विधेया, यस्तु विदध्यात्तद्दोषदर्शनायाह—

पुरनिद्धमणे जक्खो । महुरामंगू तहेव सुयनिहसो ॥ बोहेइ सुविहियजणं । विसूरइ बहुं च हियएण ॥ १९१ ॥

व्याख्या—अत्र कथानकं—मथुरायां मंगुनामाचार्यो रसादिलोल्यान्नित्यवासं प्रतिपेदे, स मृत्वा तत्रैव नगरोपघसर ( नगरनिर्धमनिका ) प्रत्यासन्नयक्षायतनाधिष्टायकत्वेन व्यंतरो जज्ञे. विभंगेन चावलोक्य पूर्वभवं संजातपश्चात्तापोऽधुनेदं प्राप्तकालमिति संचिंत्य साधूनां वहिर्निर्गच्छतां पुरतो यक्षप्रतिमामुखान्महतीं जिह्वां निःसारयामास. ते प्रोचुः किमेवं कुरुषे ? ततः सोऽशेषं सविपादमात्मवृत्तांतमाचचक्षे, यथार्यमंगुर्भवतां गुरुर्जिह्वादोषेण मूर्छया च प्राप्तोऽहमीदृशीमवस्थां, तद्भवद्भिरपि निःस्पृहैर्भाव्यं, अहं तु पश्चात्तापेन दुःखमनुभवामीत्युक्त्वा स व्यवहितो जातः. अक्षरार्थोऽधुना—पुरनिर्धमने यक्षो, मथुरायां मंगुर्मथुरामंगुः संपन्न इति वाक्यशेषः, तथैव श्रूयते यथा श्रुतनिकष इति आगमकषपट्टको. बहुश्रुतत्वात्परीक्षास्थानमित्यर्थः. स पश्चाद्बोधयति, प्राकृतशैल्या वर्तमाननिर्देशाद्बोधितवान् सुविहितं जनं साधुलोक ' विसूरइत्ति ' खिन्नवान् बहु प्रभूतं, चः समुच्चये, हृदये

चित्तेनेति ॥ ९१ ॥ स च तदा यदचिंतयत्तदाह—

निग्गंतूण घराओ । न कओ धम्मो मए जिणक्खाओ ॥ इड्ढिरससायगुरुय—त्तणेण न य चेइओ अप्पा१९२

व्याख्या—निर्गत्य गृहात्प्रव्रज्यां गृहीत्वेत्यर्थः, न कृतो धर्मोमया जिनाख्यातः, केन हेतुनेत्याह—ऋद्धिरससातगुरुत्वेन, ऋद्धिः शिष्यादिसंपत्, रसा मधुरादयः, सातं मृदुशय्यादिसंपाद्यं सुखं, ऋद्धिश्च रसाश्च सातं चेति द्वन्द्वः, तैर्गुरुस्तदादरवान्, तद्भावस्तत्त्वं, तेन न च नैव चेतितो विज्ञात आत्मा मोहोपहतेनेति ॥ ९२ ॥—

ओसन्नविहारेणं । हा जह झीणंमि आउए सव्वे ॥ किं काहामि अहन्नो ? । संपइ सोयामि अप्पाणं॥१९३॥

व्याख्या—अवमग्नविहारेण शैथिल्यकालगमनेन, हाशब्दो दैन्ये, यथाह स्थितस्तथैव क्षीणे आयुषि सर्वस्मिन् किं करिष्यामि ! अधन्यः संप्रत्यधुना शोचयामि आत्मानं केवलमिति. ॥ ९३ ॥ कथं ?—

हा जीव ! पाव भमिहिसि । जाईजोणीसयाइं बहुयाइं । भवसयसहस्सदुलहं—पि जिणमयं एरिसं लध्धुं१९४

व्याख्या–हा दैन्ये जीव पाप दुरात्मन् ! भ्रमिष्यसि पर्यटिष्यसि, जातय एकेंद्रियाद्याः, योनयः शीतेतराद्याः, जातयश्च योनयश्चेति समासः, तासां शतानि बहूनि. भवशतसहस्रदुर्लभं जन्मलक्षदुःप्रापं, अपिः संभावनायां, जिनस्य मतं भगवदागममीदृशमाचिंत्यचिंतामणिकल्पं लब्ध्वासाद्य तदकरणादिति. ॥९४॥ अन्यच्च—

पावो पमायवसओ । जीवो संसारकज्जमुज्जुत्तो॥दुक्खेहिं न निव्विण्णो । सुक्खेहिं न न चेव परितुट्ठो१९५

व्याख्या—पापः प्रमादवशकः कपायाद्यायत्तो जीवः संसारकार्योद्युक्तो भवनिबंधनानुष्ठाननिरतो, मकारस्यागमिकत्वात्, दुःखैर्न निर्विण्णः, पुनः पुनस्तद्धेतुषु प्रवृत्तेः, सौख्यैर्न चैव परितुष्टः, तत्प्राप्तावपि तत्तृषातिरेकानिवृत्तेः, चशब्दान्मोक्षहेतुविमुखश्चेति ॥ ९५ ॥...

परितप्पिएण तणुओ । साहारो जइ घणं न उज्जमइ ॥ सेणियराया तं तह । परितप्पंतो गओ नरयं ९६

व्याख्या—' परितप्तेनेति ' निंदागर्हारूपश्चित्तखेदः परितप्त पश्चात्ताप इति भावः, तेन तनुको लघीयान् साधारः परित्राणं यदि घन गाढमप्रमत्ततया तपःसंयमयोर्नोद्यच्छति न यतते. तत्रार्थे साधर्म्यदृष्टांतमाह—श्रेणिकराजस्तत्तथात्मनिंदनप्रकारेण परितप्यमानोऽपि गतः सीमंतिकाख्यं नरकमिति. कथानकं प्राक्कथितमिति ॥ ९६ ॥ यथा च दुःखैर्निर्विण्णो जीवस्तथाहि—

जीवेण जाणि वि—सज्जियाणि जाईसएसु देहाणि ॥ थोवेहिं तओ सयलंपि । तिहुयणं हुज्ज पडिहत्थं ॥९७॥

व्याख्या—जीवेन यानि तु ' विसज्जियाणिति ' प्राकृतशैल्या लिंगव्यत्ययः, ये विसृष्टास्त्यक्ताः, तुशब्दात्यक्ष्यंते चाकृतपुण्येन जातिशतेषु. देहाः कायाः, स्तोकैस्ततः स्वल्पैस्तेभ्यो मध्यादनंतभागमात्रैः, किं ? सकलमपि त्रिभुवनं भवेत् ' पडिहत्थति ' परिपूर्णं, तथापि नास्य तोष इति. ॥९७॥ किंच—

नहदंतमंसकेस—ट्ठिएसु जीवेण विप्पमुक्केसु ॥ तेसुवि हविज्ज कइलास—मेरुगिरिसन्निभा कूडा ।९८।

व्याख्या—' नहदंतमंसकेसट्ठिएसुत्ति ' तृतीयार्थे सप्तमी, ततश्च यानि नखदंतमांसकेशास्थीनि जीवेन विप्रमुक्तानि अनादौ भवे इति शेषः, तैः किं ? भवेयुः कैलासमेरुगिरिसन्निभा महापर्वततुल्या इत्यर्थः, कूटा स्तूपा इति. ॥ १९८ ॥ तथा—

हिमवंतमलयमंदर—दीवोदहिधरणिसरिसरासीओ ॥ अहिअयरो आहारो । छुहिएणाहारिओ होज्जा १९९

व्याख्या—हिमवांश्च मलयश्च मंदरश्च द्वीपाश्च उदधयश्च धरण्यश्च चर्माद्या इति समासः आहारस्यातिबहुत्वख्यापको हिमवदादीनां पृथग्निर्देशः. तत्सदृशाश्च ते राशयश्चेति कर्मधारयः. ततस्तेभ्योऽधिकतरः समर्गलतर आहारोऽशनादिः क्षुधितेन बुभुक्षितेनाहारितो भक्षितो भवेदिति. ॥ ९९ ॥ तथा—

जं णेण जलं पीयं । घम्मायवजगडिएण तंपि इहं ॥ सव्वेसुवि अगडतलाय—नईसमुद्देसु नवि हुज्जा ।२००।

व्याख्या—यदनेन जीवेन जलं पीतं ' घम्मायवझघडिएणत्ति ' ग्रीष्मातपाभिभूतेनेत्यर्थः, तदपि जलमिहलोके सर्वेष्वपि अवटतडागनदीसमुद्रेषु नापि नैव भवेदिति. ॥ २०० ॥ तथा—

पीयं थणयच्छीरं । सागरसलिलाओ होज्ज बहुअयरं ॥ संसारम्मि अणंते । माऊणं अन्नमन्नाणं ॥२०१॥

व्याख्या—पीत स्तना एव स्तनकास्तेषां क्षीरं दुग्धं, तत्किं ? सागरसलिलात्समुद्रपानीयाद्बहुतरमधिकतरं भवेत्स्यात्, क ? संसारेऽनंते अनुपलब्धप्राग्भाव इत्यर्थः, मातॄणां जननीनामन्योन्यानामपरापरजन्मभाविनीना-

मिति ॥ २०१ ॥ तथा—

पत्ता य कामभोगा । कालमणंतं इहं सउवभोगा ॥ अप्पुव्वंपि व मन्नई । तहवि य जीवो मणे सुक्खं २०२

व्याख्या—प्राप्ता लब्धाः, चशब्दः पूर्वोक्तसमुच्चये, काम्यंत इति कामाः शब्दादयः, त एव भोगास्ते कालमनंतं देवादिभवेषु इह लोके च. प्राप्ता अपि कार्पण्यादिना कारणेन अनुपभोगाः स्युरत आह—सह उपभोगेनाउ भवेन वर्तंत इति सोपभोगाः, अपूर्वमिव प्रागदृष्टमिव मन्यते आकलयति तथापि च जीवो मनसि हृदये सौख्यं वैषयिकमिति ॥ २०२ ॥ अन्यच्च—

जाणइ अ जहा भोगिड्ढिसंपया सव्वमेव धम्मफलं ॥ तहवि दढमूढहियओ । पावे कम्मे जणो रमइ २०३

व्याख्या—जानाति विकल्पेन, चशब्दात्पश्यति साक्षात् , यथा भोगाः शब्दादयस्तेषामृद्धिरुत्कर्षस्तस्याः संपत्संपत्तिरुत्कृष्टविषयप्राप्तिरित्यर्थः, यदिवा किमनेन ? सर्वमेव यच्छुभमुपलभ्यते सुगुरुसंपर्कादि, तद्धर्मफलं. तथापि जानन्नपि दृढमूढहृदयो गाढं विपर्यस्तचित्तः सन् पापे कर्मणि जनो रमत इति ॥ २०३ ॥ किंच—

जाणिज्जइ चिंतिज्जइ । जम्मजरामरणसंभवं दुःक्खं॥न य विसुएसु विरज्जइ । अहो सुबद्धा कवडगंठी ।२०४।

व्याख्या—ज्ञायते गुरुपदेशादिना, चिंत्यते बुद्ध्यते पुनःपुनर्मनसि स्थाप्यते, किं तदित्याह—यदुत जन्मजरामरणसंभवं दुःखं विषयसंगाद्भवतीति शेषः, न च नैव विषयेभ्यः शब्दादिभ्यः पंचम्यर्थे सप्तमी, विरज्यते विर·

कैर्भूयते, जनैरिति गम्यते. अहो इति विस्मये, सुबद्धः सुनियंत्रितो दुर्मोच्यकत्वात्, कपटग्रंथिर्मोहरूपः, तथा चोक्तं—विविच्य बाधाः प्रभवंति यत्र । न तत्र मिथ्यामतयश्चरंति ॥ संसारमोहस्त्वयमन्य एव । दिग्मोहवत्तत्त्वधिया सहास्ते ॥ १ ॥ २०४ ॥ तथा—

जाणइ य जह मरिज्जइ । अमरंतंपि हु जरा विणासेई ॥ न य उव्विग्गो लोगो । अहो रहस्सं सुनिम्मायं ।२०५।

व्याख्या—जानात्येव यथा म्रियते, अम्रियमाणमपि च जरा वयोहानीरूपा विनाशयति, वलीपलितांगभंगादिना विसंस्थुलयति, तथापि न च नैव उद्विग्नो लोको भवभयविरहात्, अहो इति विवेकिनामामंत्रणे, पश्यत युयं रहस्यं गुह्य ' सुनिम्मायंति ' सुनिर्मितं दुर्भेदमित्यर्थः ॥ २०५ ॥ तथाहि—

दुपयं चउप्पयं बहु——पयं च अपयं समिद्धमहणं वा ॥ अणवकएऽवि कयंतो । हरइ हयासो अपरितंतो२०६

व्याख्या—द्विपदं नारकादिकं, चतुष्पदं गवादि, बहुपदं च भ्रमरादि, अपदं सर्पादि, समृद्धमीश्वरं, अधनं दरिद्र, वाशब्दात्पंडितमूर्खादिग्रहः. किमित्याह—अनपकृतेऽपि अपकाराभावेपि कृतांतः स्वायुष्कक्षयलक्षणो हरति प्राणेभ्यश्च्यावयतीत्यर्थः हताश इत्याक्रोशवचनं. अपरिश्रांतो विगतश्रम इति ॥ २०६ ॥ अन्यच्च—

न य नज्जइ सो दियहो । मरियव्वं चावसेण सव्वेण॥आसापासपरद्धो । न करेइ य जं हियं वोज्झो(बोहो)२०७

व्याख्या—न च नैव ज्ञायते स दिवसो यत्र मरिष्यत इति शेषः. अथ च मर्तव्यमेव, चशब्दोऽवधारणे, अवशेन परायत्तेन सर्वेण जंतुना एवमपि स्थिते आशापाशपरब्धो मनोरथपाशक्रोडीकृतो न करोत्येव यदनुष्ठानं हितं पथ्यमात्मनः, वध्य इव वध्यः सदा कृतांतमुखांतर्वर्तित्वादिति. ॥ २०७ ॥ तथा चाह—

संझरागजलवुब्बुओवमे।जीविए य जलबिंदुचंचले॥जुव्वणे य नइवेगसन्निभे।पाव जीव ! किमियं न वुज्झसि?॥

व्याख्या—संध्यारागश्च जलबुद्बुदश्चेति द्वंद्वः, ताभ्यामुपमा यस्य तस्मिन्नेवंविधे जीविते आयुषि सति, चशब्दो व्यवहितसंबंधः, जलबिंदुचंचले च कुशाग्रादिलग्नतोयलवचपले चेत्यर्थः. उपमाद्वयाभिधानमतितरलतादर्शनार्थ. यौवने तारुण्ये, चशब्दाद् द्रव्यनिचयादौ च नदीवेगसन्निभे सरिज्जवतुल्ये सति, हे पापजीव दुरात्मन् ! किमिदं न बुद्ध्यसे? पश्यन्नपीति ॥२०८॥ इह चाबोधो विपर्यासरूपः,स च प्रायेण गाढतरः कामाद्भवति,तथा चाह—

जं जं नज्जइ असुइं । लज्जिज्जइ कुच्छणिज्जमेयंति ॥ तं तं मग्गइ अंगं । नवरमणंगुत्थ पडिकूलो ।२०९।

व्याख्या—यद्यदिति वीप्सया सर्वसंग्रहमाह, ज्ञायते बालैरपि यदुताशुचि अशुद्ध, लज्यते येन च कुत्सनीयमेतदिति कृत्वा, तत्तत् 'मग्गइत्ति' मृगयतेऽभिलपति अंग योषिज्जघनविवरादिकमवयवं, नवरं केवलमनंगो मदनस्तत्प्रार्थनहेतुत्वात् पुरुषात्पार्थक्येन कर्तृत्वं, अत्र लोके प्रतिकूलो गाढविपर्ययरूपत्वात्प्रतिलोम इति. उक्तं च—यल्लज्जनीयमतिगोप्यमदर्शनीयं । बीभत्समुल्बणमलाविलपूतिगंध ॥ तद्याचतेंगमिह कामकृमि-

म्तदेयं । किं वा वुनोति न मनोभववामता सा ॥ १ ।तथा—

सव्वगहाणं पभवो । महागहो सव्वदोसपायट्टी ॥ कामग्गहो दुरप्पा । जेणभिभूयं जगं सव्वं ॥ २१० ॥

व्याख्या--सर्वग्रहाणां समस्तोन्मादानां प्रभव उत्पत्तिस्थानं महाग्रहो बृहदुन्मादः, 'सव्वदोसपायट्टीत्ति' सर्वदोषाणां परदाराकर्षणादीनां प्रवर्तक इत्यर्थः, कोऽसौ ? कामग्रहो मदनचित्तभ्रमो दुरात्मा दुष्टस्वभावः, येनाभिभूतं वशीकृतं जगत्सर्वमिति ॥ २०१ ।

जो सेवइ किं लहइ । थामं हारेइ दुब्बलो होइ ॥ पावेइ वेमणस्सं । दुक्खाणि य अत्तदोसेणं ॥ २११ ॥

व्याख्या--यः सेवते भजते तं कामं स किं लभते? तृप्त्यादिकं न किंचिदित्यर्थः. केवलं 'थामंति' बलं हारयति तत्सेवनात्, ततश्च दुर्बलो भवति तथा प्राप्नोति वैमनस्यं चित्तोद्वेगं,दुःखानि च क्षयव्याधिप्रभृतीनि,आत्मदोषेण स्वापराधेनेति ॥ २११ ॥ अन्यच्च--

जह कच्छुल्लो कच्छुं । कंडुयमाणो दुहं मुणइ सुक्खं ॥ मोहाउरा मणुस्सा । तह कामदुहं सुहं विंति ॥२१२॥

व्याख्या--'जह कच्छुल्लो कच्छुंति' यथा पामावान् पामां कंडूयमानो नखादिभिर्दुःखं तदुपनतिरूपं मनुते सौख्यं, तथा मोहातुरा मदनविपर्यासविह्वला मनुष्या जीवाः कामदुःखं सुखं ब्रुवते स्वतोपात्परस्मै कथयंति ॥ २१२ ॥ तेषां च गच्छति सदा।

विसयविसं हालहलं। विसयविसं उक्कडं पियंताणं ॥ विसयविसाइन्नं पिव। विसयविसविसूइया होइ ॥२१३॥

व्याख्या--विषया एव मारणात्मकत्वाद्विष हालाहलं सद्योघाति, तत्पिबतां विषयविषविसूचिका भवतीति संबंधः.किमिवेत्याह--विशदविष स्पष्टविष उत्कटं तीव्रं कालकूटादिकं पिबतां विशदविषाजीर्णमिव प्रकटविषाजरणमिव मारणात्मक विषये गोचरे विषविसूचिका तदजीर्णातिरेकलक्षणा स्या भवति, कालकूटादिविषभोजिन इव शब्दादिविषभोजिनोऽनंतसंसाररूपं तद्विपाकान्मरणं प्राप्नुवंतीत्यर्थः. ॥ २१३ ॥ अत एवाह--

एवं तु पंचहिं आस--वेहिं रयमायणित्तु अणुसमयं॥ चउगइदुहपेरंतं। अणुपरियट्टंति संसारे ॥२१४॥

व्याख्या--एवमेव वर्णितस्थित्या पंचभिः, आश्रवत्यात्मनि मगलति कर्म यैस्ते आश्रवाः, तैश्चक्षुरादिभिः प्राणातिपातादिभिर्वा, किं रजः पापमादाय गृहीत्वानुसमयं प्रतिक्षणं चतसृषु गतिषु दुःखानि चतुर्गतिदुःखानि तेषां पर्यंतः सीमा तदनुभवप्रकर्षो यस्मिन्नटने तत्तथेति क्रियाविशेषणं. अनुपर्यटंति रजोग्रहणात्पश्चाद्भ्रमंति संसारे भवे इति ॥ २१४ ॥ तथाह--

सव्वगईपक्खंदे। काहंति अणंतए अकयपुण्ण ॥ जे य न सुणंति धम्मं। सोऊण य जे पमायंति ॥२१५॥

व्याख्या--सर्वगतिप्रस्कंदान् समस्तगतिगमान् करिष्यंति अनंतके अनिधने संसारे इति गम्यते,अकृतपुण्याः संतः, के? ये च न शृण्वंति धर्मं सर्वज्ञोक्तं, श्रुत्वा च, चशब्दो समुच्चयार्थौ, ये प्रमादयंति शिथिलयंतीति.

॥ २१५ ॥ तदेप प्राप्तधर्माणां शैथिल्येऽपायो गदितः, अधुना तमादित एव ये न प्रतिपद्यंते तेषां विशेषतोऽपाय-मिति दर्शयन्नाह--

अणुसिट्ठा य बहुविहं । मिच्छदिट्ठी य जे नरा अहमा॥बद्धनिकाइयकम्मा। सुणंति धम्मं न य करेंति २१६

व्याख्या--चशब्दोऽपिशब्दार्थः, अनुशिष्टा अपि बहुविधं नानारूप मिथ्यादृष्टयश्च विपर्यस्तबुद्धयो ये नराः पुरुषा अधमा नीचा नितरां संवेगनिप्रस्कंदाननंतसंसारे करिष्यंतीत्यर्थः. यतो बद्धं स्वप्रदेशैः श्लेषितं निकाचितम-वश्यवेद्यावस्थानीतं कर्म ज्ञानावरणादि यैस्ते तथाभूताः शृण्वंति धर्मं कश्चिदपि पराभियोगात्समवसरणादि-गमनेन, न च नैव कुर्वंतीति ॥ २१६ ॥ ये तु कुर्वंति तेषां गुणमाह—

पंचेव उज्झिऊणं । पंचेव य रक्खिऊण भावेणं ॥ कम्मरयविप्पमुक्का । सिद्धिगइमणुत्तरं पत्ता ॥ २१७ ॥

व्याख्या—पंचैव हिंसादीन्युज्झित्वा परित्यज्य, पंचैवाहिंसाप्रभृतीनि स्पर्शनादीनि वा रक्षित्वा प्रतिपाल्य स्वगोचरेभ्यो रागद्वेषाकरणेन निवर्त्य वा भावेन परमार्थतः किं? रजोविप्रमुक्ताः सन्तः सिद्धिगतिं मोक्षमनुत्तरां परिप्राप्ताः प्राप्ता इति. ॥ २१७ ॥ तदिदं संक्षेपतो मुक्तिकारणमुक्त, अधुना विस्तरतस्तदभिधित्सुराह--

नाणे दंसणचरणे । तवसंजमसमिइगुत्तिपच्छित्ते ॥ दमउस्सग्गववाए । दव्वाइ अभिग्गहे चेव ॥ २१८ ॥

सद्दहणायरणाए । निच्चं उज्जुत्त एसणाइ ठिओ ॥ तस्स भवोअहितरणं । पव्वज्जाए य (स) म्मं तु ॥ २१९ ॥

व्याख्या—ज्ञानादिषु यः स्थितस्तस्य मुक्तये जन्मेति संक्षेपार्थः. तत्र ज्ञानमवबोधरूपं तस्मिन्, तथा दर्शनं श्रद्धानं, चरणं च, दर्शनं च चरणं च एकवद्भावस्तस्मिन्, तपोऽनशनादि. संयमः पृथिवीरक्षणादिः, समितय ईर्याद्याः, गुप्तयो मनःप्रभृतीनां, प्रायश्चित्तमालोचनादि, तपश्च संयमश्चेत्यादिद्वंद्वैकवद्भावस्तस्मिन्, दमश्चक्षुरादीनां निग्रहः, उत्सर्गो निर्विशेषणमनुष्ठानं, अपवादस्तदेव द्रव्याद्यपेक्षं, अत्रापि तथैव द्वंद्वः, तस्मिन् द्रव्याद्यभिग्रहे चैवेत्यत्रादिशब्देन क्षेत्रकालभावा गृह्यंते, तेष्वभिग्रहो नानारूपो नियमः, यदुतामुकं द्रव्यं कुल्माषादि ग्रहीष्ये, बहिर्गृहात्पौरुष्यां कदंल्या दत्तमित्यादिलक्षणः, चः समुच्चये, एवकारो व्यवहितः संभत्स्यत इति. तथा श्रद्धानेन सहाचरणा तस्यां नित्यं सदा उद्युक्तैषणायां निरवद्याहारगवेषणग्रहणग्रासमगोचरायां स्थितो यस्तस्य भवोदधितरणमेव, कारणे कार्योपचारात्. किं? जन्म मनुष्यतयोत्पत्तिः प्रव्रज्याया अपि, चशब्दोऽपिशब्दार्थः, व्रतांगीकरणरूपायाः, जन्म तस्यैव मोक्षाय, अन्यथा साप्यकिंचित्करी इत्यर्थः, तुशब्दादनर्थकारिणी चेति. इह च चरणग्रहणे सति तपःप्रभृतीनां ग्रहणं तस्यैव व्याख्यानार्थं, दर्शनग्रहणेऽपि पुनः श्रद्धानोपादानं सर्वमिदमाचरणीयं चरणकरणसामर्थ्याभावे तु श्रद्धेयमिति ज्ञापनार्थमिति. ॥२१९॥ अत्रैव व्यतिरेकमाह—

जे घरसरणपसत्ता । छक्कायरिऊ सकिंचणा अजया ॥ नवरं मोत्तूण घरं । घरसंकमणं कयं तेहिं ॥२२०॥

व्याख्या—ये गृहसरणप्रसक्ताः सदनाच्छादनाद्यारंभयुक्ताः, अत एव षट्कायरिपवः पृथिव्याद्युपमर्दकाः स किंचना हिरण्याद्युपेताः, अयता मुत्कलमनोवाक्कायाः, न वरं केवलं मुक्त्वा गृहं प्राक्तनं गृहसंक्रमणं कृतं तैर्लिंगग्रहणच्छ-

प्रनेति, तच महतेऽनर्थाय तेषां ॥ २२० ॥ यत आह—

उस्सुत्तमायरंतो वंधइ कम्मं सुचिक्कणं जीवो ॥ संसारे च पवड्डइ । मायामोसं च कुव्वइ य ॥ २२१ ॥

व्याख्या—उत्सूत्रमागमनिरपेक्षमाचरन्ननुतिष्ठन् अकार्यमिति शेषः, बध्नाति कर्म सुचिक्कणं निबिडं जीवस्तदुदयात्संसारं च प्रवर्धयति, 'मायामोसं चत्ति' मायामृषावादं च करोत्येव, चशब्दोऽवधारणे, शाठ्येन प्रथमं सूत्रोक्तं करिष्यामिति प्रतिपद्य पश्चात्तदकरणादिति. ॥२२१॥ उत्सूत्राचरणरताश्च पार्श्वस्थादयो भवंति, तन्मध्ये सुसाधुना न स्थेयं, यतस्तत्र तिष्ठन्—

जइ गिह्नइ वयलोवो । अहव न गिण्हइ सरीरवुच्छेओ ॥ पासत्थसंकमोऽविय । वयलोवो तो वरमसंगो ॥२२२॥

व्याख्या—यदि गृह्णाति तत्संबंध्यशनवस्त्रादीति गम्यते, ततो व्रतलोपः, आधाकर्मादिदोषदुष्टत्वादागमनिषिद्धत्वाच. अथवा न गृह्णाति ततः शरीरव्यवच्छेदः, आहाराद्यभावे तत्पातात्, न केवलं तत्संबंधिवस्त्रादिग्रहणं व्रतलोपः, किं तर्हि ? पार्श्वस्थसंक्रमोऽपि च तन्मध्यस्थानलक्षणो व्रतलोपो भगवदाज्ञाभंगरूपत्वात्. 'असंकिलिट्ठेहिं समं वसेज्जा मुणिचरित्तस्स जओ न हाणीति' वचनात्. ततो वरं श्रेयस्करोऽसंगस्तैः सहादित एवामीलक इति. ॥ २२२ ॥ किंच—

आलावो संवासो । वीसंभो संथवो पसंगो अ ॥ हीणायारेहिंसमं । सव्वजिणिंदेहिं पडिकुट्ठो ॥ २२३ ॥

व्याख्या—आलापो वचनैः, संवास एकोपाश्रयः, विश्रंभश्चिरामीलकः, संस्तवः परिचयः, प्रसंगश्च वस्त्रादिदानग्रहणव्यवहारः, किं? हीनाचारैः पार्श्वस्थादिभिः समं सह सर्वजिनेंद्रैः ऋषभादिभिः प्रतिकुष्टः प्रतिषिद्ध इति स्यात् ॥ २२३ ॥ तत्र वसतः को दोष इत्यत आह—

अन्नुन्नजंपिएहिं । हसिउद्धुसिएहिं खिप्पमाणोय ॥ पासत्थमज्झयारे । बलाऽवि जइ वाउलीहोइ ॥२२४॥

व्याख्या—अन्योन्यजल्पितैर्विकथासंबद्धपरस्परभाषणैः हसितोद्धुषितैर्हर्षोद्रेकजनितहास्यरोमांचैः क्षिप्यमाणः धर्मध्यानात्प्रेर्यमाणः, पार्श्वस्थमध्यकार इति, पार्श्वे ज्ञानादीनां तिष्ठंतीति पार्श्वस्था इति सामान्यव्युत्पत्त्यावसन्नादीनामपि ग्रहणात्पार्श्वस्थादिमध्य इत्यर्थः, बलात्कुसंसर्गसामर्थ्याद्यतिः साधुर्व्याकुली भवति, स्वधर्मस्थैर्याच्च्यवत इत्यर्थः, ॥ २२४ ॥ तदेव तावत्तन्मध्यगतस्य दोषोऽभ्यधायि, यस्तु सुसाधुमध्येऽपि तिष्ठन् मंदपरिणामतया तत्संसर्गं विदध्यात्तमधिकृत्याह—

लोएऽवि कुसंसग्गी—पियं जणं दुन्नियच्छमइवसणं॥निंदइनिरुजमंपियं । कुसीलजणमेव साहुजणो॥२२५॥

व्याख्या—एकारांतस्य प्राकृते प्रथमांतत्वाल्लोकोऽपि कुसंसर्गप्रियं इष्टकुशीलकं जनं 'दुन्नियच्छत्ति' देशीभाषया दुःपरिहितं विद्रूपवेषमिति यावत्, अतिव्यसनिनं द्यूतादिव्यसनाभिभूतं निंदति जुगुप्सते, तथा निरुद्यमं सुसाधुमध्यस्थितमपि शिथिलं प्रियो वल्लभः कुशीलजनः पार्श्वस्थादिलोको यस्य स तथा, तं एवं साधुजनः

अनुस्वारलोपाद्यथा लोकस्तथा निंदतीति ॥ २२५ ॥ स कदाचिदू दुष्टपरिणामोऽकार्यमपि कुर्यात् , ततश्च—

**निच्चं संकिय भीओ । गम्मो सव्वस्स खलियचारित्तो॥साहुजणस्स अयओ, मओऽवि पुण दूग्गइं जाइ २२६**

व्याख्या --नित्यं सदा शंकितश्चासौ जल्पांतरेऽपि मदीयमिदं जल्पत इत्युत्त्रासात्, भीतश्च गच्छतो निःश्वासनादेः शंकितभीतः, गम्योऽभिभवनीयः सर्वस्य बालादेरपि, स्खलितचारित्रः साधुजनस्यावमतोऽनभिमत इह लोके, मृतोऽपि पुनर्दुर्गतिं नरकादिकां याति, पुनःशब्दादनंतसंसारी च संपद्यत इति । २२६ ॥ कुसंसर्गदोष एव दृष्टांतमाह—

**गिरिसुयपुप्फसुआणं। सुविहिय ! आहरणकारणविहिन्नू॥वज्जेज्ज सीलविगले । उज्जुयसीले हविज्ज जई२२७**

व्याख्या—अत्र कथानकं—कादंबर्यामटव्यामेकस्मिन्न्यग्रोधतरुकोटरे द्वौ शुकौ सहोदरौ जज्ञाते, तत्रैको म्लेच्छैः स्वगृहं नीतः, स च पर्वतपल्लीसंवर्धितत्वाद्गिरिशुक इत्युच्यते, स च तत्सांगत्यवशात्क्राध्यवसायो जातः अन्यस्तु कुसुमसमृद्धतापसाश्रमवर्धितत्वात्पुष्पशुक इति. अन्यदा विपरीतशिक्षिताश्वापहृतो वसंतपुरादगमत्तत्र, राजा, तं दृष्ट्वा धावत गृह्णीत मतुरंगमं मनुष्यमिति तस्करप्रोत्साहनाय रारटयमानं गिरिशुकमाकर्णयन्नतिक्रम्य गतो राजा तापसाश्रमं, तदवलोकनात्पुष्पशुकोऽतिखिन्नोऽतिथिरागच्छति ददध्वमासनं कुरुतातिथेयमिति तापसकुमारकान् प्रोत्साहितवान्. संपादिते तैर्निर्वर्तिते च भोजने विगतखेदो नृपतिर्गिरिशुकवृत्तांतं निवेद्य तस्मै

किमेकजातीययोर्भवतोरेतावदंतरमिति तं पप्रच्छ.सोऽवोचत् संसर्गगुणात् तथाह-माताप्येका पिताप्येका। मम तस्य च पक्षिणः॥ अहं मुनिभिरानीतः। स च नीतो गवाशनैः॥१॥ गवाशनानां स गिरः शृणोति। अहं तु राजन् मुनिपुंगवानां॥ प्रत्यक्षमेतद्भवतापि दृष्टं। संसर्गजा दोषगुणा भवंति ॥ २ ॥ ततस्तुतोष राजेति. अधुनाक्षरार्थः कथ्यते--गिरिशुकपुष्पशुकयोः सुविहित शोभनानुष्ठानेति शिष्यामंत्रणं, आहरणे दृष्टांते यत्कारणं संसर्गदोषोपलक्षणलक्षणं, तद्विधिज्ञः प्रस्तुतदृष्टांतप्रकारज्ञः सन्नित्यर्थः, किं? वर्जयेः परिहरेः शीलविकलान् पार्श्वस्थादीन्, न च तद्वर्जनमात्रेण तुष्टः स्याः, किं तर्हि? उद्यतशीलः स्वयं भवेस्त्वं यतिर्मुनिरिति ॥ २२७ ॥ तदेवमसतिकारणे पार्श्वस्थादिवर्जनमभिधायाधुना कारणतस्तद्वंदनप्राप्तितस्तैश्च यत्कर्तव्यं तदाह—

ओसन्नचरणकरणं। जइणो वंदंति कारणं पप्प ॥ जे सुविइयपरमत्था। ते वंदंते निवारंति ॥ २२८ ॥

व्या०—अवसन्नचरणकरणं शिथिलतरमूलोत्तरगुणं यतयः सुसाधवो वंदंते कारणं पर्यायादिकं प्राप्यासाद्य, तत्र ये शीतलविहारिणः सुविदितपरमार्था ज्ञातागमसद्भावाः, यदुत महतेऽनर्थायेदस्माकमित्यात्मज्ञास्ते वंदमानान् सुसाधून्निवारयंति.एकवचननिर्देशे सति बहुवचननिर्देशस्तेषां संविग्नपाक्षिकतया सुंदरताज्ञापनार्थः व्यतिरेकमाह--

सुविहिय वंदावंतो। नासेई अप्पयं तु सपहाओ ॥ दुविहपहविप्पमुक्को। कहमप्प न याणई मूढो॥ २२९ ॥

व्याख्या—सुविहितान् सुसाधून् वंदयन् तद्वंदनानिषेधमकुर्वन्नाशयत्यात्मानमेव, तुशब्दस्यावधारणार्थत्वात्,

सुपथाद् ज्ञानादेर्मोक्षमार्गात्, द्विविधपथविप्रमुक्तः साधुश्रावकानुष्ठेयमार्गभ्रष्ट इति हृदयं. तथाहि—नासौ यतिः क्लिष्टपरिणामत्वात्, न गृहस्थोऽपि लिंगदर्शनात्, अतः कथमात्मानं न जानाति मूढो येन सुसाधून् वंदयतीति ॥ २२९ ॥ तदियता ग्रंथेन साधुधर्मविधिः प्रत्यपादि, इदानीं श्रावकधर्मविधिमाचष्टे—

वंदइ उभओ कालंपि । चेइयाइं थइथुई (थयरथुई) परमा॥जिणवरपडिमाघरधूव–पुप्फगंधच्चणुज्जुत्तो॥२३०॥

व्याख्या— सुश्रावको वंदते उभयकालमपि प्रातः सायं, अपिशब्दान्मध्याह्नेऽपि, चैत्यानि अर्हद्बिंबलक्षणानि, स्तवा भक्तामराद्याः, स्तुतयो याः कायोत्सर्गपर्यंतेषु दीयंते, तत्परमस्तत्प्रधानः सन्, तथा जिनवराणां प्रतिमागृहं जिनवरप्रतिमागृहं तस्मिन् धूपपुष्पगंधैरर्चनं जिनवरप्रतिमागृहधूपपुष्पगंधार्चनं, तस्मिन्नुद्युक्तः कृतोद्यम इति तथा—

सुविणिच्छियएगमई । धम्मम्मि अनन्नदेवओ अ पुणो॥न य कुसमएस रज्जइ । पुव्वावरवाहियत्थेसु ॥ २३१ ॥

व्याख्या—सुविनिश्चिता निश्चला एका अद्वितीया मतिर्यस्य स तथा, धर्मे अहिंसादिलक्षणे न विद्यतेऽन्या भगवद्व्यतिरिक्ता देवता यस्य सोऽनन्यदैवतः, चः समुच्चये, पुनःशब्दात्प्रशमादियुक्तश्च, न च नैव कुसमयेषु परसिद्धांतेषु रज्यते पूर्वापरव्याहतार्थेषु अघटमानेषु, अनेन रागागोचरतां लक्षयति ॥ २३१ ॥

दट्ठूण कुलिंगीणं । तसथावरभूयमद्दणं विविहं ॥ धम्माओ न चालिज्जइ । देवेहिं सइंदएहिंपि ॥ २३२ ॥

व्याख्या—दृष्ट्वा कुलिंगिनां शाक्यसांख्यादीनां त्रसस्थावरभूतमर्दनं पचनपाचनादौ विविधं नानारूपं-धर्मात्

सर्वज्ञोक्तात् अशेषजंतुसूक्ष्मरक्षणाभिधायकात् न चाल्यते न भ्रंश्यते देवैः मेंद्रैरपि, किं पुनर्मनुजारात ॥ २३२ ॥

वंदइ पडिपुच्छइ । पज्जुवासई साहुणो सययमेव॥पढइ सुणइ गुणेइ अ । जणस्स धम्मं परिकहेइ॥२३३॥

व्याख्या—वंदते मनोवाक्कायैः, परिपृच्छति क्वचित्संदेहे, पर्युपास्ते समीपवर्तितया, कान् ? साधून् सततमेव सदैवेत्यर्थः. पठति सूत्रं, शृणोति तदर्थं, गुणयति परावर्तयति,चशब्दाद्विमृशति च. जनस्य धर्मं परिकथयति स्वयंबुद्धोऽन्यान् बोधयति ॥ २३३ ॥

दढसीलव्वयनियमो। पोसहआवस्सएसु अक्खलिओ॥महुमज्जमंसपंचविह —बहुबीयफलेसु पडिक्कंतो ।२३४।

व्या॰शीलं विशिष्टं चेतःप्रणिधानं,व्रतान्यणुव्रतानि,नियमा अभिग्रहविशेषाः,दृढा निःप्रकंपाः शीलव्रतनियमा यस्य स तथा,पौषध आहारब्रह्मचर्यादिः,आवश्यकानि सामायिकप्रतिक्रमणादीनि नित्यकृत्यानि,तेष्वस्खलितो निरतिचारः,तथा मधुमद्यमांसपंचविधबहुविधफलेष्वेतद्विषये प्रतिक्रांतो निवृत्तः, पंचविधफलानि च वटपिप्पलोदुंबर काकंदपरीप्लक्षाणां गृह्यंते,बहुविधफलानि तु धूंताकादीनि,मध्वादीनां च नियमेभ्यः पृथग्ग्रहणं बहुदोषतासूचनार्थमिति—

नाहम्मकम्मजीवी । पच्चक्खाणे अभिक्खमुज्जुत्तो ॥ सव्वं परिमाणकडं । अवरज्झइ तंपि संकंतो ॥२३५॥

व्याख्या—अधर्मकर्मणा पापानुष्ठानेनांगारदाहादिना जीवितुं शीलमस्येति अधर्मकर्मजीवी,न तथाभूतः,प्रत्याख्याने गृहीतव्येऽभीक्ष्णमनवरतमुद्युक्तः सोत्साहः, सर्वं धनधान्यादि कृतप्रमाणं करोतीति गम्यते, कृतशब्दस्य

परनिपातः प्राकृतत्वात्. यदि चैवमपि वर्तमानोऽपराध्यति अपराधमाप्नोति कथंचित्प्रमादात्, ततस्तमपि मंक्षुः प्रायश्चित्तादिना लंघयित्वाशुभयोगप्राप्तो भवतीत्यर्थः.यद्वा 'एए छच्च समाणत्ति' प्राकृतलक्षणात् आस्तां तावद् बृहत्पापस्थानं,अपि राध्यते पच्यते यदन्नादि कुटबाद्यर्थं तदपि शंकमानस्तदीयापथादपि बिभ्यत्नित्यर्थः.—

निक्खमणनाणनिव्वाण——जम्मभूमीउ वंदइ जिणाणं॥न य वसइ साहुज ण——विरहियंमि देसे बहुगुणेऽवि॥

व्याख्या-निष्क्रमणज्ञाननिर्वाणजन्मभूमयो यासु तानि संपेदिरे ता वंदते जिनानां भगवतां संबंधिनीः,न च नैव वसति साधुजनविरहिते देशे बहुगुणेऽपि सुराजसुजलशस्यसमृद्ध्याद्यपेक्षया प्रभूतगुणेऽपि,धर्मक्षतिकारित्वादिति

परितित्थियाण पणमण । उब्भावणथुणणभत्तिरागं च ॥ सक्कारं सम्माणं । दाणं विणयं च वज्जेइ ॥२३७॥

व्याख्या—परतीर्थिकानां शाक्यादीनां प्रणमनं शिरसा,उद्भावनं परसमक्षगुणवर्णनं,स्तवनं तदेव तेषां पुरतः, भक्तिरागश्चेतमानुबंधः, पश्चाद् द्वंद्वैकवद्भावः. चः समुच्चये, सत्कारं वस्त्रादिभिः, सन्मानमनुव्रजनादिभिः. दान-मशनादीनां, विनयं च पादप्रक्षालनादिकं वर्जयतीति ॥ २३७ ॥

पढमं जईण दाऊण । अप्पणा पणमिऊण पारेइ॥असई अ सुविहिआणं । भुंजेई कयदिसालोओ ॥२३८॥

व्याख्या—प्रथमं पूर्वं यतिभ्यः साधुभ्यो दत्वा अशनादिकं पश्चादात्मना प्रणम्य तान् पारयति भुंक्ते 'असइयत्ति' अभावे सुविहितानां साधूनां भुंक्ते,चशब्दात्परिदधाति च वस्त्रादिकमकृतसंविभाग कृतदिशालोकः

साहूण कप्पणिज्जं । जं नवि दिन्नं कहिंवि किंचि तहिं ॥ धीरा जहुत्तकारी । सुसावगा तं न भुंजंति ॥२३९॥

व्याख्या--साधूनां कल्पनीयं योग्यं यदशनादिकं नापि नैव दत्तं कस्मिंश्चिद्देशकालादौ किंचित्स्वल्पमपि तस्मिन् विविधरूपे धीराः सत्ववंतो यथोक्तकारिणो विहितानुष्टानपराः सुश्रावकास्तदशनादि न भुंजते नाश्नंतीति ॥ किंच-

वसहीसयणासणभत्त—पाणभेसज्जवत्थपत्ताइं ॥ जईवि न पज्जत्तधणो । थोवावि हु थोवयं देइ ॥ २४० ॥

व्याख्या—वसतिरुपाश्रयः,शयनं काष्टमयसंस्तारकादि,आसनं पीठकादि, भक्तमोदनादि, पानं द्राक्षादीना, भैषजं तथाविधचूर्णादि, वस्त्रं क्षौमं, पात्रमलाब्वादि,आदिशब्दात्कंबलादिग्रहः. एतत् किं ? यद्यपि न पर्याप्तधनो न संपूर्णद्रविणः श्रावकस्तथापि स्तोकादपि मध्यात् स्तोकमल्पं ददाति,असंविभागितं न भुंक्त इति यावत्—

संवच्छरचाउम्मासिएसु । अट्ठाहियासु अ तिहीसु ॥ सव्वायरेण लग्गइ । जिणवरपूयातवगुणेसु ॥ २४१ ॥

व्याख्या—संवत्सरचातुर्मासिकेषु, अष्टाह्निकासु चैत्रादियात्रासु, चशब्दो व्यवहितसंबंध,तिथिषु, चतुर्दशीप्रभृतिषु किं? सर्वादरेण लगति,क्व ? जिनवरपूजातपोगुणेषु भगवदर्चने चतुर्थादिकरणे ज्ञानादिषु चेत्यर्थः ॥२४१॥

साहूण चेइयाणय । पडिणीयं तह अवण्णवायं च ॥ जिणपवयणस्स अहियं । सव्वत्थामेण वारेई ॥२४२॥

व्याख्या—साधूनां चैत्यानां च प्रत्यनीकं क्षुद्रोपद्रवकारिणं, तथा अवर्णवादिनं च वैभाष्यकरणशीलं, किं

यतुना ? जिनप्रवचनस्य अहितं शत्रूभूतं 'सव्वथामेणत्ति' समस्तप्राणेन प्राणव्ययेनापि वारयति, तदुन्नतिकरणस्य महोदयहेतुत्वादिति ॥ २४२ ॥ अधुना श्रावकगुणानेव विशेषतः कीर्तयन्नाह—

विरया पाणिवहाओ । विरया निच्चं च अलियवयणाओ ॥ विरया चोरिक्काओ । विरया परदारगमणाओ ॥

व्याख्या --श्रावका ह्येवंभूता भवंति, विरताः प्राणिवधाज्जीवमारणात्. स्थूलादिति प्रक्रमात्सर्वत्र योज्यं. विरता नित्यं च सदैव अलीकवचनादनृतभाषणात्, विरताः 'चोरिक्काओत्ति' चौर्यात्, विरताः परदारगमनात्परयोषिन्मैथुनादिति ॥ २४३ —

विरया परिग्गहाओ । अपरिमियाओ अणंततण्हाओ ॥ बहुदोससंकुलाओ । नरयगइगमणपंथाओ॥२४४॥

व्याख्या—विरताः परिग्रहाद् द्विपादेः,किंभूतादपरिमितात् परिमाणरहितात्, अकृतपरिमाणस्यागृह्णतोऽपि तृष्णातोऽसौ स्यादतस्तद्व्यवच्छेदार्थमाह-अनंता तृष्णा मूर्छा यस्मिन् स तथा,तस्माद्बहुदोपसंकुलात् राजचौर्यादिपुपद्रवनिमित्ततया शरीरमनस्तापहेतोः, अत एव नरकगतौ यद्गमनं तत्पथात्तन्मार्गादिति. बहुशो विरतग्रहणं तद्विरतेर्नित्यकथापनार्थं. ॥ २४४ ॥ एवं च तैर्वर्तमानैर्यत्कृतं भवति तदाह—

मुक्का दुज्जणमित्ती । गहिया गुरुवयणसाहुपडिवत्ती ॥ मुक्को परपरिवाओ । गहिओ जिणदेसिओ धम्मो २४५

व्याख्या--मुक्ता दुर्जनमैत्री त्यक्ता कुजनसंगतिर्भवति, गृहीता स्वीकृता गुरुवचनसाधुप्रतिपत्तिस्तीर्थक-

रगणधरादिवचसां शोभनमतीज्ञेत्यर्थः, तथा मुक्तः परपरिवादोऽलीकनिवृत्तत्वात्परावर्णवादस्य च तद्रूपत्वात्, दृष्टः।
जिनदेशितो धर्मः सुव्रतत्वादिति ॥ २४५ ॥ तादृशां फलमाह—

तवनियमसीलकलिया। सुसावगा जे हवंति इह सुगुणा ॥ तेसिं न दुल्लहाइं। निव्वाणविमाणसुक्खाइं २४६

व्याख्या—तपोनियमशीलकलिता एतदुपेताः सुश्रावका ये भवंति इह प्रवचने सगुणाः, स्वरूपज्ञापनमिदं, तेषां न दुर्लभानि निर्वाणविमानसौख्यानि, तदुपायप्रवृत्तत्वादिति ॥ २४६ ॥ तथा ह्युपायप्रवृत्तानां न किंचिदसाध्यमस्ति, यतो गुरुरपि शिष्येण तथाभूतेन बोध्यत इति, आह च—

सीइज्ज कयाइ गुरु। तंपि सुसीसा सुनिउणमहुरेहिं ॥ मग्गे ठवंति पुणरवि। जह सेलगपंथगो नायं २४७

व्याख्या—सीदेत् शिथिलः स्यात् कदाचिद्गुरुरपि कर्मपारतंत्र्यात्, तं गुरुं सुशिष्याः शोभनविनेयाः सुनिपुणमधुरैः सूक्ष्मैः सुखदैश्च चेष्टितैर्वचनैर्वेति गम्यते, मार्गे ज्ञानदिरूपे स्थापयंति पुनरपि प्रागवस्थायामिव. यथा सैलकः पंथकेन स्थापितः, एतद् ज्ञातं दृष्टांत इति ॥ २४७ ॥ अत्र कथानकं—शैलपुरात्सैलकनामा नृपतिः पंचशतपरिकरो मंडूकाभिधानं सुतं राज्येऽवस्थाप्य निष्क्रांतः, कालेन जातो गीतार्थः, स्थितः सूरिपदे, अन्यदा जातोऽस्य व्याधिः, अकारि सुतेन चिकित्सा, पश्चात्प्रगुणीभूतोऽपि रसादिलांपट्यात् शीतलविहारितां जगाम. पंथकमेकं विहाय त्यक्तः शेषशिष्यैः, अन्यदा चातुर्मासिकं क्षमयता गाढनिद्राप्रसुप्तः संघट्टितस्तेन सूरिश्चरणयोः.

ततः सोऽकांडनिद्राव्यपगमादुत्पन्नक्रोधस्तंप्रत्याह—क एष दुष्टात्मा मां प्रेरयति ? शिष्योऽप्यब्रवीत् भगवन् पंथकसाधुरहं चातुर्मासिकं क्षमयामि लग्नः, न पुनरेवं करिष्ये, क्षमध्वमेकमपराधं मम मंदभाग्यस्य, मिथ्यादुष्कृतमिति वदन् स पतितः पुनस्तत्पादयोः. ततोऽहोऽस्य प्रशमो गुरुभक्तिः कृतज्ञता च ! मम तु प्रमादातिरेको निर्विवेकत्वं चेति जातसंवेगोत्कर्षः सूरिराह महात्मन्निच्छामि वैयावृत्त्यं, उध्धृतोऽहं भवता भवगर्तापातादिति. ततः प्रभृत्युद्यतविहारेण बहुकाल विहृत्य पश्चाच्छत्रुंजयगिरौ पंचशतपरिवारः सिद्धः स सैलकाचार्य इति. ननु कथमागमज्ञोऽपि स शिथिलतामगमत् ? उच्यते कर्म वैचित्र्यात्, तद्धि जानतामपि जंतूनां महतेऽनर्थाय, यत आह—

दस दस दिवसे दिवसे। धम्मे बोहेइ अहव अहिअयरे॥ इय नंदिसेणसत्ती। तहवि य से संजमविवत्ती २४८

व्याख्या—दश दश दिवसे दिवसे धर्मे बोधयति, अथवा अधिकतरान्, इत्येवंभूता नंदिषेणशक्तिः. तथापि च से तस्य संयमविपत्तिश्चारित्राभाव इत्यक्षरार्थः. ॥ २४८ ॥ अधुना कथानकं—श्रेणिकसुतो नंदिषेणश्चरणप्रतिबंधके कर्मणि सत्यपि वार्यमाणः प्राव्राजीत्. जातो गीतार्थः. अभ्यस्तक्रियाकांडोऽन्यदा एकाकिविहारयोग्यं प्रतिकर्म कुर्वन् भिक्षाटने कथंचिद्गणिकागृहं प्राविशत्, मोक्तश्च तेन तत्र धर्मलाभः, वेश्या सहासमाह द्रम्मलाभेन प्रयोजनस्माकं, न धर्मलाभेनेति. ततस्तथाविधभवितव्यातया लब्धियुक्तत्वान्नीव्रात्तृणमपाकृत्य पातितानेन हिरण्य वृष्टिः, अक्षयो निधिरयमिति मत्वा निर्गच्छन् स विधृतो भाटीं दत्वा क यासीति वदंत्या तया. ततः कर्मवैचित्र्यादवश्यंभावितया च भावस्य चचाल चित्तमस्येति. स च किल गृहीताभिग्रहस्तत्र तिष्ठन् दिने दिने दशाधिकान्

या धर्मं प्रतिबोध्य भगवते शिष्यतया ददौ. पश्चात् क्षीणे कर्मणि जातपश्चात्तापो धर्मं तस्थाविति. तदेवं कर्मसामर्थ्यं, अत एवाह—

कलुसीकओ अ किट्टी-कओ अ खपरीकओ मलिणिओ अ॥कम्मेहिं एस जीवो। नाऊणवि मुज्झइ जेण२४९

व्याख्या—कलुषीकृतो जलमिव पार्थिवरेणुभिः, अनेन बद्धावस्थां लक्षयति, चशब्दाः सर्वे समुच्चयार्थाः, किट्टीकृतोन्योन्यानुवेधद्वारेण रसलोलीभूतसुवर्णचूर्णवत्, अनेन निधत्तावस्थामाचष्टे. खलुरीकृतो गाढं तद्भावमापन्नो गुंदादिरूपतागततदन्यद्रव्यवत्, अमुना निकाचितावस्थां सूचयति. मलिनितो बहिर्जातमलः शुष्करेणुगुंडितशरीरवत्, अनेन स्पृष्टदशां दर्शयति. अस्याश्च पश्चादुपादानमुपशांतक्षीणमोहसयोगिनां केवलापि भवतीति ज्ञापनार्थं. कैः क एवंविध इत्याह—कर्मभिर्ज्ञानावरणादिभिरेष स्वसंवेदनसिद्धो जीवः. कथमेतल्लक्ष्यत इत्याह—ज्ञात्वापि तत्त्वं मुह्यति मोहं याति येन कारणेनेति ॥ २४९ ॥ एवं च—

कम्मेहिं वज्जसारो—वमेहिं जउनंदणोवि पडिबुद्धो ॥ सुबहुंपि विसूरंतो। न तरइ अप्पक्खमं काउं ॥२५०॥

व्याख्या—कर्मभिर्वज्रसारोपमैर्निबिडनिकाचितैर्यदुनंदनो विष्णुरपिशब्दादन्ये च. प्रतिबुद्धो ज्ञानी सुबह्वपि 'विसूरंतोत्ति' शतशोऽपि मनसा खिद्यमानः 'न तरइत्ति' न शशाक आत्मक्षमं स्वहितं कर्तुमिति ॥ २५० ॥ एतदेव क्लिष्टाक्लिष्टकर्मविलसितं दृष्टांतेनाह—

वाससहस्संऽपि जइ । काऊणं संजमं सुविउलंपि ॥ अंते किलिठभावो । न विसुज्झइ कंडरीउव्व ॥२९१॥
अप्पेणवि कालेणं । केइ जहा गहियसीलसामण्णा ॥ साहंति निययकज्जं । पुंडरियमहारिसिव्व जहा २९२

व्याख्या—वर्षसहस्रमपि यतिः कृत्वा संयमं सुविपुलमपि अंते मरणकाले क्लिष्टभावोऽशुद्धपरिणामो न विशुद्ध्यति कंडरीकवत्. अल्पेनापि कालेन केचिन्महासत्त्वा यथागृहीतशीलश्रामण्यात् यथांगीकृतव्रतपालनावाप्तश्रमणभावाद्धेतो साधयंति निष्पादयंति निजकार्यमात्मीयप्रयोजनं पुंडरीकमहर्षिवद्यथेति ॥२९२॥अत्र कथानकं—

पुंडरीककंडरीकौ पौंडरिकिण्यां राजानौ भ्रातरावभूतां. अन्यदा तत्र कश्चित्सूरिराययौ. तद्धर्मदेशनया प्रबुद्धः पुंडरीकः प्रविव्रजिषुर्लोकानाहूय सहोदरमुवाच भवंतं राज्येऽभिषिच्य प्रव्रजामीति. सोऽब्रवीत्,तत्किं मया सोढव्यं नरकादिकुगतिपतनदुःख! अलं मे राज्येन, अहमपि प्रव्रजामि. राजाह कृत्यमिदं भवादृशां, किंतु दुःशकमिति. तेनोक्तं न किंचिद् दुःकरं समर्थानां ततो वार्यमाणोऽपि स निष्क्रांतः, अनायकं राज्यमितीतरोऽधारि लोकैः.पश्चा द्बहुकालं प्रव्रज्यां विधायान्यदा दुस्सहतया परिषहोपसर्गाणां विचित्रत्वात्कर्मपरिणतेः, अनादिभवाभ्यस्ततया विषयलोलतायाः, जातभग्नव्रतपरिणामः कंडरीकोऽचिंतयदधितिष्ठामि तत्प्राक्प्रतिपन्नं राज्यमित्याकूतेनागच्छ त्स्वपुरं, स्थितो बहिरुद्याने, निवेदितस्तत्पालेन राज्ञे, किमेकाकी समागतोऽयमिति विमर्शात्कतिचिदाप्तपुरुषपरिकरः समागतस्तत्र राजा. दृष्टोऽवलंबिततरुशाखापात्रो दूर्वावितानोपरिवर्ती स तेन.ततो लक्षिततदभिप्रायो राजा-

मात्यादीनुवाच मया वार्यमाणेनानेनाग्राहि व्रतं, अधुनायं राज्यं गृह्णातु, वयं पुनर्व्रतमिति वदता तेन ददिरे तस्मै राज्य चिह्नानि, जगृहे च तल्लिंगं, ततोऽसौ जगाम गुर्वभिमुखं, इतरोऽपि राज्यविष्टरमध्यास्य तद्दिन एव भूयो भक्षयित्वोत्पन्नविसूचिको रारटयमानो भ्रष्टप्रतिज्ञोऽदृष्टव्योऽयमिति लोकैर्निंद्यमादुल्लसिततीव्ररौद्रध्यानो मृत्वा गतः सप्तमनरकपृथिवीं. पुंडरीकः पुनर्गत्वा गुर्वंतिकं करोमि संयममित्याविर्भूततीव्रशुभपरिणामोऽनुचितानुत्पानत्काच निगमनेन गलच्चरणरुधिरः समुदीर्णक्षुत्पिपासापरीषहस्तथाप्यविचलितसत्त्वस्तद्दिन एव मृत्वा गतः सर्वार्थसिद्धिमिति. ननु यः क्लिष्टतां गत्वा म्रियते तस्येदमादिष्टं, यस्तु तस्याः शुद्धिं विदध्यात्तस्य का वार्तेत्युच्यते—

काऊण संकिलिट्ठं । सामण्णं दुल्लहं विसोहिपयं ॥ सुज्झज्जा एगयरो । करिज्ज जइ उज्जमं पच्छा ॥२५३॥

व्याख्या—कृत्वा संक्लिष्टं श्रामण्यं श्रमणकभावं पूर्वं,पश्चाद् दुर्लभं विशुद्धिपदं निर्मलतास्थानं,तथापि शुद्ध्येदेकतरः कश्चित्कर्मविवरात्करोति यद्युद्यमं पश्चात्, नान्यथेति ॥ २५३ ॥ दुष्करतामाह—

उज्झिज्ज अंतरि च्चिय । खंडिय सबलादउव्व हुज्ज खणं ॥ ओसन्नो सुहलेहड । न तरिज्ज व पच्छउज्जमिउं२५४

व्याख्या-उज्झेत्त्यजेद् गृहीतमपि अंतरैव अपांतराल एव संयममिति गम्यते,खंडितशबलतादयो वा भवेयुः क्षणं संयमस्यैव प्रमादात्, तत्र खंडना एकादिमूलगुणविराधनं, शबलता लघुबहुतिचारता, आदिशब्दात्सर्वाभावो वा तथावसन्नः सन् ' सुहलेहडोत्ति ' वैषयिकसातलंपटः ' न तरेज्जवात्ति न ' शक्नुयाद्वा पश्चादुद्यतुमुद्यमं

कर्तुमिति. ॥ २५४ ॥ तथाहि —

अवि नाम चक्कवट्टी । चइज्ज सव्वंपि चक्कवट्टिसुहं ॥ न य ओसन्नविहारी । दुहिओ ओसन्नयं चयई ॥२५५॥

व्याख्या—अपि नामेति संभावनायां चक्रवर्ती भरतादिस्त्यजेत्सर्वमपि चक्रवर्तिसुखं विवेकयुक्तत्वात्, नेति प्रतिषेधे, चशब्दोऽपिशब्दार्थः, स च दुःखितशब्दात्परतो योज्यः, अवसन्नविहारी दुःखितोऽप्यवसन्नतां न त्यजति महामोहोपहतत्वादिति ॥२५५॥ तदेवमिह भवे संक्लिष्टस्याप्यस्त्यपायो, भवांतरे पुनर्दुर्गतो चास्तीति. अत्र कथानकं-कुसुमपुरे शशिसूरप्रभौ राजानो सहोदरावभूतां, अन्यदागते विजयघोषसूरौ तद्धर्मदेशनया प्रतिबुद्धः सूरप्रभः शशिनमाह कुर्वो धर्ममिति, सोवादीद्विप्रलब्धोऽसि त्वं, अलमनेन दृष्टविषयसुखविघ्नहेतुना अदृष्टप्रार्थनाकल्पेनेति. इतरोऽब्रवीन्मैवं वोचः, प्रत्यक्षमिदं ईश्वरदरिद्रसुभगदुर्भगसुरूपकुरूपनीरोगसरोगादिकं धर्माधर्मफल. ततः प्रोच्यमानापायैर्यदा स स्वाग्रहं न मुचति तदेतरो निर्वेदान्निःक्रांतः, तपस्तप्त्वा च गतोऽसौ ब्रह्मलोकं, इतरस्तु तृतीयनरकपृथिवीं. दृष्टोऽवधिना देवेन स नरकस्थः, स्नेहातिरेकाच्च स गतस्तत्र, स्मारितश्च तेन तस्य पूर्वभववृत्तांतः. स तु जातपश्चात्तापस्तंप्रत्याह शरीरार्थमिदमनुष्ठितं मया, तद्गत्वा तत्कदर्थय? येन मे दुःखमोक्षो भवति. एतदेवाह—

नरयत्थो ससिराया । बहु भणई देहलालणासुहिओ ॥ पडिओमि भए भाउअ! । तो मे जाएह तं देहं ॥

व्याख्या—नरकस्थः शशिराजो बह्वनेकाकारणं भणति, यदुत देहलालनासुखितः सन् पतितोऽस्मि भये

नरकोद्भवे, हे भ्रातस्ततो मम संबंधिन यातय पीडय तं देहमिति२५६ सूरप्रभ आहाग्रमपि तवाज्ञानप्रलापो यतः—

को तेण जीवरहिएण । संपयं जाइएण हुज्ज गुणो ? ॥जइऽसि पुरा जायंतो । तो नरए नेव निवडंतो२५७

व्याख्या—कस्तेन जीवरहितेन सांप्रतं यातितेन कदर्थितेन भवति गुणः ? न कश्चिदित्यर्थः. 'जइ सेंत्ति' यदि पुनः पुरा तदेव यातयेत तपश्चरणकरणैस्ततो नरके नैव निपतेस्त्वमिति ॥ २५७ ॥ तदिदमवेत्य—

जावाऽऽउ सावसेसं । जाव य थोवोऽवि अत्थि ववसाओ॥ताव करिज्जप्पहियं । मा ससिरायाव सोइहिसि॥

व्याख्या—यावदायुर्जीवित सावशेष किंचिदास्ते,यावच्च स्तोकोऽप्यस्ति व्यवसायश्चित्तोत्साहस्तावत्कुरु समाचरात्महितमनुष्ठानमिति शिष्यश्चोद्यते,मा शशिराजवत् शोचिष्यमि शोच करिष्यसि पश्चादिति २५८ तथाह—

घित्तणऽवि सामण्णं । संजमजोगेसु होइ जो सिढिलो॥ पडइ जई वयणिज्जे । सोअइ अ गओ कुदेवत्तं२५९

व्याख्या—न केवलमकृतधर्मः शोचति, किं तर्हि ? गृहीत्वापि श्रामण्य ममनुभाव संयमयोगेपु भवति यः शिथिलः प्रमादी, स किमित्याह–पतति यतिर्वचनीये,इहैव निंद्यो भवति, शोचति च गतः प्राप्तः कुदेवत्वं किल्विषिकादित्व, हा किं मया मंदभाग्येनेदृशमनुष्ठितमिति ॥ २५९ ॥ अन्यच्च—

सुच्चा ते जिअलोए। जिणवयणं जे नरा न याणंति ॥ सुच्चाणवि ते सुच्चा। जे नाऊणं नवि करेंति ॥२६०॥

व्याख्या—शोच्याः शोचनीयास्ते जीवलोके जगति जिनवचनं ये नरा जीवा न जानंति, विवेकशून्यत्वात्.

शोच्यानामपि मध्ये ते शोच्या ये ज्ञात्वा भगवद्वचो नापि नैव कुर्वंति ॥ २६० ॥ कथं ते कृपास्पदमित्याह—

**दावेऊण धणनिहिं । तेसिं उप्पाडियाणि अच्छीणि॥नाऊणऽवि जिणवयणं । जे इह विहलंति धम्मधणं ॥**

व्याख्या--दर्शयित्वा धननिधिं रत्नादिभृतं भाजनं तेषां वराकाणामुत्पाटितान्युत्तोलितानि [उत्खातानि] अक्षीणि लोचनानि, ज्ञात्वापि जिनवचनं ये इह लोके विफलयंति तदसेवनात्, धर्म एव सुगतिसुखहेतुत्वाद्धनं धर्मधनमिति. ॥ २६१ । स च न तेषां दोषः, किं तर्हि ? कर्मणस्तथाहि--

**ठाणं उच्चुच्चयरं । मज्झं हीणं च हीणतरगं वा ॥ जेण जहिं गंतव्वं । चिट्ठाऽवि से तारिसी होई ॥२६२॥**

व्याख्या--स्थानं धाम उच्चं देवगतिलक्षणं, उच्चतरं मोक्षाख्यं, मध्यं मनुष्यगत्यात्मकं, हीनं वा तिर्यग्गतिरूपं, हीनतरकं वा नरकगतिलक्षणं, वाशब्दौ तद्गतानेकभेदसूचनार्थौ. येन जीवेन यस्मिन् देशे काले वा गंतव्यं यत्स्थानं, चेष्टाप्याचरणरूपा से तस्य तादृशी तदनुरूपा भवतीति. २६२ तामेव चेष्टां दुर्गतिहेतुभूतां तावदाह—

**जस्स गुरुम्मि परिभवो । साहूसु अणायरो खमा तुच्छा॥धम्मे य अणहिलासो । अहिलासो दुग्गईए उ॥२६३॥**

व्याख्या—यस्य जडमतेर्गुरौ धर्माचार्यविषये परिभवः, योधर्माचार्यं परिभवतीत्यर्थः, साधुष्वनादरो यः साधून्नाद्रियते, क्षमा क्षांतिस्तुच्छा स्वल्पा नास्ति वा, धर्मे च श्रुतचारीत्रात्मकेऽनभिलापोऽनित्था,यत्तदोर्नित्याभिसंबंधात्तस्याभिलापः परमार्थतो दुर्गतावेव,तुरवधारणे,तच्चेष्टया स दुर्गतिमिच्छतीति यावत् ॥२६३॥ व्यतिरेकमाह—

सारीरमाणसाणं । दुक्खसहस्साण वसणपरिभीया ॥ नाणंकुसेण मुणिणो । रागगइंदं निरुंभंति ॥ २६४ ॥

व्याख्या-शारीरमानसेभ्यो देहचित्तभवेभ्यो दुःखसहस्रव्यसनेभ्यो विविधपीडापदेभ्यः, अत्र पंचम्यर्थे षष्ठी, परिभीतास्त्रस्ताः, किं? ज्ञानमेवांकुशस्तेन मुनयः साधवो रागगजेंद्रमुच्छृंखलं संतं निरुंधंति, आक्रम्य वशवर्तिनं कुर्वंति, तस्य भवहेतुत्वात्तस्य च दुःखात्मकत्वात्, अतस्तद्भीरवस्तन्निदानमेवादितस्त्रोटयंतीति भावना ॥ २६४ ॥ रागनिग्रहश्च सम्यग्ज्ञानाद्भवति, अत एव तद्दातुः पूज्यतामाह—

सुग्गइमग्गपईवं । नाणं दिंतस्स हुज्ज किमदेयं? ॥ जह तं पुलिंदएणं । दिन्नं सिवगस्स नियगच्छि २६५

व्याख्या-सद्गतिमार्गप्रदीपं निर्वाणपथप्रकाशकं ज्ञानं ददते भवेत्किमदेयं? न किंचिज्जीवितमपि दीयत इत्यर्थः. दृष्टांतमाह—यथा तत्पुलिंदकेन दत्तं, शिव एव शिवकस्तस्मै निजमेव निजकं, तच्च तदक्षि च निजकाक्षीति. २६५ अत्र कथानकं—कश्चिद्धार्मिको गिरिकंदरे व्यंतराधिष्ठितां शिवप्रतिमामपूपुजत्. परं प्रतिदिनं प्रभाते समागतोऽसौ गतदिने स्वकृतां पूजां पार्श्वतः क्षिप्तामन्यकृतनवीनपूजां च विलोक्य मत्पूजाविनाशकं पुरुषमद्याहं वीक्षे इत्यालोच्य स तत्र प्रच्छन्नं स्थितः. इतो गृहीतवामकरकोदंडः पुष्पव्यग्रदक्षिणकर उदकभृतगंडूषः पुलिंद एकः समागत्य तद्धार्मिककृतां पूजां स्वचरणेनापमार्य मुखधृतजलगंडूषेण शिवमूर्तिं स्नपयित्वा पुष्पाणि च तन्मस्तके मुक्त्वा परिपूर्णज्यः शिवं प्रणमतिस्म. शिवोऽपि हृष्टस्तेन सार्धं विविधालापमतनोत्. अथ गते तस्मिन् पुलिंदे

स धार्मिकः शिवमुपालेभे, यदुतानेनाऽशुचिनाऽधमेन सार्धं त्वं जल्पसि, परं न मया. शिवोऽवोचत् प्रातर्विशेषं द्रक्ष्यसि. अथ द्वितीयेऽह्न्युत्खातलालटलोचनं शिवं दृष्ट्वा बहु रुदित्वा तत्र स्थितोऽसौ धार्मिकः पुलिंदकः पुनरागत्य मयि सलोचने कथं स्वामी निर्लोचन इत्युत्पाट्य स्वनयनं तत्र ददौ,शिवो धार्मिकंप्रत्याह एवमहं प्रसीदामि, न बाह्यपूजामात्रेणेति. एवं ज्ञानप्रदेऽप्यांतरो बहुमानः कार्य इति दृष्टांतः ॥ २६५ ॥ अन्यच्च --

सिंहासणे निसण्णं । सोवागं सेणिओ नरवरिंदो॥विज्जं मग्गइ पयओ । इअ साहुजणस्स सुअविणओ २६६

व्या-सिंहासने निषण्णमुपविष्टं श्वपाकं चांडालं श्रेणिको नरवरेंद्रो विद्यां 'मग्गइत्ति', प्रार्थयते प्रयतः सविनयं, इत्येवं साधुजनस्य यतिलोकस्य श्रुतविनयः कार्य इति भावः ॥ २६६ ॥ कथानकमधुना-श्रेणिकराजपत्न्याश्चेल्लणायाः समुत्पन्ने एकस्तंभप्रासाददोहदेऽभयाराधितदेवेन निर्मिते तस्मिन् ससर्वर्तुकारामे तन्निवासिनैकेन विद्यासिद्धमातंगेन सदोहदनिजभार्योदितेन विद्यालब्ध्या चौरितेषु तदाम्रेषु बृहत्कुमारीकथानकव्याजेनाभयकुमारेणोपलब्धे तस्मिंस्तस्करे राजा तमुवाच, विद्यां देहि मे, नास्त्यन्यथा भवतो मोक्षः, प्रतिपन्नमनेन, ततः सिंहविष्टरोपविष्ट एव राजा तां पपाठ. बहुशोऽभ्यस्यमानापि सा न तस्थौ. ततः क्रुद्धः श्रेणिकस्तस्मै,ततोऽभयेनोक्तं राजन्नायं न्यायः,अयं हि भवतां गुरुर्वर्तते, ततस्तं सिंहासनेऽवस्थाप्य स्वयं भूमिनिविष्टो विहितकरमुकुलो विद्यां गृहाण ? राज्ञापि तथा कृते शीघ्रमेव तस्य विद्या समागता.एवमपि स्थिते यो दुर्बुद्धिर्गुरुं निह्नवीत तद्दोषमभिधित्सुराह—

विज्जाए कासवसंति-आएदगसूअरो सिरिं पत्तो। पडिओ मुसं वयंतो, सुअनिण्हवणा इअ अपत्था २६७

व्याख्या—अत्र कथानकं—कश्चिन्नापितो विद्याबलाद्वियति वर्तमानया क्षुरभांडिकया आस्तेस्म. ततस्तां विनयाद्विद्यामादाय कश्चिद्भागवतोऽन्यत्र गत्वाकाशगतेन त्रिदंडेन प्रतारयामास लोकान्. केनाप्यसौ पृष्टो भगवन् किमेतत्तपसो बलमुत विद्यायाः ? सोऽवादीद्विद्यायाः, कुतोऽवाप्तेति पृष्टः सन् स नापितगुरुकथनलज्जितः साडंबरं प्राह मयैषा तु हिमवद्गिरिनिवासिकष्टाराध्यपुराणयोगिनः पार्श्वल्लब्धास्ति. एवं सगुरुनिह्नवात्खात्कृत्य तत् त्रिदंडं गगनादधो भूमौ पपात ततो हीलितश्चासौ जनैः. अधुनाक्षरार्थः—विद्यया काश्यपसत्कया हेतुभूतया उदकशूकरो नित्यस्नायित्वात् त्रिदंडी श्रियं पूजालक्ष्मीं प्राप्तः पतितो मृषालीकं वदन्. गुर्वपलापेऽपि श्रुतं निह्नुतं भवतीति मत्वाह—श्रुतनिह्नवनमित्येवमपथ्यं, गाथायां स्त्रीलिंगनिर्देशः प्राकृतत्वादिति ॥२६७॥ किमित्येवं गुरुः पूज्यत इत्युच्यते, महोपकारित्वात्तथाहि—

सयलम्मिऽवि जियलोए, तेण इहं घोसिओ अमाघाओ। इक्कंऽपि जो दुहत्तं, सत्तं बोहेइ जिणवयणे २६८

व्याख्या-सकलेऽपि समस्तेऽपि जीवलोके तेन महात्मना इह घोषितो वाक्पटहेन अमाघातोऽमारिरित्यर्थः. एकमपि, किं पुनर्बहून्, यो दुःखार्तं सत्त्वं जीवं बोधयति जिनवचने भगवद्वचोविषय इति. स हि बुद्धः सन् सर्वविरतो मोक्षं गतो वा यावज्जीवं सकलंकालं वा सर्वजंतून् रक्षतीति भावना ॥ २६८ ॥ किंच—

सम्मत्तदायगाणं, दुप्पडियारं भवेसु बहुएसु । सव्वगुणमेलियाहिऽवि उवयारसहस्सकोडीहिं ॥ २६९ ॥

व्याख्या—सम्यक्त्वदायकानां विशिष्टदेशनया सम्यग्भावसंपादकानां दुःप्रतिकारं प्रतिकर्तुमशक्यं, बहुष्वपि भवेषु वर्तमानाभिः सर्वगुणमीलिताभिरपि द्विगुणादिभिर्यावदनंतगुणाभिरपीत्यर्थः,उपकारसहस्रकोटीभिर्न कथंचित्तेषां प्रत्युपकर्तुं पार्यते इत्याकूतम्. ॥ २६९ ॥ कथमेतत् ? बृहद्गुणात्तस्य, तथाहि—

सम्मत्तंमि उ लद्धे । ठइयाइं नरयतिरियदाराइं ॥ दिव्वाणि माणुसाणि अ । मोक्खसुहाइं सहीणाइं २७०

व्याख्या—सम्यक्त्वे तत्वार्थश्रद्धानलक्षणे, तुशब्दादबद्धायुष्केण लब्धे सति स्थगितानि पिहितानि नरकतिर्यग्द्वाराणि,उपलक्षणत्वात्तद्गतिमुखानि भवंति,तदनेनास्यानर्थविघातित्वमुक्तं, अधुनार्थसंपादकत्वमाह–दिव्यानि स्वर्गजानि मानुषाणि मनुष्यसंबंधीनि च,सुखानीति शेषः,चशब्दस्य व्यवधान सम्बन्धान्मोक्षसुखानि च स्वाधीनान्यात्मायत्तानीति ॥२७०॥ यथा च मोक्षसुखानि तद्वतः स्वायत्तानि तथा चाह—

कुसमयसुईण महणं । सम्मत्तं जस्स सुठ्ठियं हियए ॥ तस्स जगुज्जोयकरं । नाणं चरणं च भवमहणं २७१

व्याख्या-कुसमयश्रुतीनां कुत्सितागमाकर्णनानां मथनं विलोडकं तद्विमर्दक्षममिति यावत्, सम्यक्त्वं यस्य सुस्थितं यस्य हृदये,तस्य जगदुद्योतकरं ज्ञानं केवलालोकरूपं चरणं च सर्वसंवररूपं भवमथनं संसारक्षयकारि भवत्येवेत्यध्याहारः ।२७१। तदनेन मोक्षसाधकयोर्ज्ञानचरणयोर्दर्शने सति तद्भवेऽन्यत्र.वावश्यंभावात्तत्प्रधानमिति

लक्षयति. मोक्षसाधने तु त्रितयमपि व्याप्रियत इत्याह—

सुपरिच्छियसम्मत्तो । नाणेणालोइयत्थसब्भावो ॥ निव्वणचरणाउत्तो । इच्छियमत्थं पसाहेइ ॥ २७२ ॥

व्याख्या—शोभन परिच्छित्तं ' छोच्छेदने इति धातोः ' परिच्छेदोः. यस्मिंस्तत्, तथा सुपरिच्छित्तं सम्यक्त्वं यस्येति समासः. दृढसम्यग्दर्शनः मन् ज्ञानेनालोकितार्थसद्भावः प्रकाशितजीवादितत्वो निर्वर्णचरणायुक्तो निरतिचारचारित्रोपेतः, किं? इष्टमर्थं मोक्षं प्रसाधयतीति ॥२७२॥ तदिदमवेत्य मोक्षाक्षेपिणि दर्शनेऽप्रमादिना भाव्यं, प्रमादात्तन्मालिन्योपपत्तेः, आह च—

जह मूलताणए पं—डुरंमि दुव्वन्नरागवण्णेहिं ॥ बीभच्छा पडसोहा । इय सम्मत्तं पमाएहिं ॥ २७३ ॥

व्याख्या—यथा मूलतानके प्रथमसूत्ररचनारूपे पांडुरे धवले सत्यपि दुष्टो वर्णश्छाया यस्य स चासौ रागश्च तद्वर्णैः पश्चात्तानकैरिति गम्यते किं? बीभत्सा विरूपा पटशोभा भवति. इत्येवं सम्यक्त्वं प्रमादैः कषायादिभिः, मूले शुद्धमपि लब्धं पश्चान्मलिनतां यातीति ॥ २७३ किंच तत्र प्रमादिनो गाढमप्रेक्षापूर्वकारिता, तस्य नियमतो वैमानिकायुष्कबंधहेतुत्वं लक्षयतः स्वल्पेन बहुहारणात्, यतः—

नरएसु सुरवरेसु य । जो बंधइ सागरोवमं इक्कं॥पलिओवमाण बंधइ । कोडिसहस्साणि दिवसेण २७४

व्याख्या—नरकेषु सुरवरेषु च सुरप्रधानेषु देवलोकेष्वित्यर्थः,यो बध्नाति सागरोपममागमप्रतीतं एकं पल्यो-

पमानां बध्नाति कोटिसहस्राणि दिवसेन, दशपल्योपमकोटाकोटीरूपत्वात्तस्येति ॥ २७४ ॥ तथा—

पलिओवमसंखिज्जं । भागं जो बंधई सुरगणेसु ॥ दिवसे दिवसे बंधइ । स वासकोडी असंखिज्जा ॥२७५॥

व्याख्या—पल्योपमसंख्येयभागं, अनुस्वारोऽलाक्षणिकः, यो बध्नाति, सुराणां गणा येषु तेषु नाकेष्वित्यर्थः, दिवसे दिवसे प्रतिदिनं बध्नाति स वर्षकोटीरसंख्येयाः, तद्रूपत्वात्तस्येति ॥ २७५ ॥

एस कमो नरएसुऽवि । वुहेण नाऊण नाम एयंमि॥धम्मंमि कह पमाओ । निमेसमित्तंपि कायव्वो ! २७६

व्याख्या—एषोऽनंतरोक्तः क्रमो नरकेष्वपि,यदुत पल्योपमसंख्येयभागं बध्नन् वर्षकोटीः प्रतिदिनमसंख्येया बध्नाति. यदर्थमेतत्प्ररूपितं तदाह–वुधेन विदुषा ज्ञात्वा, नामेति प्रसिद्धं, एतदप्यनंतरोदितं, धर्मे दुर्गतिनिवारके कथं प्रमादो निमेषमात्रमपि स्तोकमपि क्षणं कर्तव्यो नैवेतद् बुद्ध्यत इत्यभिप्रायः ॥ २७६ ॥ तथा चाह धर्मप्रमादिनामसति तथाविधसामग्रीवैकल्यादपवर्गं, नियमात् स्वर्गः, अत एव तद्गुणान् वर्णयति —

दिव्वालंकारविभू—सणाइं रयणुज्जलाणि य घराइं॥रूवं भोगसमुदओ । सुरलोगसमो कओ इहयं ? २७७

व्याख्या-तत्र हि दिव्यालंकारविभूषितानि,अलंकाराः सिंहासनच्छत्रादयः, विभूषणानि मुकुटादीनि दिव्यानि प्रधानानि भवंति. तथा रत्नोज्ज्वलानि च गृहाणि, रूपं शरीरसौंदर्यं, भोगसमुदयो निरुपमशब्दादिसमृद्धिः, सुरलोकसमो नाकतुल्यः, कुतोऽस्मिन् मर्त्ये ? नैवेत्यर्थः ॥ २७७ ॥ किंच—

देवाण देवलोए जं सोक्खं तं नरो सुभणिओऽवि । न भणइ वाससएणऽवि जस्सऽवि जीहासयं हुज्जा २७८

व्याख्या-देवानां देवलोके यत्सौख्यं तन्नरः सुभणितोऽपि वचनकुशलोऽपि न भणति वर्षशतेनापि यस्यापि जिह्वाशतं भवेत्, अपरिमितत्वात्तस्येति ॥ २७८ ॥ नरके व्यतिरेकमाह—

नरएसु जाइं अइकक्खडाइँ दुक्खाइँ परमतिक्खाइं । को वण्णेही ताइं ?, जीवंतो वासकोडीऽवि ॥२७९॥

व्याख्या—नरकेषु यान्यतिकर्कशानि दुःखानि शरीरापेक्षया परुषाणि, तथा परमतीक्ष्णानि चित्तापेक्षया तीव्राणि, को वर्णयिष्यति तानि जीवन् वर्षकोटीमपि असंख्येयत्वात्तेषां, वाचश्च क्रमवर्तित्वात् ॥ २७९ ॥ तान्येव लेशतो दर्शयति—

कक्खडदाहं सामलिअसिवणवेयरणिपहरणसएहिं । जा जायणाउ पावंति, नारया तं अहम्मफलं ॥२८०॥

व्याख्या—कर्कशदाहं तीव्राग्निना, शाल्मल्यसिवनवैतरणीप्रहरणशतैर्हेतुभूतैर्या यातनाः पीडाः प्राप्नुवंति नरकेषु भवा नारकाः, तत्किं? इत्याह–अधर्मफलं पापकार्यफलं ॥२८०॥ न चान्यत्रापि संसारे सुखमस्तीत्याह—

तिरिया कसंकुसारानिवायवहबंधमारणसयाइं । नऽवि इहयं पावेंता, परत्थ जइ नियमिया हुंता ॥२८१॥

व्याख्या—तिर्यंचः, कशा लताः ( रश्मयः ) अंकुशः शृणिः, आरा प्राजनकपर्यंतवर्तिनी, कशाश्चांकुशाश्चाराश्च, तासां निपातः, वधो लकुटादिभिः, बंधो रज्ज्वादिभिः, मारणं प्राणत्याजनं, कशांकुशारानिपाताश्च

वधबंधमारणानि च, तेषां शतानि नापि नैव इह लोके प्राप्स्यन्, परलोकान्यजन्मनि यदि नियमिता धर्मवंतोऽभविष्यन्. इदमपि पापफलमित्याकूतं. ॥ २८१ ॥

आजीव संकिलेसो, सुक्खं तुच्छं उवद्दवा बहुया । नीयजणसिट्ठणावि य, अणिट्ठवासो अ माणुस्से ॥२८२॥

व्याख्या—आजीवं प्राणधारणं यावत्संक्लेशश्चित्तविबाधेति समासः, सौख्यं वैषयिकं तदपि तुच्छं निस्सारं, उपद्रवाश्चौरादिजन्या बहवः, ' नीयजणसिट्ठाणावियत्ति ' प्राकृतलोकाक्रोशनं चेत्यर्थः, अनिष्टवासश्च अनभिप्रेते स्थाने कुतश्चिद्धेतोर्वसनं च मानुष्ये मनुष्यभवे भवति ॥ २८२ ॥ अन्यच्च—

चारगनिरोहवहबंधरोगधणहरणमरणवसणाइं । मणसंतावो अजसो, विग्गोवणया य माणुस्से ॥ २८३ ॥

व्याख्या—चारकनिरोधो गुप्तौ नियंत्रणं, चारकनिरोधश्च वधबंधरोगधनहरणमरणव्यसनानि च प्रतीतानि द्वंद्वस्थानि. मनःसंतापश्चित्तखेदः. अयशोऽश्लाघा, विगोपना च नानारूपा विडंबना मानुष्ये समस्ति. २८३ किंच—

चिंतासंतावेहि य, दरिद्दरूआहिं दुप्पउत्ताहिं । लद्धूणऽवि माणुस्सं, मरंति केई सुनिव्विण्णा ॥ २८४ ॥

व्याख्या—इह शारीरमानसदुःखप्राचुर्यज्ञापनार्थं तद्धेतूनामनेकशो वचनेऽपि न पौनरुक्त्यं, अतश्चितासंतापैः कुटुंबादिभरणचिंतया संतापैश्चौरादिजन्यैः, चशब्दो व्यवहितसंबंधः, दारिद्र्यरुग्भिश्च दौर्गत्येन रोगैश्च कासादिभिः, किंभूताभिः ? दुःप्रयुक्ताभिः प्राक्कृतदुष्कर्मजनिताभिरित्यर्थः. लब्ध्वापि मानुष्यं बहवः म्रियंते

प्राणान् मुंचंति, केचिन्मपापाः सुनिर्विण्णा गाढं दैन्योपहता इति. ॥ २८४ ॥

देवाऽवि देवलोए, दिव्वाभरणाणुरंजियसरीरा । जं परिवडंति तत्तो, तं दुक्खं दारुणं तेसिं ॥ २८५ ॥

व्याख्या—देवा अपि देवलोके दिव्यैराभरणैरनुरंजितं मंडितं शरीरं येषां ते तथा, तेऽपि यत्प्रतिपतंति अशुचौ गर्भादिकलमले निमज्जंति, ततो देवलोकात्तद् दुःखं दारुणं रौद्रं तेषां देवानामिति, प्रागपरिमितसुखवर्णनं तेषामनेन विरुद्ध्यते इति चेन्न, अभिप्रायापरिज्ञानात्, तद्ध्येतदर्थं वर्णितं, किल वैषयिकसुखार्थिनापि सत्त्वेन धर्म एव यत्नः कार्यः तस्मिन् सति तस्य प्रासंगिकत्वात्, न पुनस्तस्य परमार्थतः सुखं विपर्यासात्, दुःखेऽपि सुखबुद्धिप्रवृत्तेः, विपाकदारुणत्वाच्च. ॥ २८५ ॥ तथा चाह—

तं सुरविमाणविभवं, चिंतिय चवणं च देवलोगाओ । अइबलियं चिय जं नवि, फुट्टइ सयसक्करं हिययं ॥२८६॥

व्याख्या—तमिति प्राग्वर्णितं सुरविमानविभवं चिंतयित्वा पर्यालोच्य च्यवनं च पतनं च देवलोकात्, किं ? अतिबलिनमेव गाढं निष्ठुरमेव यन्नापि नैव स्फुटितं शतशर्करं शतखंडं हृदयं. अस्त्येव तस्यास्फोटे महत्कारणमिति ॥ २८६ ॥

ईसाविसायमयकोहमायालोभेहिं एवमाईहिं । देवाऽवि समभिभूया, तेसिं कत्तो सुहं नाम ? ॥ २८७ ॥

व्याख्या—ईर्ष्याविषादमदक्रोधमायालोभैः प्रतीतैरेवमादिभिर्हर्षदैन्यशोकप्रभृतिभिश्चित्तविकारैर्देवा अपि

ममाभिभूता वशीकृताः, तेषां कुतः सुखं नाम ? न तेषां तत्संभावनापीति हृदयम्. ॥ २८७ ॥ अतः—

धम्मंपि नाम नाऊण, कीस पुरिसा सहंति पुरिसाणं ?। सामित्ते साहीणे, को नाम करिज्ज दासत्तं ? ॥२८८॥

व्याख्या—धर्ममपि एवंविधदुःखप्रचुरसंसारच्छेदकं सर्वज्ञोक्तं, नामेति प्रसिद्धं, विवेकिना ज्ञात्वोपलभ्य 'कीसत्ति' किमिति पुरुषाः सहंते विपहंते ? अनेकार्थत्वात्प्रतीक्षंते पुरुषाणामन्येषां भवक्षयं कुर्वतां, यदुपकुर्वंतु तावदेते, वयं पश्चात्तं करिष्यामः, ज्ञाततत्वानां, विलंबितुं न युक्तमित्यर्थः, तथाहि—स्वामित्वे स्वाधीने को विमूढगकारी नामेति प्रसिद्धमिदं कुर्याद्दासत्वं ? न कश्चित्. दासतुल्यं हि संसारित्वं, कर्मपरतंत्रत्वात्, प्रभुत्वसमा मुक्तता स्वतंत्रत्वात्. सा च हस्ततलप्राप्ता सद्धर्मानुष्ठायिनामित्याकूतं.

अथवा धर्ममपि नाम ज्ञात्वा किमिति पुरुषाणां संबंध्याज्ञापनादिकमिति गम्यते, धर्मानुष्ठानात्प्रभुत्वावाप्तेस्तत्रैव वरं यत्नो विहितः, तथा चोक्तं-समसंख्यावयवः सन्। पुरुषः पुरुषं किमन्यमभ्येति ॥ पुण्यैरधिकतरश्चेन्ननु सोऽपि करोतु नान्येव ॥ १ ॥ अत एवाह, स्वामित्वे स्वाधीने को नाम कुर्याद्दासत्वं सकर्ण इति ? ॥ २८८ ॥ ननु यो ज्ञाततत्वो विलंबनं न करोति स कथं लक्ष्यत इत्यत्राह—

संसारचारए चारए व्व आवीलियस्स बंधेहिं । उव्विग्गो जस्स मणो, सो किर आसन्नसिद्धिपहो ॥२८९॥

व्याख्या—चरणं चारः, स एव चारकः, संसारे चारकः संसारचारको भवभ्रमणमित्यर्थः, तस्मिंश्चारक एवापीडितस्य निपद्धस्य बंधे रज्ज्वादिजनितैरन्यत्र कर्ममयैरुद्विग्नं त्रस्तं यस्य मनश्चित्तं, यदुत कथमितो निःसरि-

ष्यामि ? स जीवः किलेत्याप्ता ब्रुवते आसन्नसिद्धिपथोऽभ्यर्णमोक्षमार्ग इति ॥ २८९ ॥ तथा—

आसन्नकालभवसिद्धियस्स जीवस्स लक्खणं इणमो। विसयसुहेसु न रज्जइ, सव्वत्थामेसु उज्जमइ ॥२९०॥

व्याख्या—आसन्नः कालो यस्याः सा तथा आसन्नकाला, भवात्सिद्धिर्मुक्तिर्यस्यासौ आसन्नकालभवसिद्धिकः, तस्य जीवस्य लक्षणं स्वलक्षणरूपमिदं, यदुत विषयसुखेषु न रज्यते न रागं याति, 'सव्वत्थामेसुत्ति' सर्वस्थानेषु मोक्षसाधकेषु तपश्चरणादिषु उद्यच्छति उद्यमं कुरुते. ॥ २९० ॥ ननु सांप्रतं विशिष्टसंहननरहितैः कथमुद्यम्यते ? इति यो मन्यते तंप्रत्याह—

हुज्ज व नव देहवलं, धिइमइसत्तेण जइ न उज्जमसि। अच्छिहिसि चिरं कालं, बलं च कालं च सोअंतो।२९१।

व्याख्या—भवेद्वा न वा देहबलं, कर्मायत्तत्वात्तस्य, धृतिर्मनःप्रणिधानं, मतिर्बुद्धिः, सत्त्वं चेतसोऽवष्टंभः, धृतिश्च मतिश्च सत्त्वं चेति द्वंद्वैकवद्भावः,तेन यदि नोद्यच्छसि त्वमिति शिष्यश्चोद्यते,तदा आस्थिष्यसे स्थास्यसि चिरं कालं बलं च शारीरं,कालं च दुष्षमालक्षणं शोचन्. न शोकेन किंचित् त्राणं,दैन्यवृद्धिः केवलमिति.२९१ यस्तु जन्मांतरे पुनर्बोधिलाभे सति सुसामग्र्यवाप्तौ सदनुष्ठानं करिष्यामः,नाधुना शक्यते चिंतयेत्तं शिक्षयितुमाह—

लद्धिल्लियं च बोहिं, अकरिंतोऽणागयं च पत्थितो। अन्नं दाइं बोहिं, लब्भसि कयरेण मुल्लेणं ? ॥२९२॥

व्याख्या—' लद्धिल्लियं चेति ' लब्धां च प्राप्तां च वर्तमानकालिकां बोधिं जिनधर्मप्राप्तिं, अकुर्वन्निति कर्म-

पराधीनतया सदनुष्ठानेन सफलामकुर्वन्, अनागतां च भाविनीं प्रार्थयन्, अन्यां ' दाइंति ' निपातोऽसूयायां, अन्ये च व्याचक्षते अन्यामिदानीं बोधिं किं लप्स्यसे ? कतरेण मूल्येन ? इयमत्र भावना—बोधिलाभे सति तपःसंयमानुष्ठानपरस्य प्रेत्यवासनावशात्तत्प्रवृत्तिरेव बोधिलाभोऽभिधीयते, तदनुष्ठानरहितस्य पुनर्वासनाभावात्कथं तत्प्रवृत्तिरिति बोधिलाभानुपपत्तिः, स्यादेतदेवं मत्यस्य बोधिलाभस्यासंभव एवोपन्यस्तो वासनाभावात्, न, अनादिसंसारे राधावेधोपमानेन अनाभोगत एव कथंचित्कर्मक्षयस्तदवाप्तेः, लब्धे तु निरंतरं यत्नो विधेय इत्यैदंपर्यमस्येति ॥ २९२ ॥ वहवश्चैवंभूता ये किमित्याह—

संघयणकालबलदूसमारुयालंवणाइं घित्तूणं । सव्वं चिय नियमधुरं, निरुज्जमाओ पमुच्चंति ॥ २९३ ॥

व्याख्या—संहननकालबलदुष्षमारकालंबनानि गृहीत्वा, यदुत किमद्य तत्क्रियते ! नास्ति शारीरी शक्तिरिति संहननावलंबनं, नायं कालो दुर्भिक्षत्वात्, नास्ति बलं मानसं धृतिरहितत्वात्, तद् दुष्षमा वर्तते, क्लिष्टा चेयमाख्याता भगवता प्रागेव, किं कुर्मो रागाक्रांता वयं, एवंभूतान्यालंबनान्यलीकावष्टंभान्यादाय, किं ? सर्वामेव कर्तुं शक्यामपि नियमधुरां संयमभारोद्वहनलक्षणां निरुद्यमाना शैथिल्यात्प्रकर्षेण मुंचंतीति. ॥ २९३ । बुद्धिमता पुनरेतदालोच्य यद्विधेयं तदाह—

कालस्स य परिहाणी, संजमजोगाइं नत्थि खित्ताइं । जयणाइ वट्टियव्वं, नहु जयणा भंजए अंगं ॥२९४॥

व्याख्या—कालस्य वर्तमानरूपस्य परिहाणिर्ह्रासः, चशब्दात्तद्ध्रासेन द्रव्यक्षेत्रभावानामपि, अत एवाह, संयमयोग्यानि न संप्रत्यधुना क्षेत्राणि, अतो यतनयागमोक्तगुणदोषाश्रयणपरिहारलक्षणया वर्तितव्यं यापनीयं, यतो न हु नैव यतना क्रियमाणा भनक्ति विनाशयत्यंगं प्रक्रमात्संयमशरीरमिति. ॥ २९४ ॥ सा च किंगोचरा कर्तव्येत्यत आह—

समिईकसायगारवइंदियमयबंभचेरगुत्तीसु । सज्झायविणयतवसत्तिओ अ जयणा सुविहियाणं ॥ २९५ ॥

व्याख्या—समितय ईर्याद्याः, कषाया क्रोधादयः, गौरवाणि ऋद्ध्यादीनि, इंद्रियाणि स्पर्शनप्रभृतीनि, मदा जात्यादयः, ब्रह्मचर्यगुप्तयो वसत्याद्याः, समितयश्च कषायाश्चेत्यादिद्वंद्वः. तासु तद्विषये, तथा स्वाध्यायो वाचनादिः, विनयोऽभ्युत्थानादिः तपोऽनशनादि,शक्तिश्चित्तोत्साहः,अत्रापि द्वंद्वः, ततस्तस्मात्स्वाध्यायविनयतपःशक्तितश्च, एताश्चाश्रित्य यतना कर्तव्याकर्तव्यकरणाकरणरूपा सुविहितानां साधूनां प्रवर्तत इति द्वारगाथासमासार्थः. ॥ २९५ ॥ सांप्रतमेतामेव प्रतिपदं व्याचष्टे, तत्राद्यं समितिपदं, ताश्च पंच, अतस्तावदाद्यामधिकृत्याह—

जुगमित्तंतरदिट्ठी, पयं पयं चक्खुणा विसोहिंतो । अव्वक्खित्ताउत्तो, इरियासमिओ मुणी होई ॥ २९६ ॥

व्याख्या—युगमात्रमंतरमंतरालं यस्या सा तथा, युगमात्रांतरा दृष्टिर्यस्येति समासः. इह चातिदूरात्यासन्ननिरीक्षणे जंत्वदर्शनयोगोतिप्रवृत्तिदोषात्, युगामात्रक्षेत्रनियमनं, पदं पदं चक्षुपा विशोधयन् पार्श्वयोः पृष्ठ-

तत्रोपयोगं ददादित्यर्थः. अव्याक्षिप्तः शब्दादिषु रागद्वेषावगच्छान्नायुक्तो धर्मध्यानोपयुक्तः सन्, किं ? ईरणमीर्यागमनमित्यर्थः, तस्यां सम्यगित ईर्यासमितः, यथोक्तागमानुष्ठायी मुनिर्भवतीति. ॥ २९६ ॥ अधुना भाषाममिमुररीकृत्याह—

कज्जे भासइ भासं, अणवज्जमकारणे न भासइ य। विगहविसुत्तियपरिवज्जिओ अ जइ भासणासमीओ २९७

व्याख्या—कार्ये ज्ञानादिविषये भाषते भाषां, तत्राप्यनवद्यामपापां, अकारणे पुनर्निष्प्रयोजनं न भाषते च न जल्पते च, अत एवाह, विकथा स्त्रीकथादिः, विश्रोतसिका दुष्टांतर्जल्परूपा, ताभ्यां परि समंताद्वर्जितो विकथाविश्रोतसिकापरिवर्जितः, चशब्दात् षोडशवचनविधिज्ञश्च यतिः साधुः, भाषणं भाषणा वाक्, तस्यां समितो भाषणासमित इति. ॥ २९७ ॥ सांप्रतमेषणासमितिमुररीकृत्याह—

बायालमेसणाओ, भोयणदोसे य पंच सोहेइ । सो एसणाइसमिओ, आजीवी अन्नहा होइ ॥ २९८ ॥

व्याख्या—द्विचत्वारिंशतः, एष्यतेऽन्विष्यते पिंडो यकाभिस्ता एषणाः, आधाकर्मादिका दोषाः सामान्यव्युत्पत्त्या गृह्यंते. तत्रोद्गमदोषाः षोडश, ते चामी—आहाकम्मुद्देसिय—पूईयकम्मे य मीसजाए य ॥ ठवणापाहुडियाए । पाउयरकीयपामिच्चे ॥ १ ॥ परियट्टिए अभिहड–भिन्ने मालोहडेइ य । आच्छिज्जे अणिसठे । अज्झोयर एय सोलस ॥ २ ॥ उत्पादना दोषा अपि षोडश, ते चामी–धाईदूईनिमित्ते । आजीववणीमगे तिगिच्छा य ॥

कोहे माणे माया । लोभे य हवंति दस एए ॥ १ ॥ पुव्विं पत्था संथव-विज्जामंते य चुन्नजोगे य ॥ उप्पायणाए दोसा । सोलसमे मूलकम्मे य २ एषणादोषा दश, ते चैते-संकियमक्खियणि क्खित्त-पिहियसाहरियमुम्मीसे ॥ अपरिणयलित्तछ्थलिडिय । एसणदोसा दस हवंति ॥१॥ एते सर्वेऽपि मीलिता द्विचत्वारिंशदेषणा उक्ताः, मकारस्तु आगमी. तथा भोजनदोषाश्च पंच शोधयत्यकरणेन मुनिः, ते चामी-संजोयणा पमाणे । इंगाले धूमकारणे चेव ॥ इति. स साधुरेषणायां समित इत्युच्यते. आजीवी लिंगोपजीवकोवे पविडंयकोऽन्यथा एतद्वैपरीत्ये भवति, गुणशून्यत्वादिति ॥ २९८ ॥ इदानीमादाननिक्षेपणा समितिमाह—

पुव्विं चक्खुपरिक्खिय-पमज्जिउं जो ठवेइ गिण्हइ वा ॥ आयाणभंडमत्तनिक्खे-वणाइ समिओ मुणी होइ

व्याख्या—पूर्वं प्रथमं ' चक्खुत्ति ' चक्षुषा परीक्ष्यावलोक्य प्रदेशं प्रमृज्य रजोहरणेन यः साधुः स्थापयति भाजनादिकं गृह्णाति वा तथैव, स किं ? आदानेन सह निक्षेपणा भांडादाननिक्षेपणा, गाथायां तु भांडशब्दस्य मध्ये निपातः प्राकृतशैल्या, तस्यां समितो मुनिर्भवति. ॥ २९९ ॥ अधुना पंचमसमितिमधिकृत्याह —

उच्चारपासवणखेले । जल्लसिंघाणए य पाणविहो ॥ सुविवेइए पएसे । निसिरंतो होइ तस्समिओ ।३००।

व्याख्या—उच्चारः पुरीपं, प्रश्रवणं मूत्रं, खेलः श्लेष्मा, जल्लो देहमलः,सिंघानको नासिकामलः,उच्चारश्च प्रश्रवणं चेत्यादिद्वंद्वः, तान् , चशब्दादतिरिक्ताशुद्धभक्तपानोपकरणानि च, प्राणिविधीन् जंतुभेदाननेकाकारान् कथं

चिपटुकरणादावापतितान् सुविवेचिते प्रदेशे निःसृजन् परिष्ठापयन् भवति तत्समित इति. इह च सुविविक्ते स्थावरजंगमजंतुरहिते प्रदेशे इति वक्तव्ये सुविवेचिते यदुक्तं तत्सुविविक्तेऽपि स्वयमसुविवेचिते चक्षुषा रजोहरणेन च परिष्ठापयन् तत्समित इति ज्ञापनार्थं. ॥ ३०० ॥ गतं समितिद्वारं अधुना कषायद्वारं विवरीतुकामस्तेषां तज्जातीनां यावद्बहुदुष्टताभिधायिकां प्रतिद्वारगाथामाह—

कोहो माणो माया । लोभो हासो रई य अरई य ॥ सोगो भयं दुगंछा । पच्चक्खकली इमे सव्वे ॥३०१॥

व्याख्या--क्रोधो मानो माया लोभो हासो रतिश्चारतिश्च शोको भयं जुगुप्सा, किं? प्रत्यक्षकलयः कलहहेतुत्वात्, उपलक्षणं चेदं सर्वानर्थतायाः, इमेऽनंतरोक्ताः सर्वे इति ॥ ३०१ ॥ सांप्रतं तत्वभेदपर्यायैर्व्याख्येति न्यायात् तावत्क्रोधपर्यायान् सदोषानाचष्टे--

कोहो कलहो खारो । अवरुप्परमच्छरो अणुसओ य ॥ चंडत्तणमणुवसमो । तामसभावो य संतावो॥३०२॥

व्याख्या--क्रोधः कलहः क्षारः परस्परमत्सरः,अनुशयश्च चंडत्वमनुपशमस्तामसभावश्च संताप इति ३०२

निच्छोडण निप्भंछण । निराणुवत्तित्तणं असंवासो ॥ कयनासो य असम्मं । बंधइ घणचिक्कणं कम्मं ३०३

व्याख्या--निच्छोटनं निर्भर्त्सनमनुस्वारलोपात्, निरनुवर्तित्वं, असंवासः कृतनाशश्च असाम्यं, एतान्यपि क्रोधशब्देनोच्यंते तत्कार्यत्वात्फले हेतूपचारात्. एतान्याचरन् जंतुर्बध्नाति घनं चिक्कणं गाढं निबिडं कर्म ज्ञाना-

वरणाद ॥ ३०३ ॥ मानपर्यायानाह—

माणो मयहंकारो । परपरिवाओ य अत्तओक्करिसो परपरिभवोवि य तहा। परस्स निंदा असूया य ३०४

व्याख्या—मानो मदोऽहंकारः परपरिवादश्चात्मोत्कर्षः परपरिभवोऽपि च तथा परस्य निंदा असूया च ३०४

हीला निरोवयारि—त्तणं निरवणामया अविणओ य ॥ परगुणपच्छायणया । जीवं पाडंति संसारे ।३०५।

व्याख्या—हीला निरुपकारित्वं निरवनामता अविनयश्च परगुणप्रच्छादनता, एतान्यपि मानध्वनिनाभिधीयंते, पूर्वोक्तयुक्तेः, एतानि च क्रियमाणानि जीव पातयंति संसारे इति ॥ ३०५ ॥ अधुना मायापर्यायानाह—

माया कुडंगपच्छण्ण—पावया कूडकवडवंचणया ॥ सव्वत्थअसब्भावो । परनिक्खेवावहारो य ॥ ३०६ ॥

व्याख्या-माया, कुडंगिः, प्रच्छन्नपापता, कूट, कपट अनुस्वारलोपात् , वंचना सर्वत्रासद्भावः, परनिक्षेपापहारश्च ॥

छलछोमसंवइयरो । गूढायारत्तणं मई-कुडिला ॥ वीसंभव्वायणंपि य । भवकोडिसएसुवि नडंति ॥३०७॥

व्याख्या—छलछद्मसव्यतिकरो गूढाचारित्व, मतिः कुटिला, विश्रंभ, घातनमपि चैतानि मायाशब्देनोच्यंते. प्रागुक्तन्यायादमूनि च भवकोटीशतेपु विनाटयंति जीवं तत्कारिणमिति गम्यते ३०७ सांप्रतं लोभपर्यायानाह—

लोभो अइसंचयसील—या य किलिट्ठत्तणं अइममत्तं॥कप्पण्णमपरिभोगो । नट्ठविणिट्ठे य आगह्लं ३०८

व्याख्या—लोभोऽतिसंचयशीलता च क्लिष्टत्वमतिममत्वं, तथा कल्पमुपभोगार्हं यदन्नमशनं तस्य तृष्णा

तिरेकादपरिभोगः, मकारोऽलाक्षणिकः, नष्टविनष्टे च कचिद्वस्तुनि मूर्छातिरेकादाकल्पं मार्य रोगावाप्तेः, नष्टं च अश्वादिवन्नतमेव यन्नागतं विनष्टं धान्यादिवत्, निक्षिप्तमेव यत्प्रलीनं तदुच्यत इति ॥ ३०८ ॥

मुच्छा अइबहुधणलोभ–या य तब्भावभावणा य सया ॥ बोलंति महाघोरे । जरमरणमहासमुद्दंमि ३०९

व्याख्या—मूर्छा अतिबहुधनलोभता च सदा लोभभावना गाढं चित्तरंजनेत्यर्थः. एतानि च बोलयंति निमज्जयंति महाघोरेऽतिरौद्रे जरामरणमहासमुद्रे जीवमिति. एतानि लोभशब्देनोच्यंते उक्तादेव हेतोः. महात्मा ज्ञाततत्त्वः कषायान्निगृह्णीयात्तद्गुणमभिधित्सुराह— ॥३०९॥ यस्तु

एएसु जो न वट्टिज्जा । तेणं अप्पा जहट्ठिओ नाओ ॥ मणुआण माणणिज्जो । देवाणवि देवयं हुज्जा ३१०

व्याख्या—एतेषु क्रोधादिषु यो न वर्तेत तेनात्मा यथास्थितो ज्ञानदर्शनसुखवीर्यात्मकः कर्मव्यतिरेकी ज्ञातः, अत एवासौ मनुजानां माननीयः पूजनीयः, देवानामपि शक्रादीनां देवता देवो भवेत् पूज्यत्वादिति. ॥ ३१० ॥ यस्तु क्रोधादीन्न निराचष्टे तस्य यत्संपद्यते तदाह—

जो भासुरं भुअंगं । पयंडदाढाविसं विघट्टेइ ॥ तत्तो चिय तस्संतो रोसभुअंगोवमाणमिणं ॥ ३११ ॥

व्याख्या—यो दुर्बुद्धिर्भास्वरं रौद्रं भुजंगं सर्पं प्रचंडदंष्ट्राविषं उत्कटाशीविषं विघट्टयति कलिंचादिना चाल-यति, तत एव भुजंगात्तस्यांतो विनाशः संपद्यते, रोषभुजंगोपमानमिदं क्रोधसर्पोपमेया, क्रोधमूर्तिरत्नेन

विनश्यतीत्यर्थः. ॥ ३११ ॥

जो आगलेइ मत्तं, । कयंतकालोवमं वणगइंदं ॥ सो तेणं चिय छुज्जइ । माणगइंदेण इत्थुवमा ॥३१२॥

व्याख्या—य,आकलयति गृह्णाति मत्तं मदोत्कटं कृतांतकालोपमं मृत्युकालतुल्यं वनगजेंद्रमरण्यकरिणं, स तेनैव कारिणा कुटयते चूर्ण्यते, मानगजेंद्रेणैपोपमा, मानमपि कुर्वस्तथा प्रलीयत इति भावः. ॥ ३१२ ॥

विसवल्लिमहागहणं, जो पविसइ साणुवायफरिसविसं । सो अचिरेण विणस्सइ, माया विसवल्लिगहणसमा

व्याख्या—विषप्रधाना वल्ल्यो विषवल्ल्यः, तासां महागहनं बृहद्गह्वरं विषवल्लिमहागहनं यः प्रविशति, किंभूतं ? अनुकूलो वातोऽनुवातः, महानुवातेन वर्तत इति सानुवातं, सानुवातं स्पर्शविषं यस्मिंस्तत्तथा, गंधेन स्पर्शेन च यन्मारयतीत्यर्थः, स प्रविशन्नचिरेण क्षिप्रं विनश्यति, माया विषवल्लिगहनसमा, तद्वन्मारकत्वादिति. ॥ ३१३ ॥

घोरे भयागरे सागरम्मि तिमिममगरगाहपउरम्मि । जो परिवसइ सो पविसइ, लोभमहासागरे भीमे ३१४

व्याख्या—घोरे रौद्रे,अत एव भयंकरे भीत्युत्पत्तिस्थाने,क्व? सागरे,किंभूते? तिमिमकरग्राहप्रचुरे, तिमयो मत्स्याः, मकरा मत्स्यविशेषाः,ग्राहा जलचरविशेषाः,तैः प्रचुरो यः स तथा तस्मिन् यः प्रविशति स किं प्रविशति ? लोभमहासागरे भीमे,तस्याप्यनंतदुःखजलचराकुलत्वादिति. ३१४ एवं क्रोधादिस्वरूपं निश्चित्याप्यकार्येभ्यो न निवर्तंते

प्राणिनः कर्मपरतंत्रत्वात्, आह च—

गुणदोसबहुविसेसं, पयं पयं जाणिऊण नीसेसं । दोसेसु जणो न विरज्जइत्ति कम्माण अहिगारो ३१५

व्याख्या–गुणा ज्ञानादयः,दोषाः क्रोधादयः,गुणदोषाणां बहुर्यथाक्रमं मोक्षसंसारहेतुतया विशेषो यस्मिंस्तद्-गुणदोषबहुविशेषं,पदं पदमिति वीप्सया सर्वसंग्रहमाह,तथाहि–ज्ञानादीनां मोक्षहेतुत्वप्रतिपादकानि,क्रोधादीनां संसारकारणतावेदकानि, सर्वाण्येव भगवदागमपदानि ज्ञात्वा निःशेषं संपूर्णतया, तथापि दोषेभ्यः पापानुष्ठा-नेभ्यो जनो न निवर्तते, अयं कर्मणामधिकारोऽवसर इति ३१५ तदियता ग्रंथेन प्रतिद्वारगाथायां यदुक्तं ' क्रोधो मानो माया लोभो इति ' तद्व्याख्यातं, अधुना हास्यद्वारमधिकृत्याह—

अट्टहासकली—किलत्तणं हासखिड्डजमगरई । कंदप्पं उवहसणं, परस्स न करंति अणगारा ॥ ३१६ ॥

व्याख्या—अट्टहासो विवृतवदनस्य सशब्दं हसनं तं, केलिः क्रीडा, केलिना किरति विक्षिपति परानिति केलिकिलः, तद्भावस्तत्त्वं, 'हासखिड्डुत्ति' कौकुच्यकरणं, यमकं काव्यालंकारविशेषस्तत्ररतिस्तां, उपलक्षणत्वा-त्सर्वामेव सरागकाव्यरतिं, कंदर्पं सामान्येन हासं,उपहसमुत्प्रासनं परस्य,एतत्सर्वमेव न कुर्वत्यनगाराः साधव इति गतं हास्यद्वारं, अधुना रतिद्वारमाश्रित्याह--

साहूणं अप्परुई, ससरीरपलोअणा तवे अरई । सुत्थिअवन्नो अइपहरिसो य नत्थी सुसाहूणं ॥ ३१७ ॥

व्याख्या—साधूनामात्मनि रुचिर्मा मे शीतं, मा मे तापो भृशादित्यात्मवल्लभतात्मरुचिर्नास्तीति संबंधः, स्वशरीरप्रलोकना गाढमात्मतनुनिरीक्षणं नास्त्यत एव प्रसंगतस्तत्कार्यमाह, तपस्यनशनादावरतिर्नास्ति, स्वतनुवर्णाद्युत्कर्षपरो हि न तपसि रज्यते. तथा सुस्थितोऽहमिति वर्ण आत्मश्लाघा सुस्थितवर्णोऽतिप्रहर्षश्च महत्यपि लाभादिके हर्षहेतौ नास्ति सुसाधूनां. साधुग्रहणे सत्यपि पुनः सुसाधुग्रहणं एवंभूता एव सुसाधवो भवंतीति ज्ञापनार्थं. ॥ ३१७ ॥ गतं रतिद्वारं, सांप्रतमरतिद्वारमाचष्टे—

उव्वेयओ अ अरणामओ अ अरमंतिया य अरई य । कलिमलओ अ अणेगग्गया य कत्तो सुविहियाणं ?

व्याख्या--उद्वेग एव उद्वेगकः, मनाग्धर्मधृतेश्चलनं,चशब्दाः स्वागतानेकभेदसूचनार्थाः, अरणं प्रक्रमाद्विषयेषु गमनं,तदेवामयश्चित्तरोगोऽरणामयः,रममाणा रमंती धर्मध्याने क्रीडंती चित्तचेष्टोच्यते, सैव रमंतिका, अरमंतिका धर्मध्यानवैमुख्यमित्यर्थः. अरतिर्गाढं चित्तोद्वेगः,कलमलको विषयलौल्यात्तदप्राप्तौ चेतसः क्षोभः,अनेकाग्रता इदं परिधास्ये इदं पश्यामि एतद्भक्षयामीत्यादिचित्तविसंस्थूलता,एतत्सर्वमपि कुतः सुविहितानां ? धर्मशुक्लध्यानभावितचित्तत्वान्नैवेत्यभिसंधिः. ॥ ३१८ ॥ गतमरतिद्वारं, अधुना शोकद्वारमधिकृत्याह--

सोगं संतावं अधिइं च मन्नुं च वेमणस्सं च । कारुन्न रुन्नभावं,न साहु धम्मिम्मि इच्छंति ॥ ३१९ ॥

व्याख्या—शोकः स्वजनमरणादौ चित्तखेदस्तं, संतापः स एवाधिकतरस्तं, अधृतिः क्वचित्क्षेत्रादौ तद्वियो-

गद्गुदितां, चशब्दा एतेऽप्युक्तार्थाः, मन्युः शोकातिरेकात् श्रोतसां निरोधस्तं, वैमनस्यं आत्मघातादिचिंतनं, ईषद्रुदितं, तद्भावो महता शब्देनाक्रंदनं तं,किं ? न साधुधर्मे इच्छंति तीर्थकरादयः,चित्तसमाधानसाध्यत्वात्तस्येति ॥ ३१९ ॥ गतं शोकद्वारं, अधुना भयद्वारमुररीकृत्याह—

भयसंखोहविसाओ, मग्गविभेओ विभीसियाओ अ । परमग्गदंसणाणि य, दढधम्माणं कओ हुंति ? ३२०

व्याख्या—भयं हीनसत्वतयाकस्मिकं, संक्षोभश्चौरादित्रासः, विषादो दैन्यं, मार्गविभेदः पथि गच्छतः सिंहादिभयादुद्वर्तनं, विभीषिका वेतालादिभिर्विंत्रासनानि, चः प्राग्वत्, परमार्गदर्शनानि भयादन्येषां वर्तनकथनानि, वा, सर्वाण्यप्येतानि दृढधर्माणां धर्मेनिश्चलचित्तानां कुतो भवंति ? न कुतश्चिन्निर्भीकत्वात्. इह च मार्गविभेदोविभी षिकाश्चेत्येतत्पदद्वयं जिनकल्प्यपेक्षं द्रष्टव्यं. ॥ ३२० ॥ इति गतं भयद्वारं, अधुना जुगुप्साद्वारमुररीकृत्याह—

कुच्छा चिलीणमलसंकडेसु उव्वेयओ अणिट्ठेसु । चक्खुनियत्तणमसुभेसु नत्थि दव्वेसु दंताणं ॥ ३२१ ॥

व्याख्या—कुत्सा निंदा, चिलीणमलसंकटेषु अशुच्यादिक्लेशप्रचुरेषु मृतकलेवरादिषु उद्वेगकोऽनिष्टेषु मलक्लिन्नस्वदेहवस्त्रादिषु चक्षुर्निवर्तनमशुभेषु कृमिजालोल्बणसारमेयादिषु नास्ति द्रव्येषु दांतानां वशीकृतेंद्रियाणां साधूनां जुगुप्सारहितत्वात्तेषामिति ॥ ३२१ ॥ तदेवं सकलमोहजालोन्मूलनप्रवणेऽपि साधुधर्मे जाते बहून् कर्मप-

रतत्रतथान्यथाकारिणोऽवलोक्येदमाह—

एयंपि नाम नाऊण, मुज्झियव्वंति नूण जीवस्स। फेडेऊण न तीरइ, अइबलिओ कम्मसंघाओ ।३२२।

व्याख्या—एतदप्यनंतरोक्तं कषायनोकषायनिग्रहपरमपि शब्दाद्वक्ष्यमाणं भगवद्वचो नामेति सुप्रसिद्धं ज्ञात्वा, तथापि मोहितव्यमिति यन्मूढैर्भूयते तन्नूनं निश्चितं जीवस्य 'फेडेऊण न तीरइत्ति' अपनेतुं न शक्यते. अतिबलिकः कर्मसंघातः,स हि ज्ञाततत्त्वमपि सत्त्वं बलादकार्ये प्रवर्तयति. किं कुर्मः? केवलं वयं द्रष्टार इति ३२३ गतं सप्रसंगं जुगुप्साद्वारं. तद्गतौ च व्याख्याता प्रतिद्वारगाथा, तद्व्याख्यानाच्च गतं कषायद्वारं, अधुना गौरवद्वारं व्याचिख्यासुस्तावद्गौरवस्वरूपमाह—

जह जह बहुस्सुओ सम्मओ अ सीसगणसंपरिवुडो अ। अविणिच्छिओ अ समए, तह तह सिद्धंतपडिणीओ

व्याख्या–यथा यथा बहुश्रुतः श्रमणमात्रेण,सम्मतश्च तथाविधलोकस्य. शिष्यगणसंपरिवृतश्च बहुमूढपरिवारश्च, मूढानां तथाविधपरिग्रहणात् ,अविनिश्चितश्चाज्ञाततत्वश्च समये सिद्धांते,ज्ञाततत्त्वस्य ऋद्धिरससातगौरवेषु प्रतिबंधाभावात् ,तद्वतः परमार्थतो ज्ञानशून्यत्वात्. तथा तथासौ वस्तुस्थित्या सिद्धांतप्रत्यनीकः सिद्धांतविनाशकस्तल्लाघवापादानादिति. ॥ ३२३ ॥ सांप्रतमृद्धिगौरवं तद्वद् द्वारेणाह—

पवराइं वत्थपायासणोवगरणाइँ एस विभवो मे। अविय महाजणनेया, अहंति अह इड्ढिगारविओ ३२४

व्याख्या—प्रवराण्युत्तमानि वस्त्रपात्रासनोपकरणान्यधिकृत्यासौ मन्यते एष विभवो मे, अयं समृध्द्युपचयो मम, अपि चेत्यभ्युचये, महाजननेता प्रधानलोकप्रभुरहमिति. अथैष एवंभूतः सन् ऋद्ध्या प्राप्तौत्सुक्येन अप्राप्तप्रार्थनया च गौरवमात्मनो निबिडकर्मपरमाणुग्रहणेन गुरुत्वं, तद्विद्यते यस्यासौ ऋद्धिगौरविक इति. २२४

अधुना रसगौरवमधिकृत्याह—

अरसं विरसं लूहं जहोववन्नं च निच्छए भुत्तुं । निद्धाणि पेसलाणि य, मग्गइ रसगारवे गिद्धो ॥३२५॥

व्याख्या—अविद्यमानरसमरसं हिंग्वादिभिरसंस्कृतमित्यर्थः. विरस विगतरसमतिपुराणोदनादि. रूक्षं स्नेहरहितं वल्लचनकादि यथोपपन्नं च निरुपधिलब्ध्या संपन्नमिति भावः,नेच्छति भोक्तुं. किं तर्हि ? स्निग्धानि, प्रचुरस्नेहानि, पेशलानि मनोज्ञानि अन्नानीति गम्यते, मृगयते वांछति, रसगौरवे सति गृद्धो लौल्याध्मात इति. २२५

अधुना सातगौरवमाश्रित्याह—

सुस्सूसई सरीरं, सयणासणवाहणापसंगपरो । सायागारवगुरुओ दुक्खस्स न दइ अप्पाणं ॥ ३२६ ॥

व्याख्या—शुश्रूषते, अनेकार्थत्वाद्धातूनां प्रतिक्षणं संस्कुरुते शरीरं वपुः, शयनं तूल्यादि, आसनं मसूरकादि, तयोर्वाहना निःकारणः परिभोगस्तस्यां प्रसंगो गाढमासक्तिः, तत्परस्तत्प्रधानः शयनासनवाहनाप्रसंग पर इति. सातं सुखं तेन गौरवमुक्तस्वरूपं, तेन गुरुः स एव गुरुकः सातगौरवगुरुकः सन् दुःखस्य न ददात्यात्मानं,

न तद्रूपोति भावः ॥ ३२६ ॥ गतं गौरवद्वारं, अधुनेंद्रियद्वारं व्याचिख्यासुस्तद्वशवर्तिनां दोषानाचष्टे—

तवकुलछायाभंसो, पंडिच्चप्फंसणा अणिट्ठपहो । वसणाणि रणमुहाणि य, इंदियवसगा अणुहवंति ३२७

व्याख्या —तपोऽनशनादि, कुलमुग्रादि, छाया लोकमध्ये उन्नतिः, तासां भ्रंशोऽधःपतनं विनाशस्तपःकुलच्छायाभ्रंशः, तमिंद्रियवशगा अनुभवंतीति क्रियापेक्षया प्रथमा द्वितीयार्थे सर्वत्र दृष्टव्या प्राकृतत्वात्. तथा 'पंडिच्चफंसणत्ति' पांडित्यमालिन्यं, तथा चोक्तं—सकलकलाकलापकुशलोऽपि हि कविरपि पंडितोऽपि हि । प्रकटितसर्वशास्त्रतत्त्वोऽपि हि वेदविशारदोऽपि हि॥ मुनिरपि वियति विततनानाद्भुतविभ्रमदर्शकोऽपि हि। स्फुटमिह जगति तदपि न स कोऽपि हि यदि नाक्षाणि रक्षति १ तथा अनिष्टः संसारस्तस्य पथो मार्गोऽनिष्टपथस्तं, तदुक्तं–दिवसरजनिसारैः सारितं पक्षगेहं । समयफलकमेतन्मंडितं भूतधात्र्यां ॥ इह हि जयति कश्चिन्मोक्षमक्षैर्विधेयै—रधिगतमपि चान्ये विप्लुतैर्हारयंति ॥ १ ॥ तथा व्यसनानि नानाकारा विपत्तीः, यथोक्तं—सक्तः शब्दे हरिणः । स्पर्शे नागो रसे च वारिचरः ॥ कृपणपतंगो रूपे । भुजगो गंधे ननु विनष्टः ॥ १ ॥

पंचसु सक्ताः पंच । विनष्टा यत्रागृहीतपरमार्थाः ॥ एकः पंचसु सक्तः । प्रयाति भस्मांततां मूढः ॥२॥ तथा रणमुखानि च संग्रामद्वाराणि विनाशनिमित्तानि,चशब्दात्समस्तदोषानिंद्रियवशगा अनुभवंति उपभुंजते, तथाहि—जयो यद्बाहुबलिनि । दशवक्त्रे निपातनं ॥ जिताजितानि राजेंद्र । हृषीकाण्यत्र कारणं ॥ १ ॥ ननु चास्य प्रकरणस्य सिद्धांतोद्धारत्वात्तस्य च परमपुरुषप्रणीतत्वात् तद्वाक्यानां स्वतः प्रामाण्यात्तद्बलेनैवाशेषवचनानामपि

प्रतिप्रावातेभास्करवत् स्वपरप्रकाशकत्वान्न युक्तस्तत्समर्थनार्थं सुभाषितांतरोपन्यासः, सत्यमेतत्त्रैवात्र संदेहः, पां मार्गानुसारिणां प्रायः समाना बुद्धिरिति दर्शनार्थं यदुच्येरन्न कश्चिद्दोषः. शीलसूरिप्रभृतिभिरप्या- गदौ बहुशस्तानि लिखितानि,अयं प्रायोऽभिप्रायः, यदिवा मादृशैः प्रबलमोहावृततया नासौ शक्यो मतिगंभीरत्वादिति. ॥३२७॥ यदि तर्हींद्रियवशं ये गच्छंति तेषामेष दोषस्ततः किं कर्तव्यमित्यत्त आह—

रूवं ददठुं पुणो न इक्खिज्जा। गंधे रसे अ फासे अमुच्छिओ उज्जमिज्ज मुणी ३२८

वेणुवीणामृदंगकाकलीगीतानां न रज्ज्येत न रक्तः स्यात्, रूपं कमनीयं दृष्ट्वा कथंचित्पुनस्तद्दी- नेनं,आदित एव दृष्टिं संहरेद्भास्करादिव,न पुनः पश्येदित्यर्थः. गंधे रसे च स्पर्शे सुंदरेमूर्छितोऽ- श्वादसुंदरेषु शब्दादिष्वद्विष्टः, किं? उद्यच्छेत् स्वानुष्ठानोद्यमं कुर्यात्, कः? मुनिः, तस्यैवोपदेशा- र्हत्वात्॥ अन्यच—

य इंदिआणि घाएहऽणं पयत्तेणं। अहियत्थे निहयाइं, हियकज्जे पूयणिज्जाइं ३२९

नहतानीष्टानिष्टे स्वगोचरे रागद्वेषपरिहारेण तत्कार्याभावात्प्रलयं नीतानि. अनिहतान्याकारद- विषयग्रहणाच्च. तदुक्तं—न शक्यं रूपमद्रष्टुं। चक्षुर्गोचरमागतं ॥ रागद्वेषौ तु यौ तत्र। तौ बुधः र्जयेत् ॥१॥ ततश्च निहतानि च तान्यनिहतानि चेति समासः, निहतानि हतानि साधूनामिंद्रियाणि भवंति,

चशब्दः अण इत्यस्मात्परतः संबध्यते, अणं च संस्कृते ऋणमुच्यते, तचेह कर्म, तद्वशेन भवचारकेऽवस्थानात्, ततश्च न केवलमिंद्रियाणि, ऋणं च साधूनां निहतानिहतं वर्तते, बहुतरं हतं, स्तोकमहतमित्यर्थः. यत एवमतो घातयत हे मुनयः प्रयत्नेन कर्तृभूतेन स्वयं प्रयोजका भूत्वा दग्धरज्जूकल्पान्यक्षाणि, कर्म च यत्नतो विनाशयतेत्यर्थः, यावचाद्यापि सर्वथा घातो न संपद्यते तावत्किं विधेयमित्याह—अहितार्थे स्वविषये रागद्वेषकरणलक्षणे प्रवर्तमानानि निहितानि कार्याणि, ततो निरोधव्यानीति भावः. हितकार्ये भगवदागमश्रमणजिनबिंबावलोकनादौ प्रगुणानि कार्याणीति शेषः. तथा च कृतानि पूजनीयानि जायंत इति. अथवा हन् हिंसागत्योरिति धातुपाठान्निहतानि निर्गतानि स्वविषयग्रहणार्थं प्रवृत्तानि हयानिवात्यंतचटुलत्वादश्वानिव, वशब्दस्योपमानार्थत्वादिंद्रियाणि घातयत ! णमिति वाक्यालंकारे, प्रयत्नेन, तानि चाहितार्थे अहितार्थनिमित्तं संसारकारणमित्यर्थः, निहतानि न संभवंतीत्यध्याहारः, किंतु हितकार्ये हितकार्यनिमित्तं मोक्षकारणमिति हृदयं, भवंति निहतानीति वर्तते, इह लोकेऽपि च पूजनीयानि भवंति, निहंतुरपि पूज्यत्वे तदाधिपत्वात्तेषु पूज्यत्वव्यपदेश इति. यद्विवा निभ आकारमात्रं, निभं गच्छंतीति निभगानि यानींद्रियाणि तानि परमार्थतो हतान्येव, चशब्दस्यावधारणार्थत्वात्, अन् साधुर्घातयेत्, पदैः सुबंततिङंतैस्त्रायते संसारिकदुःखेभ्यः सत्त्वान् रक्षतीति पदत्रः सिद्धांतः, तेन तदुपदेशेनेत्यर्थः. एतदुक्तं भवति—

सिद्धांतोपदेशेन रागद्वेषनिराकरणादाकारमात्रशेषतां नीतानि यानींद्रियाणि तानि ...

निग्रह्णियात,सुकरस्तं निग्रह इत्यर्थः.अत एवाह–अहिदष्टेन विषधरभक्षितेनेह प्रवचने तानीदृशानित्याह–हितकार्ये हि गताविति धातुपाठाद्गतकार्ये भाविनि भूतवदुपचारात्कृतकृत्येमुनाधित्यर्थः,अत एव पूतनिर्याणि, तत्र पूतानि रागद्वेपमलक्षालनाच्छुद्धानि, निर्यास्यंतीति निर्याणि, प्रत्यासन्नकेवलज्ञानत्वात्, पूतानि च तानि निर्याणि चेति समासः. यदिवा स्निह्यतीति स्निहो विपयलोलः प्राणी,स्निहं द्यंति खंडयंतीति स्निहदानि हतानि च, हनेर्गत्यर्थत्वात्, ...र्थानां च ज्ञानार्थत्वाद् ज्ञातानि प्रतीतानीत्यर्थः,इंद्रियाणि च,हननं घातस्तस्मिन् कर्तव्ये संयमजीवितनाशकत्वेन ...नीति हृदयं.अतः कारणाद्विद्यमानधनोऽधनः साधुस्तं प्रत्याप्तेन सर्वज्ञेन,किंभूतेन? अधिकानि समर्गलानि ...महाप्रभावादीनि तंध्ध्रंसनक्षमाण्यस्त्राणि प्रहरणानि यस्या सावधिकास्त्रस्तेन. किं? इध्कामः, इंदधाति धार- इधं चित्तं, तद्गच्छंतीति इधगानि चित्तनिश्रितानि तदायत्तत्वात्, कं सुखं तस्य ज्यानिर्हानिः, संपदादि- त् क्किप्, कज्जा ह्ना यस्मात्स ह्नकज्जो नष्टसुखहानिर्मोक्षस्तस्मिन्,तन्निमित्तं, किं? पूतनीयानि, पूतं करोतीति ...दनीयच्, स्वयं हननेन पवित्रीकर्तव्यानीति भावः. तदयं संक्षेपार्थः—

...ने विपयलंपटखंडकानि संयमजीवितघातकत्वेन च प्रसिद्धानींद्रियाणि, तानि भगवता सर्वोपाय- साधोश्चित्ताश्रितानि तस्यै मोक्षनिमित्तं स्वयं हत्वा शोधनीयानि, भगवदनुभावादेवेंद्रियजयान्मो- इति गर्भार्थः इह चातिगंभीरार्थत्वात् प्रस्तुतगाथाया एतावंतोऽर्था निरूपिताः, यः शोभनः स ग्राह्यः, ...र्थ संभवति स स्वधिया वाच्य इति गतमिंद्रियद्वारं ॥ २९ ॥ अधुना मदद्वारमधिकृत्याह—

जाइकुलरूवबलसुअतवलाभिस्सरिय अट्ठमयमत्तो । एयाइं चिय बंधइ, असुहाइँ बहु च संसारे ॥३३०॥

व्याख्या—जातिर्ब्राह्मणादिः, कुलं उग्रादि, रूपं शरीरसौंदर्य, बलं शक्तिः, श्रुतमागमाधिगमः, तपोऽनशनादि, लाभोऽभीष्टवस्तुप्राप्तिः, ऐश्वर्यं संपदः प्रभुत्वं. जातिश्चकुलं चेत्यादिद्वंद्वः. तान्येवाष्टमदाश्चित्तोन्मादहेतुत्वात् . तैर्मत्तोघूर्णितः प्राणी, किं ? एतान्येव जात्यादीनि बध्नात्युपार्जयत्यशुभानि क्लिष्टानि, कथं ?, बहु क्रियाविशेषणमेतत् बहुशोऽनंतगुणानीत्यर्थः. चशब्दोऽध्यवसायवैचित्र्यात्तारतम्यदर्शनार्थः,संसारे भवे इति ३० तथाहि

जाईए उत्तमाए, कुले पहाणम्मि रूवमिस्सरियं । बलविज्जाय तवेण य, लाभमएणं च जो खिंसे ३३१

व्याख्या—जात्या उन्मत्तयाहेतुभूतया, कुले प्रधाने सति, रूपमैश्वर्यमाश्रित्य, बलेन सह विद्या बलविद्या, तया हेतुभूतया, तपसा च लाभमदेन वा यो मंदबुद्धिः 'खिंसेत्ति' परं हीलयेत, यदुताहं सुजात्योऽयं तु कुजात्य इत्यादि ॥ ३१ ॥ स किमित्याह—

संसारमणवयग्गं, नीयट्ठाणाइं पावमाणो य । भमइ अणंतं कालं, तम्हा उ मए विवज्जिज्जा ॥ ३३२ ॥

व्याख्या—संसारं 'अणवयग्गंति' अलब्धपरपारं नीचस्थानानि निंद्यजात्यादीन् प्राप्नुवन् , तुशब्दस्यावधारणार्थत्वादासादयन्नेव भ्रमति पर्यटति अनंतं कालं, यत एवं तस्मात , तुशब्दोवधारणे, तस्य च व्यवहितः संबंधः, मदान् जात्यादीन् विवर्जयेदेव परिहरेदेवेति ॥ ३३२ ॥ किंच—

युग्मम् ॥ सुट्ठुंऽपि जई जयंतो, जाइमयाईसु मज्जई जो उ। सो मेअज्जरिसि जहा, हरिएसबलु व्व परिहाई

व्याख्या-सुष्ठ्वपि सातिशयमपि यतिः साधुर्यतमानः तपोऽनुष्ठानादावुपयुक्तो जातिमदादिषु एतद्विषये माद्यति मत्तो भवति यः, तुशब्दात्सद्भिरपि तत्कारणैः, स किं ? मेतार्यऋषिर्यथा हरिकेशबलो वा परिहीयते जात्यादिहानिं प्राप्नोति. तथाहि—तौ जन्मांतरे विहितजातिमदोपार्जितकर्मपरिणतिवशादत्यजत्वेन जाताविति, एतत्कथानके प्राक्कथिते ॥ ३३ ॥ गतं मदद्वारं, अधुना ब्रह्मगुप्तिद्वारमुररीकृत्याह—

इत्थिपसुसंकिलिट्ठं, वसहिं इत्थाकहं च वज्जंतो। इत्थिजणसंनिसिज्जं, निरूवणं अंगुवंगाणं ॥ ३३४ ॥

व्याख्या— स्त्रीग्रहणेन देवीनार्योर्ग्रहण, पशुशब्देन तिरश्च्यः, स्त्रीपशुभिः संक्लिष्टा तदाकीर्णत्वात् स्त्रीपशुसंक्लिष्टा तां वसतिं, स्त्रीकथां च नेपथ्यादिकां, तासां चात्केवलानां धर्मकथनमपि वर्जयन् यतेत इति सर्वत्र क्रिया. स्त्रीजनसन्निषद्यां तदुत्थानानंतर तदासनोपविशनरूपां, तथा निरूपण निरीक्षणमंगोपांगानां स्तननयनादीनां वर्जयन्निति वर्तते. ॥ ३३४ ॥

पुव्वरयाणुस्सरणं, इत्थीजणविरहरूवविलवं च। अइबहुअं अइबहुसो, विवज्जयंतो अ आहारं ॥ ३३५ ॥

व्याख्या—पूर्वरतानुस्मरणं गृहस्थावस्थाविलसितचिंतनं, स्त्रीजनविरहरुतविलाप च, कुड्यांतरितानां मैथुनसंसक्तानां क्वणितध्वनिं च वर्जयन्नित्यर्थः. तथा अतिबहु मात्रातिरिक्तं अतिबहुशः प्राणी तद्रसोत्कटतया नाना-

कारं विवर्जयंश्चाहारं, अनेन द्विगुप्ती गृहीते ॥ ३५ ॥

वज्जंतो अ विभूसं, जइज्ज इह बंभचेरगुत्तीसु । साहु तिगुत्तिगुत्तो, निहुओ दंतो पसंतो अ ॥ ३३६ ॥

व्याख्या—वर्जयंश्च विभूषां शरीरसंस्काररूपां राढां बहुशो वर्जयन्निति वचनमत्यादरख्यापनार्थं, यतेयत्नं कुर्यादिह प्रवचने ब्रह्मचर्यगुप्तिषु मैथुनविरतिरक्षणविषये, कः ? साधुः, किंभूतः ? त्रिगुप्तगुप्तो निरुद्धमनोवाक्कायो निभृतः शांततया निर्व्यापार इव, दांतो जितेंद्रियः प्रशांतश्च निगृहीतकषायः सन्निति ॥ ३३६ ॥ अन्यच्च—

गुज्झोरुवयणकक्खोरुअंतरे तह अणंतेर दट्ठुं । साहरइ तओ दिट्ठिं, न य बंधइ दिट्ठिए दिट्ठिं ॥३३७॥

व्याख्या—गुह्यमवाच्यं, ऊरू उपरितनजंघे, वक्त्रं वदनं, कक्षे बाहुमूले, उरो वक्षः, गुह्यं च ऊरू चेत्यादिद्वंद्वः, एतेषामंतराण्यवकाशास्तानि, तथा स्तनांतराणि कुचावकाशान् दृष्ट्वा कथंचिदवलोक्य संहरति भास्करादिव निवर्तयति ततो गुह्यादेर्दृष्टिं, महानर्थहेतुत्वात्तस्याः, न च नैव बध्नाति दृष्टौ दृष्टिं, न योषिद्दृष्टौ दृष्टिं मीलयतीत्यर्थः. ॥ ३३७ ॥ गतं ब्रह्मचर्यद्वारं, सांप्रतं स्वाध्यायद्वारं विवरीतुकामस्तद्गुणानाचष्टे—

सज्झाएण पसत्थं, झाणं जाणइ य सव्वपरमत्थं । सज्झाए वट्टंतो, खणे खणे जाइ वेरग्गं ॥ ३३८ ॥

व्याख्या—स्वाध्यायेन वाचनादिना क्रियमाणेन प्रशस्तं धर्मशुक्लरूपं ध्यानं भवति, जानाति च तत्कर्ता सर्वपरमार्थं समस्तस्यापि जगतस्तत्त्वं, स्वाध्याये वर्तमानः क्षणे क्षणे याति वैराग्यं, रागादिविषमंत्ररूपत्वात्तस्य,

॥ ३३८ ॥ कथं सर्वपरमार्थं जानातीत्याह —

उड्ढमहतिरियलोए, जोइसवेमाणिया य सिद्धी य। सव्वो लोगालोगो, सज्झायविउस्स पच्चक्खो॥३३९॥

व्याख्या—इह यथासंभवं पदानां संबंधात् स्वाध्यायविदो वाचनादिवेदिन ऊर्ध्वं वैमानिकाः सिद्धिश्च प्रत्यक्षा, अधो नरकाः, तिर्यग्ज्योतिष्काः, किं बहुना? सर्वलोकालोकः स्वाध्यायविदः प्रत्यक्ष इति. तदुपयुक्तोऽसौ समस्तार्थान् साक्षादिव पश्यतीति भावार्थः. ॥ ३३९ ॥ व्यतिरेकमाह—

जो निच्चकाल तवसंजमुज्जओ नवि करेइ सज्झायं। अलसं सुहसीलजणं, नवि तं ठावेइ साहुपए ३४०

व्याख्या—यो नित्यकालं तपःसंयमोद्यतः सदाऽप्रमाद्यपि, अपिशब्दस्येह संबंधात्, न करोति स्वाध्यायं, स किमित्याह, अलसं कर्तव्येषु शिथिलमत एव सुखशीलजनं सातलंपटलोकं नापि नैव तं निजशिष्यवर्गादिकं स्थापयति साधुपदे, स्वाध्यायमन्तरेण ज्ञानाभावात्. कथंचित्स्वयमप्रमादिनापि न परत्राणं कर्तुं न शक्यमित्यभिसंधिः, ॥ ३४० ॥ गतं स्वाध्यायद्वारं, अधुना विनयद्वारमधिकृत्याह—

विणओ सासणे मूलं, विणीओ संजओ भवे। विणयाओ विप्पमुक्कस्स, कओ धम्मो कओ तवो? ।३४१।

व्याख्या—शिष्यंतेऽनेन जीवा इति शासनं द्वादशांगं, तस्मिन् विनयो मूलं, यत उक्तं—' मूलाओ खंधप्पभवो दुमस्सेत्यादि' अतो विनीतः संयतो भवेत्, विनयाद्विप्रमुक्तस्य दुर्विनीतस्य कुतस्तपो कुतो धर्मःनिर्मूलत्वादिति ॥ ३४१ ॥ किं च—

विणओ आवहइ सिरिं, लहइ विणीओ जसं च कित्तिं च। न कयाइ दुव्विणीओ, सकज्जसिद्धिं समाणेइ ३४२

व्याख्या—विनीयतेऽनेनाष्टप्रकारं कर्मेति विनयः स आवहति श्रियं प्रापयति लक्ष्मीं, लभते विनीतः पुरुषो यशश्च मानभटनिराकरणपराक्रमलभ्यं, कीर्तिं च पुण्यभाजनत्वात्, विपक्षे बाधामाह—न कदाचिद् दुर्विनीतः स्वकार्यसिद्धिमात्मीयप्रयोजननिष्पत्तिं समापयत्युपायाभावादिति ॥ ३४२ ॥ गतं विनयद्वारं, अधुना तपोद्वारं तत्र कैश्चिद् दुःखरूपं प्रत्यपादि, अतस्तन्निरासयन्नाह—

जह जह खमइ सरीरं, धुवजोगा जह जहा न हायंति। कम्मक्खओ अ विउलो, विवित्तया इंदियदमो अ ३४३

व्याख्या—यथा यथा क्षमते शरीरं ध्रुवयोगा नित्यव्यापाराः प्रत्युपेक्षणादयो यथा यथा न हीयंते न हानिं गच्छंति तथा तपः कार्यमिति वाक्यशेषः, तन्नैवं दुःखरूपमभ्युपगंतव्यं, महादुःखितानां नारकादीनां महातपस्वि-त्वप्रसंगात्, योगिनां शमसुखतृप्तानां विपर्ययसिद्धेः, किं तर्हि? सुखात्मकमेव क्षायोपशमिकत्वाद्देहमनोबाधाविर-हेण विधानाच्च कथंचिद्देहपीडाभावेऽपि व्याधिचिकित्सातुल्यत्वात्तस्या मनःप्रमोदहेतुत्वाद्रत्नप्राप्तिवदित्यलं विस्त-रेण. एवं च कुर्वतां कर्मक्षयश्च विपुलो भवति. तथा विविक्तता देहादिपार्थक्यभावना, इंद्रियदमश्चाक्षनिग्रह इति. ॥३४३॥ गतं तपोद्वारं, अधुना शक्तिद्वारावसरः, तत्र शक्तिवैकल्यमालंबनीकृत्य यः प्रमादं कुर्यात्तं शिक्षयितुमाह—

जइ ता असक्कणिज्जं, न तरसि काऊण तो इमं कीस। अप्पायत्तं न कुणसि, संजमजयणं जईजोगं? ॥३४४॥

व्याख्या—यदि तावदशकनीयमशक्यं भिक्षुप्रतिमादिकं न तरसि कर्तुं न शक्नोषि विधातुं तथाविधसंहननादिविकलत्वात्, तत इमां किमिति केन हेतुनात्मायत्तां स्वाधीनां न करोषि त्वं संयमयतनामनंतरोक्तां समित्यादिपदेषु यथाशक्ति विधेयप्रतिषेध्यविधानप्रतिषेधरूपामित्यर्थः, यतियोग्यां तपस्विनामुचितां, इदानींतनसाधुभिरपि सति विवेके कर्तुं शक्यामित्यभिप्रायः. ॥ ३४४ ॥ ननु चागमस्योत्सर्गापवादरूपत्वादपवादेन प्रमादं कुर्वतोऽपि को दोषः? नैतत्, अस्ति, सम्यगज्ञाततत्वानामेवं जल्पनात्, तथाहि—

जायम्मि देहसंदेहयम्मि जयणाइ किंचि सेविज्जा। अह पुण सज्जो अ निरु—ज्जमो य तो संजमो कत्तो ३४५

व्याख्या—जाते देहसंदेहे प्राणांतकारिणि व्यसने समुत्पन्ने इत्यर्थः, यतनया पंचकपरिहाण्यादिकया किंचिदनेषणीयादिकमल्पसावद्यं सेवेत भजेत, नान्यथा, यथागमाभिप्रायः, तथा चोक्तं—कारणपडिसेवावि हु। सावज्जानिच्छए अकरणिज्ज ॥ बहुसो वियारइत्ता। एसणिज्जेसु कज्जेसु ॥१॥ जइविय समणुन्नाया। तहवि य दोसो न वज्जणे दिट्ठो ॥ दढधम्मया हु एवं। न य भिक्खुणो सेव निद्दयया ॥ २ ॥ इत्यादि. अथ पुनरिति पक्षांतरद्योतकः, सज्जश्च क्षमो निरोगो वा, तथापि निरुद्यमश्च, शक्तौ सत्यामपि शिथिल इत्यर्थः, साधुरिति गम्यते, ततस्तस्य संयमः कुतः? नैव, भगवदाज्ञापराङ्मुखत्वादिति. अतो यथाशक्ति विहितानुष्ठानेष्वादरो विधेय इति. ॥ ३४५ ॥ गतं शक्तिद्वारं, तद्गतो च व्याख्याता प्रस्तुतद्वारगाथेति. ननु यदि क्षमस्य शैथिल्ये संयमाभावः, ग्लाने न, तर्हि किं कर्तव्यमित्युच्यते, उद्यम एव, किं चिकित्सापि न कर्तव्येति चेत, वाढं, यत आह—

मा कुणउ जइ तिगिच्छं। अहियासेऊण जइ तरइ सम्मं ॥ अहियास्सि तस्स पुणो। जइ से जोगा न हायंति ॥

व्याख्या—मा करोतु माकार्षीद्यतिः साधुश्चिकित्सां रोगप्रतीकारात्मिकां, कर्मक्षयसाहाय्यकारित्वाद्रोगाणां, तदतिसहनस्य परीषहजयरूपत्वात्. किं सर्वथा? नेत्याह, अतिसोढुं तत्पीडां क्षंतुं यदि तरति शक्नोति सम्यग्वैक्लव्यं विना, अन्यच्च धृतिबलादतिसहमानस्य क्षममाणस्य पुनर्यदि से तस्य साधोः संहननाभावात्, योगा व्यापाराः प्रत्युपेक्षणादयो न हीयंते न हानिं गच्छंति, तद्धानौ तु चिकित्सापि क्रियत इत्याकूतं. ॥३४६॥ यद्येवं शेषसाधुभिस्तर्हि किं विधेयमित्याशंक्य यस्य यत्कार्यं तदाह—

निच्चं पवयणसोहा—कराण चरणुज्जआण साहूणं ॥ संविग्गविहारीणं । सव्वपयत्तेण कायव्वं ॥ ३४७ ॥

व्याख्या—नित्यं प्रवचनशोभाकराणां शासनभूषणानां चरणोद्यतानामप्रमादिनां साधूनां संविग्नं समोक्षाभिलाषं विहर्तुं शीलं येषां ते संविग्नविहारिणस्तेषां सर्वप्रयत्नेन समस्तादरेण कर्तव्यं वैयावृत्त्यादिकमिति गम्यते ॥

हीणस्सऽवि सुद्धपरू—वगस्स नाणाहियस्स कायव्वं ॥ जणचित्तग्गहणत्थं । करिंति लिंगावसेसेऽवि ३४८

व्याख्या—हीनस्यापि, चारित्रमधिकृत्य न्यूनस्यापि शुद्धप्ररूपकस्य यथावस्थितमागमं व्याचक्षाणस्य ज्ञानाधिकस्य कस्य कर्तव्यमुचितं, अभ्युच्चयमाह— जनचित्तग्रहणार्थं लोकरंजननिमित्तं, माभूत् प्रवचनमालिन्यं, परस्परमप्येते मत्सरिण इति प्रवादात्कुर्वंति सुसाधवो लिंगावशेषेऽपि पार्श्वस्थादिविषयमपि यदुचितमिति. ॥३४८॥

किंभूतास्तर्हि लिंगावशेषा भवंतीत्याह—

दगपाणं पुप्फफलं । अणेसणिज्जं गिहत्थकिच्चाइं ॥ अजया पडिसेवंती । जइवेसविडंवगा नवरं ॥ ३४९ ॥

व्याख्या—' दगपाणंति ' सचित्तोदकपानं, पुष्पाणि च फलानि चेति द्वंद्वैकवद्भावात्पुष्पफलं सचित्तमेव. अनेपणीयमाधाकर्मादि, गृहस्थकृत्यानि गृहकरणादीनि, किं ? अयतामुत्कलपापव्यापाराः संतः प्रतिसेवंते भजंते यतिवेपविडंवकाः, नवरं रजोहरणादिपु साधुनेपथ्यविगोपकाः केवलं ये ते लिंगावशेषा उच्यंते, यतिगुणरहितत्वादिति. ॥ ३४९ ॥ तेपां चापायानाह—

ओसन्नया अवोही । पवयणउब्भावणा य वोहिफलं ॥ ओसन्नोऽवि वरंपिहु । पवयणपब्भावणापरमो ॥३५०॥

व्याख्या -इह लोक एव तावदवसन्नताऽवसन्नता लोकमध्ये परिभूतता भवति, परलोकेचावोधिर्जिनप्रणीतधर्माप्राप्तिर्भवति, भगवदाज्ञाविराधकत्वात्, यतः प्रवचनोद्भावनैव, चशब्दस्यावधारणार्थत्वाद्बोधिफलं, कारणे कार्योपचारात्सैव वोधिरूपं कार्यमित्यर्थः. सा च संविग्नविहारिभिरेव क्रियते, तदनुष्टानदर्शनेन प्रवचनश्लाघोत्पत्तेः, तदिदं सर्वावसन्नानधिकृत्योक्तं, देशावसन्नस्तु आत्मनः कर्मपरतंत्रतां वुध्यमानः परेभ्यः प्रकाशयन् वादलब्धिव्याख्यानादिभिः प्रवचनमुद्भावयेत्, श्लाघ्यश्चासौ. यत आह, अवसन्नोऽपि वरं प्रधानः, पृथु इति क्रियाविशेषणं, शेपसुसाधुगुणप्रकाशनादिना सविस्तरं यथा भवतीत्यर्थः, तथा प्रवचनोद्भावनापरम आगमोन्न-

तिप्रधान इति. ॥ ३५० ॥ व्यतिरेकमाह—

गुणहीणो गुणरयणा—यरेसु जो कुणइ तुल्लमप्पाणं ॥ सुतवस्सिणो य हीलइ । सम्मत्तं कोमलं तस्स ॥३५१॥

व्याख्या—गुणहीनश्चरणादिशून्यो गुणरत्नाकरैः, सप्तमी तृतीयार्थे, सुसाधुभिर्यदि करोति तुल्यमात्मानं, वयमपि साधव इति लोकमध्ये व्याख्यापयत्यनुचसुतपस्विनश्च हीलयति, मायाविनः खल्वेते लोकप्रतारका इत्यादिना, तदासौ मिथ्यादृष्टिरेव, यतः सम्यक्त्वं गुणवत्प्रमोदसाध्यं पेलवं निस्सारं, तत्कल्पनया विद्यमानमप्यनेन परमार्थतस्तदभावं लक्षयति तस्य सुतपस्विहीलकस्येति ॥ ३५१ ॥ सुसाधुभिः पुनः प्रवचनभक्तिमनुवर्तयद्भिर्यद्विधेयं तदाह—

ओसन्नस्स गिहिस्स व,। जिणपवयणतिव्वभावियमइस्स ॥ कीरइ जं अणवज्जं। दढसम्मत्तस्सऽवत्थासु ३५२

व्याख्या—अवसन्नस्य सामान्यशब्दतया पार्श्वस्थादेः, गृहिणो वा सुश्रावकस्य, किंभूतस्य ? जिनप्रवचनतीव्रभावितमतेरर्हदागमगाढतररंजितचित्तस्येत्यर्थः,क्रियते यदनवद्यं यदुचितमित्यर्थः, स कदाचित्प्रियधर्ममात्रतया भवत्यत आह, दृढसम्यक्त्वस्य, किं सर्वदा क्रियते ? नेत्याह, अवस्थासु द्रव्यक्षेत्रकालभावापदादिषु कारणेषु नान्यदा. ॥ ५२ ॥ तथा चाह—

पासत्थोसन्नकुसील । नीयसंसत्तजणमहाच्छंदं ॥ नाऊण तं सुविहिया । सव्वपयत्तेण वज्जंति ॥ ३५३ ॥

व्याख्या—पार्श्वे ज्ञानादीनां तिष्ठतीति पार्श्वस्थः, आवश्यकादिष्ववसदनादवसन्नः, कुत्सितं शीलमस्येति कुशीलः,नित्यमेकत्र वासयोगान्नित्यः,परगुणदोषेपु संसर्गात्संसक्तः, पार्श्वस्थश्चावसन्नश्चेत्यादिद्वंद्वः, त एव जनस्तं, तथा यथाछंदं स्वाभिप्रायमागमनिरपेक्षतया वर्तत इति यथाछंदस्तं, पृथक्करणमस्य गुरुतरदोपख्यापनार्थं, ज्ञात्वा तं पार्श्वस्थादिजनं सुविहिताः साधवः सर्वप्रयत्नेन वर्जयंति तत्संगस्यानर्थहेतुत्वादिति. ॥ ३५३ ॥ केपु पुनः स्थानेपु वर्तमानः पार्श्वस्थादिकतां यातीत्याशङ्क्य तान्येवाह—

बायालमेसणाओ । न रक्खइ धाइसिज्जपिंडं च ॥ आहारेइ अभिक्खं। विगईओ सन्निहिं खाई ॥ ३५४ ॥

व्याख्या—द्विचत्वारिंशदेपणाः पूर्वोक्तस्वरूपा न रक्षति धात्रीशय्यापिंडं च, तत्र धात्रीपिंडो यो बालक्रीडनादिना लभ्यते, तस्य चैपणाग्रहणेनागतत्वेऽपि पुनः पृथगुपादानं यतेर्गृहस्थसंबंधो महतेऽनर्थायेति दर्शनार्थं, शय्यापिंडः शय्यातरपिंडस्तं च न रक्षित, आहारयत्यभीक्ष्णमनवरत विकृतीः क्षीराद्याः सन्निधिं पर्युपितगुडादिरूपं खादति भक्षयतीति ॥ ३५४ ॥

सूरप्पमाणभोजी । आहारेई अभिक्खमाहारं ॥ न य मंडलीए भुंजइ । न य भिक्खं हिंडई अलसो ३५५

व्याख्या—सूर्यप्रमाणेन यावदादित्यस्तिष्ठति तावद्भोक्तुं शीलमस्येति सुरप्रमाणभोजी, आहारयत्यभीक्ष्णमाहारमशनादिकं न च नैव मंडल्यां साधुभिः सह भुंक्ते, न च भिक्षां हिंडतेऽलसः, आलस्योपहतत्वादिति. ३५५

कीवो न कुणइ लोअं, लज्जई पडिमाइ जल्लमवणेइ । सोवाहणो अ हिंडइ, वंधइ कडिपट्टयमकज्जे ३५६

व्याख्या—क्लीबो हीनसत्वो न करोति लोचं केशोत्पाटनं, लज्जते प्रतिमया कायोत्सर्गेण, जल्लं मलमपनयति करोद्वर्तिकादिभिः,सहोपानद्भ्यां वर्तत इति सोपानत्कश्च हिंडते,बध्नाति कटीपट्टकं कट्यां चोलपट्टकमकार्ये कारणं विना, एतच्च सर्वपदेषु संयंधनीयमिति. ॥ ३५६ ॥

गामं देसं च कुलं, ममायए पीठफलगपडिबद्धो । घरसरणेसु पसज्जइ, विहरइ य सकिंचणो रिक्को ३५७

व्याख्या—ग्राममुपलक्षणं चेदं नगरादीनां, देशं वा लाटदेशादिकं, कुलमुग्रादिकं, 'ममायएत्ति' ममैतदिति मन्यते, पीठफलकप्रतिबद्ध ऋतुबद्धेऽपि तत्सेवनासक्त इत्यर्थः. गृहशरणेषु भवननीव्रेषु, गृहस्मरणेषु वा पूर्वोपभुक्तचिंतनेषु प्रसज्यते घटते, विहरति च सकिंचनः, हिरण्यादियुक्तस्तथापि रिक्तोऽहं निर्ग्रंथोऽहमिति प्रकाशयति. ३५७

नहदंतकेसरोमे, जमेइ उच्छोलधोअणो अजओ । वाहेइ य पलियंकं, अइरेगपमाणमत्थुरइ ॥ ३५८ ॥

व्याख्या—नखदंतकेशरोमाणि यमयति रादया समारचयतीत्यर्थः,उत्सोलनया प्रभूतोदकेनायतनया धावनं हस्तपादादिक्षालनं यस्यासावुत्सोलधावनः, अत एवायतो गृहस्थकल्पत्वात्, वाहयति परिभुंक्ते पल्यंकमतिरेकप्रमाणं संस्तारकोत्तरपट्टातिरिक्तं, 'अच्छुरइत्ति' आस्तृणाति संस्तारयतीत्यर्थः ॥ ३५८ ॥

सोवइ य सव्वराई. नीसद्दमचेयणो न वा झरइ । न पमज्जंतो पविसइ, निसिहीयावस्सियं न करे ॥३५९

व्याख्या–स्वपिति च सर्वरात्रि 'नीसङ्गंति' निष्प्रसरमचेतनः काष्ठवत्, ' न वाज्झरइत्ति ' स्वाध्यायं न करोतीत्यर्थः, अमृजन् रजोहरणेन प्रविशति वसतौ तमसीति गम्यते, नैषेधिकीं प्रविशन्नावश्यिकीं निर्गच्छन्न करोतीति. ३५९

पाय पहे न पमज्जइ, जुगमायाए न सोहए इरियं। पुढवीदगअगणिमारुअवणस्सइतसेसु निरविक्खो ३६०

व्याख्या—पादौ पथि मार्गे रजोदिग्धौ विजातीयपृथिवीसंक्रमे न प्रमार्जयति, युगमात्रया दृष्ट्येति गम्यते, न शोधयति, ईर्यतेऽस्यामितीर्या, तां गच्छन् वर्तनीमित्यर्थः, पृथिव्युदकाग्निमारुतवनस्पतित्रसेषु एतद्विषये निरपेक्षः, तदुपमर्दं कुर्वन्निःशंक इति. ॥ ३६० ॥

सव्वं थोवं उवहिं, न पेहए न य करेइ सज्झायं। सद्दकरो झंझकरो, लहुओ गण भेयतत्तिल्लो ॥ ३६१ ॥

व्याख्या–अपिशब्दस्य लुप्तनिर्दिष्टत्वात्सर्वस्तोकमप्युपधिं मुखवस्त्रादिकां न प्रेक्षते, न च करोति स्वाध्यायं, उक्तमेवेदमिति चेन्न, तत्र रात्रौ, अत्र तु दिवापीति विशेषः, यदिवा तत्र गुणन, इह च वाचनादिकमिति. शब्दकरो रात्रौ सुप्ते जने बृहच्छब्दकरणशीलः, झंझा कलहः, तत्करो राटीप्रिय इत्यर्थः, लघुरेव लघुकस्तुच्छत्वात्, गणो गच्छस्तस्य भेदः परस्परं चित्तविश्लेषस्तस्मिन् 'तत्तिल्लोत्ति' तप्तिमान् गणभेदतप्तिमान् गच्छविघटनतत्पर इत्यर्थः. ॥ ३६१ ॥

खित्ताईयं भुंजइ, कालाईयं तहेव अविदिन्नं। गिण्हइ अणुइयसूरे, असणाई अहव उवगरणं ॥ ३६२ ॥

व्याख्या—क्षेत्रातीतमतिक्रांतद्विगव्यूतं भुंक्तेऽशनादीति संबंधः, कालातीतं ग्रहणकालात्पौरुषीत्रयातिवाहनेन,

तथैवाविदत्तं गृह्णात्यनुदिते सुरेऽशनाद्यथयोपकरणं वस्त्रादि भगवद्भिरननुज्ञातत्वादिति. ॥ ३६२ ॥

ठवणकुले न ठवेई, पासत्थेहिं च संगयं कुणई । निच्चमवज्झाणरओ, न य पेहपमज्जणासीलो ॥ ३६३ ॥

व्याख्या—स्थापनाकुलानि बृहत्प्रयोजनसाधकानि गुरोर्गृहाणि न स्थापयति, निष्कारणं तेषु प्रविशतीत्यर्थः. पार्श्वस्थैश्च सह संगतिं मैत्रीं कुरुते, नित्यापध्यानरतः सदा दुष्टचित्तो न च प्रेक्षाप्रमार्जनाशीलः प्रमत्तत्वादिति. ॥

रीयइ य दवदवाए, मूढो परिभवइ तहय रायणिए । परपरिवायं गिण्हई, निट्ठुरभासी विगहसीलो ३६४

व्याख्या—रीयते गच्छति, 'दवदवाएत्ति' द्रुतं द्रुतं मूढः परिभवति तिरस्कुरुते तथा च रत्नाधिकान् ज्ञानादिप्रधानान्. परपरिवादं गृह्णाति, अन्यश्लाघां करोति, निष्ठुरभाषी कर्कशवचनो विकथाशीलः स्त्र्यादिकथातत्पर इति ॥ ३६४ ॥

विज्जं मंतं जोगं, तेगिच्छं कुणइ भूइकम्मं च । अक्खरनिमित्तजीवी, आरंभपरिग्गहे रमइ ॥ ३६५ ॥

व्याख्यां -विद्यां देव्यधिष्ठितां, मंत्रं देवाधिष्ठितं, योगं विशिष्टद्रव्यात्मकं, चिकित्सां रोगप्रतीकारात्मिकां करोत्यसंगतानामिति शेषः. भूतिकर्म चाभिमंत्रितभूतिपरिवेषादिकं, करोति, एषणाग्रहणेन गतमेतदिति चेन्न, तत्राहारार्थं, अत्र तूपरोधादिनेति विशेषः. तथा क्षरनिमित्ताभ्यां लेखशालादैवज्ञत्वाभ्यां जीवितुं शीलमस्येत्यक्षरनिमित्तजीवी, तन्मात्रवृत्तिकोऽत एव पूर्वोक्ताद्विशेषः, आरंभेण सह परिग्रह आरंभपरिग्रहस्तस्मिन् पृथिव्या-

गुपमर्दं यथोक्तोपकरणातिरिक्तग्रहणे च रमते म इति. ॥ ३६५ ॥

कज्जेण विणा उग्गहमणुजाणावेइ दिवसओ सुअइ । अज्जियलाभं भुंजइ, इत्थिनिसिज्जासु अभिरमइ ॥

व्याख्या—कार्येण विना निःप्रयोजनमवग्रहं देवेंद्रादीनामनुज्ञापयति, दिवसतो दिने स्वपिति शेते. आर्यिकालाभं भुंक्ते, स्त्रीनिषद्यासु तदुच्छानानंतरमभिरमत इति. ॥ ३६६ ॥

उच्चारे पासवणे, खेले सिंघाणए अणाउत्तो । संथारग उवहीणं, पडिक्कमइ वा सपाउरणा ॥ ३६७ ॥

व्याख्या—उचारे प्रश्रवणे खेले संघानके पूर्वोक्तरूपेऽनायुक्तोऽयत नया तदुत्सर्गकारित्वात, संस्तारगत उपधीनां चोपरिस्थित इति गम्यते किं? प्रतिक्रामति, प्रतिक्रमणं करोति सप्रावरणो वामाछादनो वा, वाशब्दस्य व्यवहितः संबंध इति. ॥ ३६७ ॥

न करेड पहे जयणं, तलियाणं तह करेइ परिभोगं । चरइ अणुबद्धवासे सपक्खपरक्खओमाणे ॥ ३६८ ॥

व्याख्या—न करोति पथि मर्गे यतनां प्राशुकोदकान्वेपणादिकां, तलिकयोरुपानहोस्तथा करोति परिभोगं, शक्तोऽपि तद्विना मार्गे गतुं अत एव प्रागुक्ताद्विशेपः. चरत्यनुबद्धवर्षं वर्षाकाले, स्वपक्षपरपक्षापमाने साधुप्रचुरे भीताद्याकुले च लाघवहेतो क्षेत्रे सुखशीलतया विहरतीत्यर्थः. ॥ ३६८ ॥

संजोअइ अइबहुअं, इंगाल सधूमगं अणट्ठाए । भुंजइ रूवबलट्ठा, न धरेइ अ पायपुंछणयं ॥ ३६९ ॥

व्याख्या— संयोजयति लौल्यात्क्षीरशर्करादीनां युक्तिं विधत्ते, मकारोऽलाक्षणिकः, अतिबह्वेवातिबहुकं प्रमाणातिरिक्तं भुंक्ते इति संबंधः, ' इंगालत्ति ' सशब्दलोपात्सांगारं रागेणेत्यर्थः, सधूमकं द्वेषेणेति यावत्, ' अणट्ठाणत्ति ' अनर्थं वेदनादिकारणरहितं भुंक्ते रूपबलार्थं सौंदर्यपुष्ट्योर्निमित्तं, न धारयति च पादपुच्छनकं रजोहरणमिति. ॥ ३६९ ॥

अट्ठम छट्ठ चउत्थं, संवच्छर चाउमास पक्खेसु । न करेइ सायबहुलो, न य विहरइ मासकप्पेणं ३७०

व्याख्या—अष्टमं च षष्ठं च चतुर्थं चेति द्वंद्वैकवद्भावः, तद्यथाक्रमं, संवत्सरश्च चातुर्मासश्च पक्षश्चेति द्वंद्वस्तेषु इह तु बहुवचननिर्देशः प्रतिसंवत्सरादिकरणज्ञापनार्थः, न करोति सातबहुलः सुखशीलतया, न च विहरति मासकल्पेन तत्काले सत्यपीति. ॥ ३७० ॥

नीयं गिण्हइ पिंडं, एगागी अच्छए गिहत्थकहो । पावसुआणि अहिज्जइ, अहिगारो लोगगहणम्मि ३७१

व्याख्या—नित्यं प्रतिदिनमेकगृहाद् गृह्णाति पिंडिं, एकाकी केवल आस्ते. गृहस्थानां सत्का कथा यस्य स गृहस्थकथः पापश्रुतानि दिव्यादीन्यधीते पठति, अधिकारस्तृप्तिस्तस्य लोकग्रहणे जनचित्तरंजने, न स्वानुष्ठाने इति. ॥ ३७१ ॥

परिभवइ उग्गकारी, सुद्धं, मग्गं निगूहए बालो । विहरइ सायागुरुओ, संजमविगलेसु खित्तेसु ॥ ३७२ ॥

व्याख्या—परिभवति न्यक्करोति उग्रकारिण उद्यतविहारिणः साधून्, शुद्धममलं मार्गं ज्ञानादिकं निगूहयति प्रच्छादयति बालोऽज्ञो विहरति सुसातगुरुकः सुखतत्परः संयमविकलेषु सुसाधुभिरवासितेषु संसक्त्यादिदोषयुक्तेषु वा क्षेत्रेष्विति. ॥ ३७२ ॥

उग्गाइ गाइ हसई, असंवुडो सइ करेइ कंदप्पं । गिहिकज्जचिंतगोऽविय ओसन्ने देइ गिण्हइ वा ।३७३।

व्याख्या—उद्गायति महाध्वनिना, गायति मनाक्, हसति चासंवृतो विवृतवदन इत्यर्थः, सदा करोति कंदर्पं तदुद्दीपकैर्वचनादिभिः परानपि हासयतीत्यर्थः, गृहकार्यचिंतको गृहस्थप्रयोजनशीलकः, अपि चेत्यभ्युच्चये, अवसन्नाय सप्तमी चतुर्थ्यर्थे, ददाति वस्त्रादिकं, गृह्णाति वा तत इति. ॥३७३॥

धम्मकहाओ अहिज्जइ, घराघरं भमइ परिकहंतो अ । गणणाइ पमाणेण य, अइरित्तं वहइ उवगरणं ३७४

व्याख्या—धर्मकथा आजीविकार्थमधीते, अत एव 'घराघरंति', गृहे गृहे भ्रमति परिकथयंश्च ता इति, गणनया—जीणा बारसरूवाइं । थेरा चोद्दसरूविणो ॥ अज्जाणं पन्नवीसं तु । अओ उड्ढं उवग्गहो ॥ १ ॥ इत्यनया, प्रमाणेन च—कप्पा आयपमाणा । अड्ढा अड्ढा उ आयया हत्थो ॥ इत्यादिनातिरिक्तमुक्तात्समर्गलं वहत्युपकरणमिति. ॥ ७४ ॥

बारस बारस तिण्णि य, काइयउच्चारकालभूमीओ । अंतो बहिं च अहियासि अणहियासे न पडिलेहे ३७५

व्याख्या—द्वादश द्वादश तिस्रश्च यथाक्रमं कायिकोचारकालभूमिः प्रश्रवणपुरीषकालग्रहणस्थानानीत्यर्थः, न प्रत्युपेक्षते इति संबंधः. तत्रालयपरिभोगस्यांतर्मध्ये पट्, बहिश्च षडेव कायिकायाः, उच्चारस्यापि तथैव, 'अहियासित्ति' सहिष्णोरसहिष्णोश्चार्थाय न प्रत्युपेक्षते, आसां च प्रमाणं तिर्यग्जघन्येन हस्तमात्रं. अधश्च-त्वार्यंगुलान्यचेतनमिति. ॥ ३७५ ॥

गीयत्थं संविग्गं, आयरिअं मुअइ वलइ गच्छस्स । गुरुणो य अणापुच्छा, जं किंचिवि देइ गिण्हइ वा ॥

व्याख्या—गीतार्थमधिगतागमं, संविग्नं मोक्षाभिलाषिणं, आचार्यं निजगुरुं मुंचति निःप्रयोजनं परित्यज्य गच्छतीत्यर्थः. इह च गीतार्थसंविग्नग्रहणमगीतार्थासंविग्नं पुनरागमप्रतिपादितक्रमेणात्मानं मोचयित्वा मुंचतोऽपि न दोष इति ज्ञापनार्थं, वलते तदुत्तरदानायाभिमुखो भवति गच्छस्य कचिचोदनं कुर्वंत गुरुंप्रतीति गम्यते, गुरोश्चानापृच्छया तृतीयार्थे प्रथमा, यत्किंचिद्वस्त्रादिकं ददाति कस्मैचित्, गृह्णाति वा कुतश्चिदिति. ॥ ३७६ ॥

गुरुपरिभोगं भुंजइ, सिज्जासंथारउवकरणजायं। किन्तिय तुमंति भासइ, अविणीओ गव्विओ लुद्धो ३७७

व्याख्या—गुरुपरिभोगं गुरुणा परिभुज्यमानं भुंक्ते, किं तदित्याह, शय्यासंस्तारोपकरणजातं तत्र शेते यस्यामिति शय्या शयनभूमिः, संस्तारकः काष्टमयादिः, उपकरणजातं वर्षाकल्पादि, गुरोश्च संबंधि सर्वं वंद्यमेव भवति, न भोग्यं, तथाहूतः किमिति च भाषते, तत्र हि मस्तकेन वंदे इत्यभिधातव्यं, आलपंश्च त्वमिति

गुरुंप्रति भाषते, यूयमिति तत्र वक्तव्ये, बहुवचनार्हत्वात, अत एव विपरीतकरणादविनीतः अविनयहेतुमाह, गर्वितः मोत्सेकः, लुब्धो विषयादौ गृद्ध इति ॥ ३७७ ॥

गुरुपच्चक्खाणगिलाणसेहबालाउलस्स गच्छस्स । न करेइ नेव पुच्छइ, निद्धम्मो लिंगमुवजीवी ॥३७८॥

व्याख्या—गुरुः प्रतीतः, प्रत्याख्यानस्तत्मंबंधादनशनी क्षपको वा, ग्लानो रोगी, शिष्यकोऽभिनवदीक्षितः, बालः शिशुः, गुरुश्च प्रत्याख्यानश्चेत्यादिद्वंद्वः, तैराकुलः संकीर्णस्तस्य गच्छस्य न करोति यत्कृत्यं स्वयमेव नैव पृच्छति, विदुषः किं मया कर्तव्यमिति अत एव निर्धर्मो निराचारो लिंगोपजीविवेषोपजीविक इति. ॥ ३७८ ॥

पहगमणवसहिआहारसुयणथंडिल्लविहिपरिट्ठवणं । नायरइ नेव जाणइ, अज्जावट्टावणं चेव ॥ ३७९ ॥

व्याख्या—पथि गमनं च वसतिश्चाहारश्च स्वपनं च स्थांडिल्यं चेति द्वंद्वः, एषां विधिरागमोक्तः क्रमः, परिस्थापना अतिरिक्ताशुद्धभक्तपानोपकरणादीनां विधिना त्यागः,पथि गमनादिविधिना सह परिष्ठापना पथि गमनवसत्याहारस्वपनस्थांडिल्यविधिपरिष्ठापना, तां नाचरति जानन्नपि निर्धर्मतया,अथवा नैव जानाति न जानात्येव,आर्यावर्तनं चैव यथार्थिका वर्तयितव्याः संवाहनीयाः, तज्जानन्नपि नाचरति न जानात्येव वेति, ॥ ३७९ ॥

सच्छंदगमणउट्ठाणसोअणो अप्पणेण चरणेण । समणगुणमुक्कजोगी. बहुजीवखयंकरो भमइ ॥ ३८० ॥

व्याख्या—स्वच्छंदं स्वाभिप्रायं गुर्वाज्ञां विना गमनोत्थानस्वपनानि यस्य स तथा, अत एवात्मीयेन स्वबु-

द्विकल्पितेन चरणेनाचरणेन भ्रमतीति संबंधः. किंभूतः सन्नित्याह—श्रमणानां गुणा ज्ञानादयः श्रमणगुणाः, तेषु मुक्तस्त्यक्तो योगो व्यापारो येन स श्रमणगुणमुक्तयोगी, सर्वधनादिपाठादिन् समासांतः, अत एव बहु जीवक्षयकरोऽनेकप्राणिप्रलयकारी, अनुस्वारोऽलाक्षणिकः भ्रमत्यनर्थकमटाट्यत इति. ॥ ३८० ॥

वत्थिव्व वायपुण्णो, परिभमई जिणमयं अयाणंतो । थद्धो निव्विन्नाणो, नय पिच्छइ कंचि अप्पसमं ३८१

व्याख्या—वस्तिवचर्ममयो वातपूर्णो वायुपूरितोऽतिगर्वाध्मातत्वात्परिभ्रमति, जिनमतं मदगदौषधकल्पं सर्वज्ञवचनमजानन्, अत एव स्तब्धः शरीरेऽपि दर्शितगर्वचिह्नो निर्विज्ञानः, ज्ञानिनो गर्वाभावात्, न च नैवं पश्यति किंचिदात्मसममत्युत्सेकाज्जगदपि न्यूनं मन्यत इति. ॥ ३८१ ॥

सच्छंदगमणउट्ठाणसोअणो, भुंजई गिहीणं च । पासत्थाइट्ठाणा, हवंति एमाइया एए ॥ ३८२ ॥

व्याख्या—स्वच्छंदगमनोत्थानस्वपन इति पूर्ववत्, किमर्थं पुनरुपादानमिति चेत् सर्वे गुणा गुणवत्पारतंत्र्यसाध्या इति ज्ञापनार्थं, तद्रहितस्तु तेषामुपर्यपि न वर्तते, दूरतस्तत्संबंध इति, भुंक्ते गृहिणां च मध्य इति शेषः,किंयद्वाल मोहपरतंत्रचेष्टितं वक्ष्यते ! इति निगमयन्नाह—पार्श्वस्थादिस्थानानि भवंत्येवमादीन्येतानि, पुल्लिंगनिर्देशस्तु प्राकृतत्वाददुष्ट इति. ॥ ३८२ ॥ यद्येवं वर्तमानस्य पार्श्वस्थताद्यवाप्तिः, हंतेदानीं नास्ति कश्चित्साधुः, उद्यतविहारिणामपि ग्लानाद्यवस्थायामनेषणीयादौ प्रवृत्तिदर्शनात्, इति स्यादविषयविभागज्ञानां

मतिविभ्रमः, अनस्तद्व्यवच्छेदार्थमाह—

जो हुज्ज उ असमत्थो, रोगेण व पिल्लिओ झुरियदेहो। सव्वमवि जहाभणियं, कयाइ न तरिज्ज काउं जे ॥

व्याख्या—यो भवेत्त्वसमर्थः प्रकृत्यैव मंदसंहननत्वादशक्त एव यथोक्तं कर्तुं, तुशब्दस्यावधारणार्थत्वात्, रोगेण वा राजयक्ष्मादिना प्रेरितोऽतिपीडितत्वाद्यथोक्तकारणात्क्षिप्तः, 'झुरियदेहोत्ति' जराजीर्णकायः, अतस्तदवस्थोचितं किंचित्कर्तुं शक्तोऽपि सर्वमपि यथाभणितं यथोक्तं कदाचिन्न तरेत् शक्नुयात्कर्तुं, जेशब्दो वाक्यालंकारे इति ॥ ३८३ ॥

सोऽविय नियपरक्कमववसायधिईबलं अगूहंतो। मुत्तूण कूडचरियं, जई जयंतो अवस्स जई ॥ ३८४ ॥

व्याख्या—सोऽनंतरोक्तोऽपि चेत्यस्मादन्योऽपि द्रव्याद्यापद्गतः, किं? पराक्रमः संहननवीर्यं, तस्य व्यवसायो यत्ना चेष्टा, धृतिबलं मनोवीर्यं, पराक्रमव्यवसायश्च धृतिश्चेति द्वंद्वः, तयोर्बलं स्वकार्ये प्रवृत्तिसामर्थ्यं, निजमात्मीयं, तदेव निजकं, निजकं च तत्पराक्रमव्यवसायधृतिबलं चेति समासः तदगूहयन्नगोपयन्नप्रच्छादयन्नित्यर्थः. कथं? मुक्त्वा परित्यज्य कूटचरितं मायाचेष्टितं शाठ्यमित्यर्थः, यदि यतते प्रयत्नं करोति ततोऽवश्यं नियमाद्यतिः सुसाधुरेव, यथाशक्ति भगवदाज्ञाकरणात्, तत्कर्तुर्गौतमादेरिव यतित्वसिद्धेरिति. ।३८४। कूटचरितस्तर्हि किंभूतो भवतीत्याह-युग्मम् ॥ अलसो सढोऽवलित्तो, आलंबणतप्परो अइपमाई। एवंठिओऽवि मन्नई, अप्पाणं सुट्ठिओमि (म्हि) त्ति

व्याख्या—अलस आलस्योपहतः, शठो मायावि, अवलिप्तो गर्ववान्, आलंबनतत्परो यत्किंचिद्व्याजीकृत्य सर्वकार्येषु प्रवर्तते, अतिप्रमादी गाढं निद्रादिप्रमादोपेतः, एवंस्थितोऽपि मन्यते आत्मानं यदुत सुस्थितोस्मीति मायया च परेषामपि गुणवतामात्मनः ख्यापयति यः स कष्टचेष्टितो दृष्टव्य इति. ॥ ३८५ ॥ तथाविधस्य चापायं दृष्टांतेनाह—

**जोऽवि य पाडेऊणं, मायामोसेहिं खाइमुद्धजणं । तिग्गाममज्झवासी, सो सोअइ कवडखवगु व्व ॥३८६॥**

व्याख्या—योऽपि च पातयित्वात्मवशे इत्यध्याहारः, अपि चेत्यस्माद्वादकोऽपि पररंजनाप्रवणः, कथं ? 'मायामोसेहिंति' मायामृषावादैरलीकवचनचेष्टितैरित्यर्थः, खादयति वंचयति मुग्धजनं ऋजुलोकं, त्रयाणां ग्रामाणां समाहारस्त्रिग्रामं, तस्य मध्ये वस्तुं शीलमस्यासौ त्रिग्राममध्यवासी, कोऽसौ ? कपटक्षपको मायातपस्वी, स यथा शोचितवान् तद्वत्स शोचतीति संबंधः, ॥ ३८३ ॥ कथानकं चात्र—उज्जयिन्या घोरशिवनामा धूर्तो ब्राह्मणश्चर्मकारविषयं जगाम, मिलितस्तत्र धूर्ततस्कराणां, ऊचिरे ते तेनाहं मुनिधूर्तवेषं करोमि, भवद्भिश्च श्लाघनीयः, येन तुल्ये नैव लोकान् मुष्णीम इति, प्रतिश्रुतं, तैः ततो ग्रामत्रयमध्यवर्तिनि कानने कृतपरिव्राजकवेषोऽमावासांचक्रे. ते तु लोकसमक्षं मासक्षपकोऽयमिति शश्लाघिरे, पूजां च चक्रिरे तस्मै, ततो लोका निमंत्र्य निमंत्र्यतं गृहेषु नीत्वा स्नेनेव्य पर्यपूजुजन् . महाज्ञानिनं च तं मत्वा स्वगृहविभवमकथयन् , भाविलाभादिकं च पप्रच्छुः. स तं विश्रंभे ततश्चित्वा रात्राविनरैः संभूयामुषद् गृहाणि, अन्यदा तन्मध्याद् गृहीतः कश्चिदेकश्चौरः, तेन च ताड्यमानेन सर्वेऽप्याचचक्षिरे. विनाशितास्ते, परिव्राजकस्य तु ब्राह्मणत्वादुत्पाटिते लोचने, ततोऽसौ महावेदनार्त्तो लोकैर्निंद्यमानः

पश्चात्तापमाप हा किं मयेदृशमनुष्ठितमिति, तथाऽन्योऽपि जनवंचकः शोचतीत्युपनयः एते चैवंविधाः कर्मपरतंत्रतया तारतम्येनानेकाकारा भवंतीत्याह—

एगागी पासत्था, सच्छंदो ठाणवासि ओसन्नो । दुग्गमाईसंजोगा, जह बहुआ तह गुरू हुंति ॥ ३८७ ॥

व्याख्या— एकाकी केवलो धर्मबंधुरहितः, पार्श्वस्थो ज्ञानादिपार्श्ववर्ती, स्वच्छंदो गुर्वाज्ञाविकलः स्थानवासी सदैकत्र विहारो नित्यवासीत्यर्थः,अवसन्न आवश्यकादिषु शिथिलः,तदेतानि पञ्च पदानि,एषां च कचिदेकं भवति, कचिद् द्वे त्रीणि चत्वारि सर्वाणि वा,अत एवाह, द्विकादयः संयोगा भवंति,मकारोऽलाक्षणिकः, च तेषां. यथेति वीप्साप्रधानत्वाद्यथा यथा बहूनि पदानि, पुल्लिंगनिर्देशः प्राकृतत्वात्, तथा तथा गुरवः संयोगा भवंति, पदवृद्ध्या दोषवृद्धिरिति. ॥ ३८७ ॥ व्यतिरेकमाह—

गच्छगओ अणुओगी, गुरुसेवी अनियओ गुणाउत्तो । संजोएण पयाणं, संजमआराहगा भणिया ॥३८८॥

व्याख्या—गच्छगतः,अनेनैकाकित्वविरहं लक्षयति,अनुरूपो ज्ञानादिभिः सह योगः संबंधोऽनुयोगः, सोऽस्यास्तीत्यनुयोगी अनेन पार्श्वस्थताभावं दर्शयति, गुरून् सेवितुं शीलमस्येति गुरुसेवी,अनेन स्वच्छंदत्वायोगं योजयति, अनियतो मासकल्पादिविहारी,अमुना स्थानवासित्ववैकल्यं द्योतयति, गुणेषु प्रतिदिनक्रियादिषु आयुक्तोऽप्रमादी, एतेनावसन्नतापवैरीत्यं भावयति.संयोगेनामीषां पदानां द्व्यादिमीलकेन संयमाराधका भणिता...

इति गम्यते. अत्रापि यथा यथा पदवृद्धिस्तथा तथा गुणवृद्धिद्रष्टव्याेत. ॥ ३८८ ॥ ननु यदि स्थानवासित्वं दोषाय, कथमार्यमहुद्रादिभिस्तदनुष्टितं ? कथं चाराधकास्ते संपन्नाः ? इत्युच्यते, भगवदाज्ञाकारित्वात् , तथा चाह—

निम्ममा निरहंकारा,उवउत्ता नाणदंसणचरित्ते । एगखि (क्खे) त्तेऽवि ठिया,खवंति पोराणयं कम्मं ३८९

जियकोहमाणमाया, जियलोहपरीसहा य जे धीरा । बुड्ढावासेऽवि ठिया, खवंति चिरसचियं कम्मं ३९०

पंचसमिया तिगुत्ता, उज्जुत्ता संजमे तवे चरणे । वाससयंपि वसंता, मुणिणो आराहगा भणिया ॥३९१॥

व्याख्या -निर्गता ममेति बुद्धिर्येभ्यस्ते निर्ममाः, ममशब्दस्याव्ययत्वात् , निर्गतोऽहंकारो येभ्यस्ते तथा, निर्ममाश्च ते निरहंकाराश्चेति समासः, ते उपयुक्ता दत्तवाधानाः, क ? ज्ञानदर्शनचारित्रे, एतद्विषये, एकक्षेत्रेऽपि ग्रामादौ, अपिशब्दात् क्षीणजंघाबलत्वादिके सति पुष्टालंबने स्थिताः, नान्यथा, किं क्षपयंति ? पुरातनं बहुभवोपात्तं कर्मेति ॥ ३८९ ॥ तथा जितक्रोधमानमायाः, जितलोभपरीषहाश्च ये धीराः सत्ववंतस्ते वृद्धावासेऽपि प्राग्निरूपितशब्दार्थे स्थिताः क्षपयंति चिरसंचितं कर्मेति. ॥ ३९० ॥ तथा पंचभिः समितिभिः समिताः, तिसृभिर्गुप्तिभिर्गुप्तास्त्रिगुप्ताः, उद्युक्ताः संयमे तपसि चरणे वर्षशतमपि वसंत एकक्षेत्रे मुनय आराधका भणितास्तीर्थंकरैरिति. ॥ ३९१ ॥ आद्यगाथयैव गतार्थत्वादितरयोरभिधानं कथमिति चेद्भगवदाज्ञया तिष्टतां कथंचिदपि नास्ति दोषगंधोऽपीत्यतिशयख्यापनार्थं,तथा चोक्तं- एगक्खेत्तविहारी । कालाइक्कंतचारिणो जइवि ॥ तहवि य विसुद्धचरणा।

विसुद्धआलंबणा जेण ॥ १ ॥ आणाए अमुक्कधुरा । गुणवड्ढी जेण निज्जरा तेणं ॥ मुक्कधुरस्स न मुणीणो । सोही संपिज्जइ चरित्ते ॥२॥ गुणपरिवड्ढिनिमित्तं । कालाइ तेण हुंत देसाओ ॥ जहच्छओ बहिया हाणी । भवेज्ज तहियं न विहरेज्जा ॥३॥ इत्यादि. अमुमेव न्यायमशेषं कर्तव्यसंग्रहद्वारेण निगमयन्नाह—

तम्हा सव्वाणुन्ना सव्वानिसेहो य पवियणे नत्थि । आयं वयं तुलिज्जा, लाहाकंखि व्व वाणियओ ३९२

व्याख्या—यत एवं तत्स्थितमेतत्, सर्वप्रकारैरनुज्ञा यदुतेदं कर्तव्यमेवेति सर्वानुज्ञा तथा सर्वनिषेधो यदुतैवं कर्तव्यमेवेति प्रवचने सर्वज्ञागमे नास्ति,चशब्दस्येहावधारणार्थत्वेन संबंधान्नास्त्येव,सर्वकर्तव्यानां द्रव्यक्षेत्रकाल भावापेक्षया विधानान्निषेधाच द्रव्यादीनां च वैचित्र्येण क्वचिद्विधेयस्यापि निषेधावसरः स्यात्, निषिद्धस्य च विधानमापद्यते. तदुक्तं-उत्पद्येत हि सावस्था । देशकालमयान् प्रति ॥ यस्यामकार्यं कार्यं स्यात् । कर्मकार्यं तु वर्जयेत् ॥१॥ अत आयं ज्ञानादिलाभं,व्ययं तद्धानिं तुलयेदाकलयेत्, क इवेत्याह—लाभाकांक्षीव वणिजकः, यथासावायव्ययतुलनया बहुलाभे प्रवर्तते, तथा लाभे प्रवर्तेतेत्यर्थः, केवलं प्रवर्तमानेन रागद्वेषपरिहारेण सम्यगात्मा रंजनीयः, न शाठ्याद् दुष्टालंबनं विधेयं ॥ ३९२ ॥ यत आह—

धम्मम्मि नत्थि माया, न य कवडं आणुवत्तिभणियं वा । फुडपागडमकुडिल्लं, धम्मवयणमुज्जुयं जाण ॥

भणितं वा मदोपं परावर्जनार्थं नास्तीति वर्तते. किं तर्हि ? स्फुटं व्यक्तवर्णं, प्रकटमलज्जनीयं, अकुटिलं निर्मायं धर्मवचनमृजु मोक्षंप्रति प्रगुणं जानीहावबुद्ध्यस्वेति. ॥ १०३ ॥

नवि धम्मस्स भडक्का, उक्कोडा वंचणा व कवडं वा । निच्छम्मो किर धम्मो सदेवमणुआसुरे लोए ३९४

व्याख्या—नापि न संभाव्यते धर्मस्य भडक्का बृहदासनादिबाह्याटोपरूसाधनमितिशेपः, 'उक्कोडत्ति' उत्कोचा, यदि ममामेतद्देहि ततोऽहमिदं करोमीत्यादिलक्षणा, वंचना सैव तत्त्वदर्शनवद्विप्रतारणा, कपटं वा पूर्वोक्तं,धर्मस्य न साधनमिति, वर्तते एकार्थिकानि चैतानि,यद्येवं पूर्वगाथया गतार्थत्वात् किं पुनरभिहितानीति चेन्मायया सह धर्मस्यात्यंतविरोधं दर्शयितुं,सुद्धस्स होइ चरणं। माया सहिए उ चरणभेओत्ति, वचनात्,अत एवाह,निच्छद्मा निर्मायः किलेत्याप्तोक्तौ धर्मः सह देवमनुजासुरैर्वर्तत इति सदेवमनुजासुरस्तस्मिन् लोके, इहासुरा भवनपतयस्तद्ग्रहेणा इति. ॥३९४॥ गतमानुपंगिकं, अधुना योऽसावायव्ययतुलनाभ्यधायि सा यान्यधिकृत्य प्रवर्तते तान्याह—

भिक्खू गीयमगीए, अभिसेए तहय चेव रायणिए । एवं तु पुरिसवत्थुं, दव्वाइ चउव्विहं सेसं ॥३९५॥

व्याख्या—'भिक्खु गीयमगीयत्ति' भिक्षुर्द्विविधो भवति,गीतार्थो विदितागमः,ततोऽन्योऽगीतार्थश्च,उत्तरत्रशब्दस्य संबंधः,मकारोऽलाक्षणिकः,अभिषेक उपाध्यायः,तथाचार्यः,'चेवत्ति'शब्दादनुक्तस्थविरादिपरिग्रहः,एवं तुशब्दस्तद्गुणतारतम्यविशेपणार्थः. पुरुषा एव ज्ञानादिगुणवसनयोगाद्वस्तु, पुरुषवस्तु, आयव्ययतुलनाया गोचरो

भवतीति गम्यते, द्रव्यादिचतुर्विधं, आदिशब्देन क्षेत्रकालभावग्रहणात्, शेषं पुरुषवस्तुनोऽन्यत्तद्विषयो भवतीति प्रवर्तते, द्रव्यात्पुरुषवस्तुनः पृथग्ग्रहणं प्राधान्यख्यापनार्थमिति. तदेतानि तुलयित्वा यद्बहुलाभं तद्विधेयं, अन्यथातिचारः स्यात्. ॥ ३९५ ॥ यद्येवं स तर्हि कतिविधो भवतीत्युच्यते, सामान्येन त्रिविधः, ज्ञानादिविषयित्वाद्विशेषतोऽनेकाकारः, यत आह—

चरणइयारो दुविहो, मूलगुणे चेव उत्तरगुणे य । मूलगुणे छट्ठाणा, पढमो पुण नवविहो तत्थ ॥ ३९६ ॥

व्याख्या—चरणातिचारश्चारित्रातिक्रमो द्विविधः, कथमित्याह–'मूलगुणे चेव उत्तरगुणे च' मूलोत्तरगुणविषय इत्यर्थः. तत्र मूलगुणे जातावेकवचनं,मूलगुणेषु षट् स्थानानि प्राणातिपातविरमणादिरात्रिभक्तविरतिपर्यंतानि तद्गोचरतया भवंति, प्रथमः पुनराद्यो मूलगुणो नवविधो नवभेदः पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपंचेंद्रियरक्षणविषयत्वाद्भवति, तत्र तेषु स्थानेष्विति. ॥ ३९६ ॥

सेसुक्कोसो मज्झिम जहन्नओ वा भवे चउद्धा उ । उत्तरगुणऽणेगविहो, दंसणनाणेसु अट्ठऽट्ठ ॥ ३९७ ॥

व्याख्या—शेषो मृषावादादिरुत्कृष्टो मध्यमो जघन्यश्चेति त्रिविधो भवति, 'वा भवेचउद्धाउत्ति' चतुर्धा वा भवेत्, द्रव्यादिभेदात्, तुशब्दः स्वागतानेकभेदद्योतकः, उत्तरगुणविषयोऽतिचारोऽनेकविधो भवति, पिंडविशुद्ध्यादिगोचरत्वात्तेषां चानेकरूपत्वादिति. 'दंसणनाणेसु अट्ठट्ठत्ति' दर्शनज्ञानयोरष्टाष्टपदान्यतिचारगोचरत्वेन

भवंति, तत्र दर्शने निःशंकितादीनि, ज्ञाने कालविनयादीनीति. इह चारित्रातिचारस्य प्रागभिधानं चारित्रस्य मोक्षांतरंगताख्यापनार्थमिति. अयं च सर्वोऽप्यतिचारो वितथप्रवृत्तो संभवत्यतः सम्यक्प्रवर्तितव्यं, सम्यक्प्रवृत्तिं च वांछता ज्ञानेन यत्नो विधेयः, ज्ञानशून्यस्य हि प्रवृत्तिर्महतेऽनार्थाय. ॥ ३९७ ॥ यत आह—

जं जयइ अगीयत्थो, जं च अगीयत्थनिस्सिओ जयइ । वट्टावेइ य गच्छं, अणंतसंसारिओ होइ ॥३९८॥

व्याख्या-यतिक्रमपि यतते स्वयं तपोऽनुष्ठानादौ यत्नं करोति गीतार्थो ज्ञः,यच्चागीतार्थनिश्रितो यतते, यश्चाज्ञनिश्रया तमेवाज्ञं गुरुत्वेन गृहीत्वेत्यर्थः, वर्तयति च गच्छं, पालयति च गणं, चशब्दादजानन्नप्यभिमानेन ग्रंथान् व्याचष्टे स तेन स्वयं यतनगच्छवर्तनग्रंथव्याख्यानेनानंतसंसारो विद्यते यस्यासावनंतसंसारिको भवति. ।३९८। अत्राह परः-

कह उ? जयंतो साहू, वट्टावेई य जा उ गच्छं तु । संजमजुत्तो होउं, अणंतसंसारिओ होइ ? ॥ ३९९ ॥

व्याख्या—कथ तु कथमेव यतमानः साधुरनंतसंसारिको भणित इति संबंधः, वर्तयति च यस्तु गच्छं, तुशब्दाद् ग्रथांश्च व्याचक्षाणः, संयमयुक्तो भूत्वाऽनंतसंसारिको भणित इति? ॥ ३९९ ॥ अत्रोत्तर—

दव्वं खित्तं कालं, भावं पुरिस पडिसेवणाओ य । नवि जाणइ अग्गीओ, उस्सग्गववाइयं चेव ॥ ४०० ॥

व्याख्या—द्रव्य क्षेत्रं काल भाव पुरुषप्रतिसेवनाश्च नापि नैव जानात्यगीतोऽगीतार्थः. उत्सर्गापवादिकं चानुष्ठानमिति गम्यते, तत्रोत्सर्गेण निर्वृत्तमौत्सर्गिकं यन्निर्विशेषणं क्रियते, अपवादेन निर्वृत्तमापवादिकं यद्द्रव्यक्षे-

त्रायपेक्षमिति एवकारात्तद्गुणदोषांश्चागीतार्थो न जानाति, अतो ज्ञानाभावाद्विपरीतं प्रवर्तते, तथा च कर्मबंधस्ततोऽनंतः संसार इति द्वारगाथासमासार्थः ॥ ४०० ॥ अधुनेमां प्रतिपदं व्याचष्टे–

जहठियदव्व न याणइ, सच्चित्ताचित्तमीसियं चेव। कप्पाकप्पं च तहा, जुग्गं वा जस्स जं होई ।४०१।

व्याख्या—यथास्थितं द्रव्यमित्यनुस्वारलोपोऽत्र 'आणिया लोवमभूया य आणिया दोवि बिंदुदुभावित्ति' लक्षणाद् द्रष्टव्यः, एवमुत्तरत्रापि योज्यं, न जानाति, कथं? सचित्ताचित्तमिश्रकं चैव, सचेतनमचेतनमुभयरूपं च, एवमनेकाकारेणानुस्वारलोपात् कल्प्याकल्प्यं च, तथोचितानुचितं च साधूनां यद् द्रव्यं तन्न जानाति, योग्यं वा प्रायोग्यं यस्य ग्लानादेर्यद्भवति तन्न जानातीति. ॥ ४०१ ॥

जहठियखित्त न जाणइ, अद्धाणे जणवए अ जं भणियं। कालंपि अ नवि जाणइ, सुभिक्खदुभिक्ख जं कप्पं ॥

व्याख्या—यथास्थितं क्षेत्र न जानाति, अध्वनि मार्गे, जनपदे च जनाकुले देशे यद्भणितं कर्तव्यतया जिनागमे तन्न जानाति, कथमित्याह, 'सुभिक्खदुभिक्खजं कप्पंति' सुभिक्षे यत्कल्प्यं योग्यं, दुर्भिक्षे तन्न जानातीत्ति ॥

भावे हट्ठगिलाणं, नवि याणइ गाढऽगाढकप्पं च। सहुअसहुपुरिसरूवं, वत्थुमवत्थुं च नवि जाणे ।४०३।

व्याख्या—भावे विचार्ये हृष्टं नीरोगं ग्लानं रोगाक्रांतं नापि जानाति गाढागाढकल्पं च, गाढे प्रयोजने अगाढे च सामान्ये यदुचितं तन्न जानाति. पुरुषद्वारमाह—' सहुअसहु पुरिसं तु। वत्थमवत्थुं च जाणेत्ति ' सहिष्णुं

निष्ठुरशरीरं, असहिष्णुं सुकुमारदेहं पुरुषं, तुशब्दात्परिकर्मितं च, वस्तु आचार्यादिकं, अवस्तु सामान्यरूपं, मकारोऽलाक्षणिकः, नापि जानातीति. ॥ ४०३ ॥

पडिसेवणा चउद्धा, आउट्टिपमायदप्पकप्पेसु । नवि जाणइ अग्गोओ, पच्छित्तं चेव जं तत्थ ॥ ४०४ ॥

व्याख्या—प्रतिसेवना निषिद्धाचरणा चतुर्भेदा भवति, कथमित्याह- –'आउट्टिपमायदप्पकप्पे त्त' एषां च स्वरूपमिदमुक्तं—आउट्टिहा उवेचा । दप्पो पुण होइ वग्गणाउओ ।' कंदप्पाइपमाओ । कप्पो पुण कारणे कारणं ॥ १ ॥ ततश्चाकुट्टिका च प्रमादश्च दर्पश्च कल्पश्चेति समाहारद्वंद्वः, तस्मिन् सति, चशब्दः स्वगतानेकभेदसूचकः, तां चैवंभूतां प्रतिसेवनामपि न जानात्यगीतोऽगीतार्थः, प्रायश्चित्तमालोचनादि, चेवशब्दात्तत्सेवकभावोपक्रमणं च यत्र तन्न जानाति. बहुशो न जानातीति वचनमागमं विना न किंचिद् ज्ञायते, स्वबुद्धिकल्पितस्य व्यभिचारितया महामोहरूपत्वादिति ज्ञापनार्थं. ॥४०४॥ अत्रैव दृष्टांतमाह—

जह नाम कोइ पुरिसो, नयणविहूणो अदेसकुसलो य । कंताराडविभीमे, मग्गपणट्ठस्स सत्थस्स ॥४०५॥

व्या०–यथा नाम कश्चित्पुरुषो नयनविहीनोंधः, अदेशकुशलश्चामार्गज्ञो भीमकांताराटव्यां भीषणदुर्गारण्ये, गाथायां भीमशब्दस्य परनिपातः प्राकृतत्वात्, मार्गात् प्रणष्टो भूथो मार्गप्रणष्टः, तस्य सार्थस्य ॥४०५॥ किमित्याह–

इच्छइ य देसियत्तं, किं सो उ समत्थ देसियत्तस्स ? । दुग्गाइँ अयाणंतो, नयणविहूणो कहं देसे ? ४०६

व्याख्या—इच्छति च देशकत्वं मार्गदर्शित्वं कर्तुमिति शेषः,किंतु ममर्थो देशकत्वस्य विधाने नैवेत्यर्थः.तथाहि-दुर्गादि विषमांताद्यजानन्नयनविहीनः कथं दर्शयेत्! अत्यंतासंभव एवास्येत्याकूतं. ॥ ४०६ ॥ दार्ष्टांतिकमाह—

युग्मम् ॥ एवमगीयत्थोऽवि हु, जिणवयणपईवचक्खुपरिहीणो । दव्वाइँ अयाणंता, उस्सग्गववाइयं चेव ॥

व्याख्या—एवमित्युक्तेन प्रकारेणागीतार्थोऽपि, हुरलंकारे, जिनवचनमेवाशेषभुवनभवनोद्भासिकत्वात्प्रदीपः, अतः प्राणिनां चक्षुरिव चक्षुः, तत्वरूपावबोधहेतुत्वात्, तेन परिहीनो जिनवचनप्रदीपचक्षुपरिहीणः, इत्यनेनांधतां लक्षयति. द्रव्यादि, आदिशब्दात् क्षेत्रादिग्रहः, अजानन्नौत्सर्गापवादिकं चैवानुष्टानं पूर्वोक्तस्वरूपं, इत्यनेनामार्गज्ञतां दर्शयति ॥ ४०७ ॥ एवं च सति—

कह सो जयउ अगीओ ? कह वा कुणऊ अगीयनिस्साए ?। कह वाकरे उ गच्छं ? सबालवुड्ढाउलं सो उ ॥

व्याख्या—कथमसौ यततामगीतोऽगीतार्थः ? कथं वा करोतु हितमिति शेषः. गीतं गणधरैः शब्दितं श्रुतं तन्न विद्यते यस्यासावगीतः, तस्य निश्रा आश्रयणमगीतनिश्रा तया, कथं वा करोतु गछं ? सह बालवृद्धैर्वर्तत इति मबालवृद्धः, स चामावाकुलश्च प्राघूर्णकाद्याकीर्णत्वात्तं, सोऽगीतार्थस्तन्निश्रितो वा उपायाभावात्, तुशब्दाद्विपर्ययप्रवृत्तेश्चानर्थं कुर्यादिति. ॥ ४०८ ॥

सुत्ते य इमं भणियं, अप्पच्छित्ते य देइ पच्छित्तं । पच्छित्ते अईमत्तं, आसाहण तस्स महई उ ॥४०९॥

व्याख्या-सूत्रे चागमे इदं भणितं, यदुत अप्रायश्चित्ते, चशब्दो व्यवहितसंबधः, ददाति प्रायश्चित्तं; प्रायश्चित्तेऽतिमात्रं चात्यर्गलं या, आशातना ज्ञानादिलाभशाटरूपा तस्य महत्येव, तुशब्दस्यावधारणार्थत्वात्, तथा चोक्तं–अपछित्ते य पछित्तं। पछित्ते अइमत्तया ॥ धम्मस्सासायणा तिव्वा। मग्गस्स य विराहणा॥१॥४०९॥ एवं सति–

आसायण मिच्छत्तं, आसायणवज्जणा उ सम्मत्तं। आसायणानिमित्तं, कुव्वइ दीहं च संसारं ॥ ४१० ॥

व्याख्या—आशातना भवंति साक्षान्मिथ्यात्वं, ज्ञानादिशाटस्य तद्रूपत्वात्, आशातनावर्जना च पुनः साक्षात्सम्यक्त्वं, तद्वर्जनपरिणामस्य तद्रूपत्वात्. अत एवागीतार्थोऽविधिप्रवृत्तेराशातनानिमित्तमाशातनया हेतुभूतयेत्यर्थः, करोति दीर्घं, चशब्दात् क्लिष्टं च संसारमिति ॥ ४१० ॥ निगमयन्नाह—

एए दोसा जम्हा, अगीय जयंतस्सऽगीयनिस्साए। वट्टावय गच्छस्स य, जो अ गणं देयगीयस्स ।४११।

व्याख्या—एतेऽनंतरोक्ता दोषा यस्मात् 'अगीयजयंतस्सगीयनिस्साएत्ति' अगीतार्थस्य स्वयं यतमानस्यागीतार्थनिश्रया वान्यस्येत्यर्थः,'वट्टावेइ गछस्स य। जो विगणं देइ अगीयस्सत्ति' योऽगीतार्थः सन् गच्छस्य वर्तकः पालको भवति, पश्चादगीतार्थाय गछं ददाति तस्याप्येत एव दोषाः पूर्वोक्तयुक्तेः, तस्मादिदमवेत्य ज्ञाने महानादरो विधेय इति. ॥ ४११ ॥ व्याख्याता द्वारगाथा, एतच्चैकांतेनागीतार्थमधिकृत्योक्तं, अधुना किंचिद्ज्ञमधिकृत्याह—

अबहुस्सुओ तवस्सि, विहरिउकामो अजाणिऊण पहं। अवराहपयसयाइं, काऊणवि जो न याणेइ ४१२

देसियराइयसोहिय. वयाइयारे य जो न याणेइ । अविसुद्धस्स न वड्ढइ, गुणसेढी तत्तिया ठाइ ।४१३।

व्याख्या—इहैवं पदानां संबंधो द्रष्टव्य इति, अपराधपदशतानि अतिचारस्थानशतानि यः कृत्वापि न जानाति,यदुत मयैतानि कृतानीति,कुतः? अबहुश्रुत इति निमित्तकारणहेतुषु,सर्वासां विभक्तीनां प्रायो दर्शनमिति वचनाद्भावप्रधानत्वाच निर्देशस्याबहुश्रुतत्वाद्विशिष्टश्रुतरहितत्वादित्यर्थः, तथापि विहर्तुकामो गीतार्थं विना केवलतया वसितुकामो भवति, तपस्वी विकृष्टतपोनिष्टप्तदेहोऽपि, तस्य गुणश्रेणिर्न वर्धत इति, अन्यथा पथं ज्ञानादिकं मोक्षमार्गं, दिवसेन निर्वृत्ता दैवसिकाः,एवं रात्रिका येऽतिचारा इति गम्यते, तेषां शुद्धिः स्वपरयोः प्रायश्चित्तेन क्षालनं, व्रतातिचारांश्च मूलोत्तरगुणखंडनलक्षणान् स्वरूपतोऽपि यो न जानाति तस्याविशुद्धस्येति, शुद्धस्यापि सम्यक्प्रवर्तमानस्यापि न वर्धते गुणश्रेणिर्ज्ञानादिगुणपद्धतिः, गुणवद्गुरोर्योगस्यैव तद्वृद्धिहेतुत्वात् , तदभावे तु तावत्येव यावती प्रागासीत्तत्प्रमाणा तिष्ठति, क्लिष्टचित्तस्य पुनरेकाकिनः किंचिद्ज्ञस्य गुणपद्धतिरपयात्येव, पूर्वोक्तं चानंतसंसारित्वं संपद्यत इति द्रष्टव्यं ॥ ४१२ ॥ ४१३ एतदेव स्पष्टयति—

अप्पागमो किलिस्सइ,जइवि करेइ अइदुक्करं तु तवं।सुंदरबुद्धीइ कयं, बहुइयंपि न सुंदरं होई ॥ ४१४ ॥

व्या०—अल्पागमः स्तोकश्रुतः क्लिश्यते केवलं क्लेशमनुभवति,यद्यपि करोत्यतिदुष्करमेव, तुशब्दोऽवधारणार्थः, तपो मासक्षपणादि, किमित्याह—सुंदरबुद्ध्या स्वकल्पनया सुंदरमेतदिति धिया कृतं बह्वपि न सुंदरं भवति,

लौकिकमुनीनामिवाज्ञानोपहतत्वादिती. ॥ ४१४ ॥ तथा चाह—

अपरिच्छियसुयनिहसस्स केवलमभिन्नसुत्तचारिस्स । सव्वुज्जमेणऽवि कयं, अन्नाणतवे बहुं पडई ॥४१५॥

व्याख्या—अपरिनिश्चितः सम्यगपरिच्छिन्नः श्रुतनिकष आगमसद्भावो येन स तथा तस्य. केवलमभिन्नमविवृतार्थं यत्सूत्रं विशिष्टव्याख्यानरहितंसूत्रमात्रमित्यर्थः, तेन चरितुं तदनुसारेणानुष्टानं कर्तुं धर्मो यस्य सोऽभिन्नसूत्रचारी, तस्य सर्वोद्यमेनापि समस्तयत्नेनापि कृतमनुष्टानमज्ञानतपसि पंचाग्निसेवनादिरूपे बहु पतति, स्वल्पमेवागमानुसारि भवति,विपयविभागज्ञानशून्यत्वात्. तथाहि—सूत्रेपूक्तोऽप्यर्थो व्याख्यानतो विशेपेऽवस्थाप्यते,उत्सर्गसूत्राणामपवादसूत्रैः सह विरोधात्, यदि पुनः सूत्रमात्रमेव कार्यकारि स्यात्तदानुयोगोऽनर्थकः स्यात तथा चोक्तं -जं जह सुत्ते भणियं। तं तह इच्छइ तन्निवयारणा णत्थि ॥ किं कालयाणुयोगो। दिट्ठो दिट्ठिप्पहाणेहिं ॥ १ ॥ इत्यादि. ॥ ४१५ ॥ अत्रैव दृष्टांतमाह—

जह दाइयम्मिऽवि पहे, तस्स विसेसे पहस्सऽयाणंतो। पहिओ किलिस्सइ च्चिय, तह लिंगायारसुअमित्तो ॥

व्याख्या—यथा दर्शितेऽपि पथि केनचिद्दिङ्मात्रतया, तस्य विशेपान् ग्रामतदंतरालसभयनिर्भयादीन् पथस्याजानन् पथिकः क्लिश्यते एव, बुभुक्षाचौरादिभिर्विबाध्यत एव. तथा तेनैव प्रकारेण लिंगाचारः श्रुतमात्रः क्लिश्यते बहूपायैर्बाध्यते. तत्र लिंगं रजोहरणादिवेपः, आचारः स्वबुद्धया क्रिया, श्रुतमात्रं विशिष्टार्थरहितं सूत्र-

मात्रं, ततश्च लिंगाचाराभ्यां सह श्रुतमात्रं यस्य स तथेति. ॥ ४१६ ॥ एतदेव भावयति--

कप्पाकप्पं एसणमणेसणं चरणकरणसेहविहिं । पायच्छित्तविहिंऽपि य, दव्वाइगुणेसु अ समग्गं ॥ ४१७ ॥
पव्वावणविहिमुट्ठावणं च अज्जाविहिं निरवसेसं । उस्सग्गववायविहिं, अयाणमाणो कहं जयउ ? ॥४१८॥

व्याख्या—कल्पादिकमजानानः कथं यततामिति समुदायार्थः. तत्र कल्प्यं च यत्साधूनामुचितं, ततोऽन्यदकल्प्यं. यद्वा कल्पं कल्पो मासकल्पादिः स्थविरकल्पादिर्वा, ततोऽन्योऽकल्पः, कल्पश्चाकल्पश्च कल्पाकल्पं. एषणां गवेषणग्रहणग्रासविषया पिंडस्यान्वेषणशंकितादिर्वा, ततोऽन्याऽनेषणा, सकारोऽलाक्षणिकः, एषणा चानेषणा चेत्येषणानेषणमिति समाहारद्वंद्वः; चरणं व्रतादि, करणं पिंडविशुद्ध्यादि. शैक्षकविधिर्दीक्षाभिमुखस्याभिनवदीक्षितस्य वा सामाचारीग्राहणक्रमः, चरणं च करणं च शैक्षिकविधिश्चेत्यत्रापि स एव द्वंद्वः. तत्प्रायश्चित्तमालोचनादि. तस्य विधिः, यथा तद्दीयते यादृशाय यथा च कार्यते इत्यादि, तमपि च द्रव्यादिगुणेषु च, आदिशब्दात् क्षेत्रकालभावग्रहः, तद्गुणेषु सुंदरासुंदरेषु यो विधिस्तं समग्रं समस्तमजानन्नपीति. तथा प्रव्राजनविधिं दीक्षादानक्रमं, उपस्थापनां च व्रतारोपणन्यायं, आर्याविधिं साध्वीप्रतिपालनक्रमं, निरवशेषं संपूर्णमुत्सर्गापवादविधिं निरविशेषेण द्रव्याद्यपेक्षया कर्तव्यमार्गमजानानः कथं यततामिति ! ॥ १७ ॥ १८ ॥ तस्माद् ज्ञाने यत्नो विधेयः, तदर्थिना च गुरुराराधनीयः, यत आह—

सीसायरियकमेण य, जणेण गहियाइँ सिप्पसत्थाइं । नज्जंति बहुविहाइं न चक्खुमित्ताणुसरियाइं ॥४१९॥

व्याख्या—शिष्याचार्यक्रमेणैव, चशब्दस्यैवकारार्थत्वात् जनेनाविवेकिना लोकेनापि, आसतां लोकोत्तराः साधवः, किं ? गृहीतानि शिल्पशास्त्राणि, शिल्पानि चित्रादीनि, शास्त्राणि व्याकरणप्रभृतीनि, यतस्तथैव गृहीतानि तानि ज्ञायंते सम्यग्ज्ञानहेतुतां प्रतिपद्यंते, स्वबुद्ध्या गृहीतानि तु विगोपयंति, यदुक्तं—न हि भवति निर्विगोपक—मनुपासितगुरुकुलस्य विज्ञानं ॥ प्रकटितपश्चाद्भागं । । पश्यत नृत्तं मयूरस्य ॥ १ ॥ अत एवाह, बहुविधानि नानारूपाणि न चक्षुर्मात्रानुसृतानि, चक्षुर्मात्रेण यावद् दृष्टानि तावदेवानुसरणं स्वबुद्ध्या विधाय गृहीतानीत्यर्थः. ॥ ४१९ ॥ तस्मात् स्थितमेतदित्याह—

जह उज्जमिउं जाणइ, नाणी तव संजमे उवायविऊ । तह चक्खुमित्तदरिसणसामायारी न याणंति ॥४२०॥

यथा उद्यतुं सम्यगनुष्टानं कर्तुं जानाति ज्ञानी तपःसंयमयोरुपायवित्तत्करणकुशलः, तदुद्यमं चक्षुर्मात्रदर्शनेन परानुष्टानावलोकनेन आगम विना च सामाचारी अनुष्टानप्रवृत्तिर्येषां ते तथा, ते न जानंतीति ४२० एवं च ज्ञानप्राधान्ये प्रतिपादिते ज्ञानमेवालंब्य कश्चित्तोपं विदध्यात्, अतस्तदपि क्रियाविकलमकिंचित्करमित्यावेदयन्नाह—

सिप्पाणि य सत्थाणि य, जाणंतोऽवि नय जुंजइ जो ऊ । तेसिं फलं न भुंजइ, इअ अजयंतो जई नाणी ॥

व्याख्या—शिल्पानि च शास्त्राणि च पूर्वोक्तानि जानन्नपि, चशब्दाः सर्वेऽप्यभ्युच्चयार्थाः, परमार्थतो ज्ञान्ये·

गामो न भवतीत्यपिशब्दार्थः, न युनक्ति यस्तु क्रियया तानि न संपादयति, स तेषां फलं द्रव्यलाभादिकं न भुंक्ते नानुभवति, इत्येवमयमानोऽनुष्ठानशून्यो यतिः साधुर्ज्ञानि सन्नपि मोक्षलक्षणं फलं न प्राप्नोतीति, ॥ ४२१ ॥ कथं पुनर्ज्ञाने सति क्रियावैकल्यं स्यादत आह—

गारवतियपडिबद्धा, संजमकरणुज्जमम्मि सीअंता । निग्गंतूण गणाओ (घराओ) हिंडंति पमायरण्णम्मि ॥

व्याख्या— एवं मन्यते यतो ज्ञानिनोऽपि केचिद्गौरवत्रयप्रतिबद्धा ऋद्धिरससातेष्वादरेणासक्ताः, संयमकरणोद्यमे पृथिव्यादिरक्षाविधानोत्साहे सीदन्तः शिथिलीभवन्तो निर्गत्य गणाद्गच्छाद्यथेष्टचेष्टया हिंडंते, प्रमाद एव विषयकषायचौरश्वापदाकुलत्वादरण्यं प्रमादारण्यं तस्मिन्, ततस्ते क्रियाविकलाः स्युरिति. ॥ ४२२ ॥ ननु च यो विशिष्टज्ञानो मनाक्क्रियाविकलः, यश्चोत्कृष्टक्रियो मनाग्ज्ञानहीनः, अनयोः कतरः श्रेयानित्याशंक्याह—

नाणाहिओ वरतरं, हीणोऽवि हु पवयणं पभावंतो । न य दुक्करं करंतो, सुट्ठुवि अप्पागमो पुरिसो ॥४२३॥

व्याख्या—ज्ञानाधिको वरतरमतिशयेन प्रधानतरः, हीनोऽपि चारित्रापेक्षया, हुरलंकारे, प्रवचनं सर्वज्ञागमं प्रभासयन् सदव्याख्यानादिभिरुद्भावयन्, न च नैव दुष्करं मासक्षपणादि सुष्ठ्वपि कुर्वन्नल्पागमः स्तोकश्रुतः पुरुषो वरतरमिति. ॥ ४२३ ॥ किंच —

नाणाहियस्स नाणं, पुज्जइ नाणा पवत्तए चरणं । जस्स पुण दुण्ह इक्कंपि, नत्थि तस्स पुज्जए काइं ? ॥

व्याख्या—ज्ञानाधिकस्य संबंधि ज्ञानं पूज्यते, यतो ज्ञानात् प्रवर्तते चरणं, तत्पूर्वकत्वात्तस्य, यस्य पुनर्द्वयोरेकमपि नास्ति तस्मिन् पुरुषे पूज्यते किं? न किंचित्, अनेन व्यवहारतो ज्ञानं चरणरहितं स्यात्, न पुनश्चरणं ज्ञानविकलं, हेत्वभावात् ॥ ४२४ ॥ अतो ज्ञानहीने द्वयमपि नास्तीति लक्षयति, परमार्थतः पुनर्ज्ञानादीनां परस्परापेक्षणामेव कार्यकारित्वं, अत एव तद्वैकल्ये अकिंचित्करतामाह—

नाणं चरित्तहीणं, लिंगग्गहणं च दंसणविहीणं। संजमहीणं ज तवं, जो चरइ निरत्थयं तस्स ॥ ४२५ ॥

व्याख्या—ज्ञानं चारित्रहीनं निरर्थकमिति संबंधः, लिंगग्रहणं च रजोहरणादिधारणं, दर्शनविहीनं सम्यक्त्वशून्यं, संयमहीनं च तपो यश्चरति निरर्थकं मोक्षापेक्षया निःप्रयोजनं तस्येति. ॥ ४२५ ॥ तत्र ज्ञानं चारित्रहीनं कथं निरर्थकमित्यत्र दृष्टांतमाह—

जहा खरो चंदणभारवाही, भारस्स भागे न हु चंदणस्स।
एवं खु नाणी चरणेण हीणो, नाणस्स भागी न हु सुग्गईए ॥ ४२६ ॥

व्याख्या—यथा खरो रासभश्चंदनभारवाही भारस्य भागी भाजनं, न हु नैव चंदनस्य विलेपनादीनां, एवं 'खु' एवमेव ज्ञानी चरणेन हीनो ज्ञानस्य भागी, न हु नैव सुगतेर्मोक्षलक्षणाया इति. ॥ ४२६ ॥ तर्हि लिंगी दर्शनशून्यः कथं स्यादत आह—

संपागडपडिसेवी, काएसु वएसु जो न उज्जमई । पवयणपाडणपरमो, सम्मत्तं कोमलं तस्स ॥ ४२७ ॥

व्याख्या—संप्रकटं लोकसमक्षमतिनिःशूकतया प्रतिसेवितुं निषिद्धमाचरितुं शीलमस्येति संप्रकटप्रतिसेवी, कायेषु पृथिव्यादिषु रक्षणेन, व्रतेष्वहिंसादिष्वनुष्टानेन यो न उद्यच्छति नोद्यमं कुरुते, अत एव प्रवचनपातनपरम आगमलाघवप्रधानो निषिद्धाचरणाद्विहिताननुष्टानाच्च, सम्यक्त्वं पेलवं तस्येति वाचो युक्त्या तदभावं दर्शयतीति. ॥ ४२७ ॥ संयमहीन तर्हि तपसि को दोष इत्यत आह—

चरणकरणपरिहीओ, जइवि तवं चरइ सुट्ठु अइगुरुणं। सो तिल्लं व किणंतो, कंसियबुद्दो मुणेयव्वो ।४२८।

व्याख्या—चरणकरणपरिहीनः संयमशून्यो यद्यपि तपश्चरति सुष्ठुतिगुरुकं चतुर्मासक्षपणादि, स तैलमिव क्रीणन्, कंसेन निर्वृत्तः कांसिक आदर्शः, तत्प्रधानो बोद्रो ग्रामेयकः, यो हि आदर्शेन तिलान् दत्वा ते नैव मित्वा तैलं गृह्णाति स कांसिकबोद्रस्तद्वन्मंतव्यः, स्वल्पेन बहुहारणादिति. ॥ ४२८ ॥ तथाहि—

छज्जीवनिकायमहव्वयाण परिपालणाइ जइधम्मो । जइ पुण ताइँ न रक्खइ, भणाहि को नाम सो धम्मो ? ॥

व्याख्या—षड्जीवनिकायमहाव्रतानां परिपालनया यतिधर्मो भवति. यदि पुनस्तानि षड्जीवनिकायमहाव्रतानि यतिरपि न रक्षयति, भण त्वमेव कथय तावत्को नाम स धर्मः ! न कश्चिदित्यभिप्रायः. पृथक् षड्जीवनिकायग्रहणं तु तद्रक्षणस्य प्राधान्यख्यापनार्थं. ॥ ४२९ ॥ किंच—

छज्जीवनिकायदयाविवज्जिओ नेव दिक्खिओ न गिही। जइधम्माओ चुक्को, चुक्कइ गिहिदाणधम्माओ ॥

व्याख्या—षड्जीवनिकायदयाविवर्जितस्तदुपमर्दकारी नैव दीक्षितश्चारित्रविकलत्वात्, न गृही लिंगधारणात्, स चैवं वर्तमानो यतिधर्माच्चुक्को भ्रष्ट एव, 'चुक्कइत्ति' भ्रश्यते गृहिदानधर्मात्, गृहस्थसंबंधि कल्पते, तत्संबंधि पुनर्न किंचित्कल्पते यतः सुसाधूनामिति. ॥ ४३० ॥ ननु यो यावत्करिष्यते तस्य तावद्धर्मः, संपूर्णगुणाः सुदुर्लभा इति, उच्यते, स्यादेतद् गृहिणस्तद्विरतेर्विचित्रत्वात्, न पुनर्यतेः, तेन सर्वविरतेरभ्युपगमात्, तथा चाह--

सव्वाओगे जह कोइ, अमच्चो नरवइस्स घित्तूणं। आणाहरणे पावइ, वहबंधण दव्वहरणं च ॥ ४३१ ॥
तह छक्कायमहव्वयसव्वनिवित्तीउ गिण्हिऊण जई। एवमवि विराहंतो, अमच्चरण्णो हणइ बोहिं ॥४३२॥

व्याख्या—सर्वयोगान् समस्ताधिकारान् यथा कश्चिदमात्यो लब्धप्रसादः सचिवो नरपते राज्ञः संबंधिनो गृहीत्वा, स पश्चादाज्ञाहरणे नृपतिवचनोल्लंघने प्राप्नोति, किं? वधं लकुटादिभिः, बंधनं रज्ज्वादिभिः, द्रव्यहरणं सर्वस्योद्दालनं, चशब्दान्मारणं च, अनुस्वारलोपः पूर्वयोः, त्रयाणामपि समाहारद्वंद्वो वायमिति. ॥ ४३१ ॥ दार्ष्टांतिकमाह—तथा षट्कायमहाव्रतसर्वनिवृत्तिरित्यत्र षट्कायमहाव्रतेषु सर्वथा रक्षानुष्ठानद्वारेण निवृत्तयो नियमास्ता गृहीत्वा यतिः साधुरेकमपि कायं व्रतं वा विराधयंश्च किं? अमर्त्यानां शक्रादीनां राजा प्रभुरमर्त्यराजो भगवांस्तस्य संबंधिनीं हंति, बुध्यतेऽनयेति बोधिः, कारणे कार्योपचारादाज्ञा तां, तदुल्लंघनद्वारेण प्रेत्य जिनप्राणीतध-

र्मप्राप्तिरूपां वा बोधिं खंडयतीति. ॥ ४३२ ॥

तो हयबोही य पच्छा, कयावराहाणुसरिसमियममियं। पुणवि भवोअहिपडिओ, भमइ जरामरणदुग्गम्मि ॥

व्याख्या—ततो हतबोधिः पश्चात्कृतापराधानुसदृशं विहितातिचारानुरूपं, इमं ज्ञानिनां प्रत्यक्षं, अमितमपरिमाणमनंतमित्यर्थः, पुनरपि भवोदधिं संसारसमुद्र पतितो भ्रमति जरामरणदुर्गेऽतिगहन इति ॥ ४३३ ॥ अन्यथाभाविह लोकेऽपि स्वपरयोरपकारीति, आह च—

जइयाऽणेणं चत्तं, अप्पणयं नाणदंसणचरित्तं । तइया तस्स परेसुं, अणुकंपा नत्थि जीवेसु ॥ ४३४ ॥

व्याख्या—यदानेनापुण्यवता त्यक्तमुज्झितमात्मीयं स्वसंबंधि ज्ञानदर्शनचारित्रमिति समाहारद्वंद्वः, तदा तस्य परेषु स्वव्यतिरिक्तेष्वनुकंपा कृपा नास्ति न विद्यते एव जीवेषु, तथा चोक्तं—परलोकविरुद्धानि । कुर्वाणं दूरतस्त्यजेत् ॥ आत्मानं यो न संधत्ते । सोऽन्यस्मै स्यात्कथं हितः ॥ १ ॥ ४३४ ॥ एतदेव विशेषेणाह—

छक्कायरिऊण अस्संजयाण लिंगावसेसमित्ताणं । बहुअस्संजमपवहो, खारो मइलेइ सुट्ठुअरं ॥ ४३५ ॥

व्याख्या—षट्कायरिपूणां पृथिव्यादिशत्रूणां, असंयतानां मुत्कलमनोवाक्कायानां, अत एव लिंगावशेषमात्राणामुद्धरितरजोहरणानां बहुर्भूरिरसंयमप्रवाहस्तत्कार्यत्वात्पापौघो भवति, स च क्षार इव, तिलादीनां क्षारः, मलिनयति पंकयत्यात्मानं तेषां सुष्ठुतरमतिशयेनेति. एतदुक्तं भवति—यथा कश्चित् क्षारो वस्त्रादिकं दग्ध्वा

मलिन करोति, तथा पापौघोऽपि तज्जीव मिति. ॥ ४३५ ॥ कथं भगवल्लिङ्गयोगेऽपि पापसंबंध इति मुग्धबुद्धिर्विश्चितबेत्त व्युत्पादयितुमाह—

**किं लिंगमिड्डरीधारणेण कज्जम्मि अट्ठिए ठाणे । राया न होइ सयमेव, धारयं चामराडोवे ॥ ४३६ ॥**

व्याख्या—" किं लिंगविड्डरीधारणेणत्ति " किं वेषस्फटाटोपाधानेन ? कार्ये संयमप्रयोजनेऽस्थिते साधौ न किंचित्कार्याभावात्. तथाहि—स्थाने विशिष्टसिंहासनादावुपविष्टोऽपि राजा न भवति स्वयमेव धारयंश्चामरे चाटोपाश्च छत्रध्वजादयश्चामराटोपास्तान्, पृथिवीविभवपरिकरादिलक्षणस्य राज्यकार्यस्याभावादिति, एवं लिंगमात्रेण साधुर्न भवति, किं तर्हि ? संपूर्णानुष्टानेन. ॥ ४३६ ॥ तथा चाह—

**जो सुत्तत्थविणिच्छियकयागमो मूलउत्तरगुणाहं । उव्वहइ सयाऽखलिओ, सो लिक्खइ साहुलिक्खम्मि ॥**

व्याख्या—यः कश्चित्सूत्रार्थविनिश्चयेन श्रुतसारग्रहणेन कृतो विहितः सामर्थ्यादात्मन्यागमो भगवद्वचनं येनासौ सूत्रार्थविनिश्चयकृतागमः, इह च व्यवहारतः श्रवणमात्रेणाज्ञाततत्परमार्थोऽपि कृतागम इत्युच्यते, तद्व्यवच्छेदार्थं सूत्रार्थविनिश्चयेनेति विशेषणं, एवंभूतः सन् किं ? मूलोत्तरगुणौघं व्रतादिपिंडविशुद्ध्यादिगुणसंघातमुद्वहति, सम्यक्करणेन जीवितांतं प्रापयति, सदाऽस्खलितः सर्वदा निरतिचारः स लिख्यते साधुलेख्ये, साधुगणनायां तस्य रेखा दीयते नान्यस्येत्यर्थः ॥ ४३७ ॥ अत एवाह—

बहुदोससंकिलिट्ठो, नवरं मइलेइ चंचलसहावो । सुट्ठुविवायामिंतो, कायं न करेइ किंचि गुणं ॥४३८॥

व्याख्या—बहुदोषैरज्ञानक्रोधादिभिः संक्लिष्टो विबाधितबहुदोषसंक्लिष्टः, नवरं केवलं मलिनयति पंकयत्यात्मानमिति शेषः, चंचलस्वभावो विषयादौ चटुलचित्तः सुष्ठ्वपि गाढमपि व्यायामयन् क्लेशयन्नप्रेक्षापूर्वकारितया कायं देहं न करोति कंचिद्गुणं कर्मक्षयादिकमिति. ॥ ४३८ ॥ स तर्हि निर्गुणः किं म्रियतां ? नैतदस्ति, मरणमपि भगवतः श्रेयः, यत आह—

केसिंचि वरं मरणं, जीवियमन्नेसिमुभयमन्नेसिं । दद्दुरदेविच्छाए, अहियं केसिंचि उभयंपि ॥ ४३९ ॥

व्याख्या—केषांचित्प्राणिनां वरं प्रधानं मरणं प्राणत्यागं, जीवितं प्राणधारणमन्येषां वरमिति वर्तते, उभयं जीवित मरणं चान्येषां वरं, 'दद्दुरदेवेच्छयेत्ति' संविधानकं सूचयति, अहितमपथ्यं केषांचिदुभयमप्युक्तस्वरूपमिति ॥ ४३९ ॥ एतदेवान्यथाह—

केसिंचि य परलोगो, अन्नेसिं इत्थ होइ इहलोगो । कस्सवि दुण्णवि लोगा, दोऽवि हया कस्सई लोगा ॥

व्याख्या—केषांचित्परो लोको हित इति सामर्थ्याद्गम्यते, अन्येषामत्र भवतीह लोको हित इति, कस्यापि पुनर्द्वावपि लोकौ हितौ भवतः,द्वावपि हतौ स्वकर्मणा विनाशितावहिताविव्यर्थः,कस्यचिल्लोकाविति. ॥४४०॥ कथमेतदित्यत्र दर्दुरदेवकथा—राजगृहे समवसृते भगवति वीरे वंदनार्थमुच्चलिते सनागरिके राजनि श्रेणिके तन्नग-

द्वारपालः स्वकर्मकरं धिग्वर्णं सेडुकनामानं द्वारदेवतार्चनिकाबलिंबहु भोजयित्वा न त्वया कुत्रचिद्गंतव्यमिति भणित्वा गतो भगवद्वंदनार्थं. ततोऽसौ संजातपिपासातिरेकस्तद्भयाज्जलाशयमगच्छन्ममार, समुत्पेदे च तदासन्न वाप्यां शालूरतया. स च भगवत्समवसरणं जिगमिषुलोकानां कलकलाकर्णनाद्विमर्शोत्पत्तेर्जातजातिस्मरणस्तद्द्वारेणैव प्रबुद्धश्चलितो वीरवंदनाय, मर्दितश्चाश्वखुरेण शुभपरिणामाज्जज्ञे देव इति. प्रयुक्तावधिर्विज्ञाय वृत्तांतमगमत् समवसरणे अत्रांतरे श्लाघितः श्रेणिकः शक्रेण दृढदर्शन इति. ततोऽसौ तत्परीक्षार्थं तत्रागत्य कुष्टिरूपं विधाय भगवंतं पूयच्छटाभिः सिषेच. क्षुते च भगवता म्रियस्वेति बभाण, श्रेणिकेन क्षुते जीवेति, अभयेन तु क्षुते जीव म्रियस्व वा, कालसौकरिकेण तु क्षुते मा जीव मा म्रियस्वेति. ततो जातक्रोधो राजा तन्मारणार्थं मनुष्यानादिदेश, न शक्यो गृहीतुं ज्ञातो देव इति. द्वितीयदिने भगवंतं पप्रच्छ राजा कोऽसौ कुष्टीति, ततः कथितो भगवता तद्वृत्तांतः कथं युष्मान्प्रति म्रियस्वेति ब्रुवते? इत्यादिपृष्टो भगवानाह, किं भवे तिष्टसि? न यासि मोक्षमित्यभिप्रायान्मामाह म्रियस्वेति भवंतं च जीवेति नरके बद्धायुष्कत्वाज्जीवत एव ते सुखं अभयस्तु देवलोकगामीत्युभयथोक्तः. कालसौकरिकस्तु जीवन् बहुपापो मृतो नरकगामीति च द्वेधापि निषिद्ध इति. सांप्रतमेतच्चतुष्टयमपि स्वयमेव सूत्रकारो योजयन्नाह—

छज्जीवकायविरओ, कायकिलेसेहिं सुट्ठु गुरुएहिं। नहु तस्स इमो लोगो, हवइऽस्सेगो परो लोगो ॥४४१॥

व्याख्या—षड्जीवकायेषु पृथिव्यादिषु विशेषेण तदुपमर्दकारित्वाद्रत आसक्तः षड्जीवकायविरतः, काय-

क्लेशैः पंचाग्निसेवनमासक्षपणादिभिः सुष्ठुगुरुभिर्बृहत्तमर्योवर्तते बालतपस्वी, न हु नैव तस्यायं लोको भवति, विवेकाभावेन क्लेशसहनात्, भवति से तस्यैकः परो लोको व्यवहारेण तत्क्लेशोपार्जिततुच्छपुण्यईलोपस्थानादिति. ॥ ४४१ ॥ अनेन द्वितीयगाथोक्तास्त्रयोऽन्ये भंगाः सूचिता द्रष्टव्याः, ते च स्वधिया योज्याः सुगमत्वादिति. अधुनार्थप्रतिपादने क्रमोऽतंत्रमिति न्यायप्रदर्शनार्थं प्रथमगाथोक्तात् भंगान् युनक्ति—

नरयनिरुद्धमईणं, दंडियमाईण जीवियं सेयं । बहुवायम्मिऽवि देहे, विसुज्झमाणस्स वर मरणं ॥ ४४२ ॥

व्याख्या—नरके निरुद्धा गोचरांतरान्निवर्त्य तत्रैव स्थापिता मतिर्यैस्ते नरकनिरुद्धमतयः, तेषां दंडिकादीनां - नृपतिप्रभृतीनां जीवित श्रेयो मुहूर्तसुखावाप्तेः. बहुपाये रोगाद्यपायाक्रांते,बहुवाते वा,अपिशब्दात्तद्वेदनासहिष्णोर्देहे काये, किं ? विशुद्ध्यमानस्य प्रशस्तध्यानान्निर्मलीभवतो वरं श्रेयो मरणं सुगतिगमनादिति. ॥ ४४२ ॥

तवनियमसुट्ठियाणं, कल्लाणं जीविअंपि मरणंपि । जीवंतऽज्जंति गुणा, मयाऽवि पुण सुग्गइं जंति ॥४४३॥
अहियं मरणं अहिअं च जीवियं पावकम्मकारीणं । तमसम्मि पडंति मया. वेरं वड्ढंति जीवंता ॥४४४॥

व्याख्या—तपोनियमसुस्थितानां विशिष्टगुणाध्यासितानां कल्याणं पथ्यं जीवितमपि मरणमपि, किमित्यत आह- -जीवंति यदि ते तपोगुणानर्जयंति वृद्धिं नयंति, सुगतिं स्वर्गापवर्गरूपामुपयांति मृताः संतः,नोभयथापि किंचिदहितमेतेषामिति. ॥ ४४३ ॥ अहितं मरणमहितं च जीवितं पापकर्मकारिणा तस्करादीनां, किमित्यत आह—

तमसि नरकरूपे पतंति मृतास्ते, वैरं तद्धेतुत्वात्पापं वर्धयंति जीवंतः, अतो द्विगाप्यनर्थ इति. ॥ ४४४ ॥ अत एव विवेकिनः पापं प्राणप्रहाणेनापि नाचरतीति, आह च—

अवि इच्छंति अ मरणं, नय परपीडं करंति मणसाऽवि। जे सुविइयसुगइपहा, सोयरियसुओ जहा सुलसो॥

व्याख्या—अपि संभाव्यते एतद्विवेकिनां, इच्छंत्यभिलपंत्येव मरण, न च नैव परपीडां कुर्वंति मनसापि, आस्तां वाक्कायाभ्यां. के? ये सुविदितसुगतिपथाः सुविज्ञातमोक्षमार्गाः, क इवेत्याह, सौकरिकसुतः कालसौकरिकपुत्रो यथा सुलस इति. ॥ ४४५ ॥ स हि अभयकुमाराद्धर्ममधिगम्य जातानेश्रयो मृते महादुःखेन कालसौकरिके नरकपातभयात् सौकरिकत्व नाभिललाप. परिजनाः प्रोचुर्यदत्र पाप तद्वय विभागेन गृहिष्यामः, किं भय भजत इति. ततोऽसौ तत्प्रत्ययार्थं कुठारेणात्मानमाहत्य पीडाविह्वल. पतितोऽवनावाह च, धावत धावत लोकाः! लात लात मामकीनामिमां पीडां विभज्येति, ते प्रोचुरशक्यमिदं. सोऽब्रवीत्कथं वदथ पाप गृहिष्याम इति, ततो बुद्धाः सर्वेऽपीति. तदिदं विवेकविजृंभितमुक्त, इदानीमविवेककार्यमाह—

मूलग कुदंडगा दामगाणि उच्छूलवंटिआओ य । पिंडेइ अपरितंतो, चउप्पया नत्थि य पसूऽवि ॥४४६॥

व्या०-मूलक कुदडका दामान्येव दामकानि अवच्छूलघंटिकाश्चेति,चशब्दादेवंविधान्यन्यान्यपि चतुष्पदोचितान्युपकरणानि, किंतु चतुष्पदा पशुरप्यजापि नास्ति च न विद्यत एव, आसतां गोमहिष्यादयः, तथापि यथा कश्चि-

दपरितांतोऽश्रांतः पिंडयत्येतानि मीलयत्यविवेकीति दृष्टांतः ॥ ४४६ ॥ दार्ष्टांतिकमाह—

तह वत्थपायदंडगउवगरणे जयणकज्जमुज्जुत्तो। जस्सऽट्ठाए किलिस्सई, तं चिय मूढो नऽवि करेई ॥४४७॥

व्याख्या—तथा वस्त्रपात्रदंडकोपकरणानि पिंडयतीति शेषः, क्लिश्यते केवलं क्लेशमनुभवतीति संबंधः, किमित्याह—यदर्थं तानीष्यते तदेव यतनाकार्यमुद्युक्तः सन्नपि नैव करोति मूढो मूढत्वात्, इत्यक्षरघटना. यथा चतुष्पदविकलस्य तदुपकरणान्वेषणं क्लेश एव, तथा संयमरहितस्योपकरणादेति तात्पर्यार्थः ॥ ४४७ ॥ एवं तर्हि तन्मार्गप्रवृत्तं तीर्थंकराः किं न वारयंतीत्याशंक्याह—

अरिहंता भगवंतो, अहियं व हियं व नवि इहं किंचि। वारंति कारवेंति य, घित्तूण जणं बला हत्थे ॥४४८॥

व्याख्या—अशोकादिपूजामर्हंतीत्यर्हंतः, भगः समग्रैश्वर्यादिर्विद्यते येषां ते भगवंतः, अहितमिति, पंचम्यर्थे द्वितीया, ततश्चाहितान्न वारयंति जनमिति संबंधः. तथा हितं न कारयंति, वाशब्दादुपेक्षणीयं नोपेक्षंते इत्यस्य द्योतनार्थो विकल्पार्थो वा, अपि संभावने, इह लोके किंचित्स्वल्पमपि, चः, समुच्चये, 'घेत्तूणंति' गृहीत्वा जनं बलाद्धस्ते ॥ ४४८ ॥ कथमित्याह—

उवएसं पुण तं दिंति जेण चरिएण कित्तिनिलयाणं। देवाणऽवि हुंति पहू, किमंग पुण मणुअभित्ताणं ? ॥

व्याख्या—उपदेशं तत्वकथनरूपं पुनस्तं ददति, येनोपदेशेन चरितेनानुष्ठितेन कीर्तिनिलयानां ख्यातिस्था-

नानां देवानामपि भवंति प्रभवः स्वामिनस्तदनुष्टातार इति गम्यते, 'किं अंगेत्ति' शिष्यामंत्रणं, किं पुनर्मनुजमात्राणां प्रभवोऽतिस्तोकमिति. ॥ ४४९ ॥ हितोपदेशो हि सकलकल्याणानि संपादयन्त्येव, तथा चाह—

वरमउडकिरीडधरो, चिंचइओ चवलकुंडलाहरणो सक्को हिओवएसा, एरावणवाहणो जाओ ॥ ४५० ॥

व्याख्या—वरमकुटः, प्रधानाग्रभागः, स चासौ किरीटश्च, तं धारयतीति वरमुकुटकिरीटधरः, 'चिंचइओत्ति' अंगदादिभिर्मंडितः, चपले विलसद्दीप्तिके कुंडले एव आभरणं यस्यासौ चपलकुंडलाभरणः, कोऽसौ? शक्रः, हितोपदेशाज्जात इति संबंधः, किंभूतः? ऐरावताभिधानः प्रधानगजो वाहनं यस्यासावैरावतवाहन इति. ॥ ४५० ॥

रयणुजलाइँ जाइं, बत्तीसविमाणसयसहस्साइं । वज्जहरेण वराइँ, हिओवएसेण लद्धाइं ॥ ४५१ ॥

व्याख्या—रत्नोज्ज्वलानींद्रनीलादिखचितानि यानि द्वात्रिंशद्विमानशतसहस्राणि लक्षाणीत्यर्थः, वज्रधरेण शक्रेण वराणि श्रेष्ठानि हितोपदेशेन तानि लब्धानीति. ॥ ४५१ ॥

सुरवइसमं विभूइं, जं पत्तो भरहचक्कवट्टीऽवि । माणुसलोगस्स पहू, तं जाण हिओवएसेण ॥ ४५२ ॥

व्याख्या—सुरपतिसमामिंद्रतुल्यां विभूतिं समृद्धिं यां प्राप्तो भरतचक्रवर्त्यपि ऋषभसूनुर्मानुषलोकस्य प्रभुस्तं जानीहि हितोपदेशेन, तस्यैव तत्प्रापणसामर्थ्यादिति. ॥ ४५२ ॥ तदिदमवेत्य यद्विधेयं तदाह—

लद्धूण तं सुइसुहं, जिणवयणुवएसममयबिंदुसमं । अप्पहियं कायव्वं, अहिएसु मणं न दायव्वं, ॥४५३॥

व्याख्या—लब्ध्वा प्राप्य तं श्रुतिसुख कर्णसुखदं जिनवचनोपदेशममृतबिंदुसमं, स्तोकस्यापि भव्यप्राणिनां चित्ताह्लादहेतुत्वादात्महितं स्वस्मै पथ्यं तदुक्तं सदनुष्टानं कर्तव्यं, अहितेषु तन्निषिद्धेषु हिंसादिषु मनोंतःकरणं न कर्तव्यं, आस्तां वाक्कायाविति. ॥ ४५३ ॥ तथा च कुर्वन्निह लोक एव यादृग्भवति तदाह—

हियमप्पणो करिंतो, कस्स न होइ गरुओ गुरू गण्णो!। अहियं समायरंतो, कस्स न विप्पच्चओ होइ? ॥

व्याख्या—हित श्रेय आत्मने स्वस्मै कुर्वन्ननुतिष्टन् कस्य न भवति गुरुको गुरुः प्रधानाचार्यकल्प इत्यर्थः, अत एव गण्यो गणनीयः, मर्वकार्येषु पृष्टव्यः सर्वस्य भवतीत्यर्थः, व्यतिरेकमाह—अहितमपथ्यं समाचरन् कुर्वन् कस्य न विप्रत्ययो भवति ? विगतः प्रत्ययो यस्मात् स विगतप्रत्ययोऽविश्वमनीय इति ॥ ४५४ ॥ तत्र ये हितकरणोचितास्ते कुर्वंतु, वयं पुनर्न तद्योग्या इति यो मन्येत तं प्रत्याह—

जो नियमसीलतवसंजमेहिं जुत्तो करेइ अप्पहियं। सो देवयं व पुज्जो, सीसे सिद्धत्थओ व्व जणे ॥४५५॥

व्याख्या—य एव कश्चिन्नियमशीलतप.संयमैः पूर्वोक्तस्वरूपैर्युक्तः करोत्यात्महितमनुष्ठानं स देवतेव देव इव, स्वार्थे तत्प्रत्ययः, पूज्यः पूजनीयो भवति, तथा शिरसि मस्तके कृतश्चोद्यत इति शेषः, क इवेत्याह–सिद्धार्थकवत्, सर्षप इव जने लोके मांगलिकत्वात्, अयमभिप्रायः—नेह तदुचितानां काचित् खनिरस्ति, किं तर्हि? गुणाः पूज्यत्वहेतवः, ते च सर्वस्य स्वप्रयत्नसाध्याः, ततः सर्वेण तेष्वादरो विधेयः, तदुक्तं—गता ये पूज्यत्वं प्रकृतिपुरुषा एव

खलु ते । जना दोषत्यागे जनयत समुत्साहमतुलम् ॥ न साधूनां क्षेत्रं न च भवति नैसर्गिकमिदं । गुणान् यो यो धत्ते स स भवति साधुर्भजत तान् ॥ ४५५ ॥ एतदेव भावयति—

सव्वो गुणेहिं गण्णो, गुणाहिअस्स जह लोगवीरस्स । संभंतमउडविडवो, सहस्सनयणो सययमेइ ॥४५६॥

व्याख्या—सर्वः कश्चिद्गुणैर्ज्ञानादिभिर्गण्यो गणनीयो भवति, दृष्टांतमाह–गुणाधिकस्य सत्वाद्युत्कटस्य यथा लोके कर्मारिप्रेरकत्वेन प्रसिद्धत्वाद्वीरः सुभटो लोकवीरो भगवांस्तस्य संभ्रांतस्य मुकुटविटपो भक्त्यातिशयादाकुलकिरीटपल्लवः, कोऽसौ ? सहस्रनयनो दशशतलोचनः शक्रः सततमनवरतमेवैत्यागच्छति वंदक इति गम्यते, सूत्रस्य त्रिकालगोचरतादर्शनार्थो वर्तमाननिर्देश इति. ॥ ४५६ ॥ गुणहीनस्य व्यतिरेकमाह—

चोरिक्कवंचणाकूडकवडपरदारदारुणमइस्स । तस्स च्चिय तं अहियं, पुणोऽवि वेरं जणो वहइ ॥ ४५७ ॥

व्याख्या—चौर्यं स्तेयं, वंचना क्रियया विप्रलंभना, कूटं वाचनिकं, कपट मानसं शाठ्यं, परदाराः परकलत्रमेतेषु दारुणा पापप्रवृत्ता मतिर्यस्यासौ चौर्यवंचनाकूटकपटपरदारदारुणमतिस्तस्य, किं? तस्यैव तत्तथाविधचेष्टितमहितमपथ्यमिह, परत्र च पुनरपि वैरं तस्योपरि क्रोधाध्यवसायं जनो वहति, पापिष्टोऽदृष्टव्योऽयमित्याद्याक्रोशदानात्, तदयं तस्य वराकस्य गंडस्योपरि स्फोट इति गुणस्थितानां पुनरमी दोषा दूरोत्सारिता एव. ॥४५७॥ तथा आत्मदोषभावमुपलक्षणत्वेन दर्शयन्नाह—

जइ ता तणकंचणलुट्ठरयणसरिसोवमो जणो जाओ । तइया नणु वुच्छिन्नो, अहिलासो दव्वहरणम्मि ॥

व्याख्या—यदि तावदित्यभ्युपगते, तृणकांचनलोष्टरत्नेषु सदृशी एकाकारा उपमोपमानं निर्लोभतया समानदर्शित्वाद्यस्यासौ तृणकांचनलोष्टरत्नसदृशोपमः, यद्येवंविधो जनो विशिष्टलोको जातः संपन्नः, तदा ननु निश्चितमेतद्व्यवच्छिन्नस्त्रुटितोऽभिलाषो द्रव्यहरणे परस्वादाने कारणाभावादिति. तदिदमवेत्य सन्मार्गे वर्तितव्यं स्खलनाद्धि महतामप्यवस्तुता संपद्यत इति. ॥ ४५८ ॥ आह च—

आजीवगगणनेया, रज्जसिरिं पयहिऊण य जमाली । हियमप्पणो करिंतो, नय वयणिज्जे इह पडंतो ॥४५९॥

व्याख्या—आजीवंति द्रव्यलिंगेन लोकमित्याजीवका निह्नवाः, तेषां गणो गच्छस्तस्य नेता नायको गुरुरित्यर्थः, राज्यश्रियं प्रहाय परित्यज्य प्रव्रज्यां गृहीत्वा, चशब्दादागम चाधीत्य जमाली भगवज्जामाता हितमात्मनोऽकरिष्यत् यदीत्यध्याहारः, ततो न च नैव वचनीये 'क्रियमाणं कृतमिति' वीरवचनाश्रद्धानान्निह्नवोऽयमिति निंद्यत्वे इह लोके प्रवचने वाऽपतिष्यत्. ॥४५९॥ तथाहि–मिथ्याभिनिवेषादसौ भगवद्वचनं क्रियमाणं कृतमित्यश्रद्दधानः कृतमेव कृतमिति विपरीतप्ररूपणालक्षणादहिताचरणान्निह्नवोऽयमिह लोकमध्ये वचनीये पतिते सति दुष्करतपोविधानेऽपि किल्बिषिकदेवत्वं निर्वर्तितवानिति, उक्तं च प्रज्ञप्तौ—जइ णं भंते जमाली अणगारे अरसाहारे जाव कालगए,लंतए कप्पे तेरससागरोवमठिइएसु देवेसु किब्बिसिएसु देवत्ताए उववन्ने, गोयमा ! जमा-

लिणं आयरियपडिणियगाए इत्यादि जाव जमालिणं भंते ताओ देवलोगाओ आउक्खएणं जाव कहिं उववज्जिहिति? गोयमा! पंचतिरिक्खजोणियमनुसदेवभवगहणाइं संसारमणुपरियट्टित्ता तओ पच्छा सिज्झस्ती, इत्यादि. किंच

इंदियकसायगारवमएहिं सययं किलिट्ठपरिणामो । कम्मघणमहाजालं. अणुसमयं बंधई जीवो ॥ ४६० ॥

व्याख्या—इंद्रियकषायगौरवमदैः पूर्वोक्तस्वरूपैः सततमनवरतं क्लिष्टपरिणामः कलुषाध्यवसायः सन् किं क्रियत इति, कर्म ज्ञानावरणादि, तदेव जीवचंद्रतिरोधायकत्वाद् घनामेघास्तेषां महाजालं बृहद्वृंदं कर्मघनमहाजालमनुसमयं प्रतिक्षणं बध्नाति स्वप्रदेशैः श्लेषयति जीवः केवलं, न पुनः कश्चिदत्र परमार्थः, वैषयिकसुखस्य दुःखरूपतया पामाकंडूयनकल्पत्वात, महारतिविनोदद्वारेण विपर्यासात्तत्राविवेकिनां सुखबुद्धिप्रवृत्तेःरिति.।४६०। आह च—

परपरिवायविसाला, अणेगकंदप्पविसयभोगेहिं । संसारत्था जीवा, अरइविणोअं करंतेवं ॥ ४६१ ॥

व्याख्या—परपरिवादेन अन्यावर्णवादेन विशाला विस्तीर्णाः परपरिवादविशालाः, अनेन द्वेषकार्यं लक्षयति, अनेककंदर्पविषयभोगैर्बहुविधपरिहासशब्दाद्यनुभवनैः करणभूतैः. अनेन रागकार्यं दर्शयति, किं? संसारस्था भवस्थिताः सकर्मका इत्यर्थः, अनेन तु रागद्वेषयोर्बीजत्वं कथयति, जीवाः प्राणिनोऽरतिविनोदं परितापप्रेरणं कुर्वंत्येव मोहात्, न चासौ कर्तुं शक्यो यतो विषयाभ्यासमनुविवर्धंते रोगाः कौशलानि चेंद्रियाणां, तथा चोक्तं—उपभोगोपायपरो। वांछति यः शमयितुं विषयतृष्णाम् ॥ धावत्याक्रमितुमसौ। परोऽपराह्ने निजच्छायाम् ॥१॥ किंचद्रैः

तन्मोहोपहतानां. ते ह्यपुण्यमपि पुण्यबुद्ध्या चरंतीति ॥ ४६१ ॥ आह च—

आरंभपायनिरया, लोइअरिसिणो तहा कुलिंगी अ । दुहओ चुक्का नवरं, जीवंति दरिद्दजियलोए ॥४६२॥

व्याख्या-आरंभः स्नानादौ पृथिव्याद्युपमर्दः, पाकश्चरुकादिनिर्वृत्तौ धान्यादीनां, तयोर्निरता आसक्ता इति समासः, लौकिकऋषयः स्वबुद्ध्या निर्मायाध्यवसायास्तापसादयः, तथा कुलिंगिनश्च मायाविनो भौतादयः, ते किमित्याह-'दुहो चुक्का नवरंति' केवलमुभयतोऽपि भ्रष्टा वराकाः,न ते गृहस्थास्तद्विवेष्टत्वात्,नापि यतयो हिंसादिप्रवृत्तत्वात्.अतो जीवति प्राणान् धारयंति दारिद्र्यजीवलोकमिति, दारिद्र्येण दौर्गन्त्येन तद्दैन्यवृत्त्या जीवलोको जीविका यस्मिन् जीवने तत्तथेति क्रियाविशेषणमेतदिति. ॥४६२॥ समुन्मूलितमोहानां पुनरिदं चेतसि वर्तत इत्याह—

सव्वो न हिंसियव्वो, जह महिपालो तहा उदयपालो । नय अभयदाणवइणा, जणोवमाणेण होयव्वं ॥

व्याख्या—सर्वो जंतुर्न हिंसितव्यो न पीडनीयः, किं तर्हि ? यथा महीपालो राजा, तथोदकपालो रंकोऽप्यपरिभवनीयतया द्रष्टव्य इति शेषः, न च नैवाभयदानपतिना तद्दायकत्वात्तत्स्वामिना अभयदानव्रतिना वा अभयं सर्वप्राणिभ्यो मया दातव्यमित्यभ्युपगमेनेत्यर्थः, किं ? जनस्येवोपमान उपमा यस्यासौ जनोपमानस्तेन तथाभूतेन भवितव्यं, यथाहुर्लौकिकाः -अग्निदो गरदश्चैव । शस्त्रपाणिर्धनापहः ॥ पुत्रदारहरश्चैव । षडेते आततायिनः ॥१॥ आततायिनमायांत । मपि वेदांतपारगं ॥ जिघांसंतं जिघांसीया—न्नात्र ब्रह्म भवेदिति ॥ २ ॥ पीडाप्रवृत्तेऽपि परे

न पीडा कर्तव्येत्यर्थः, एव कुर्वन्नविवेकिभिरक्षमो गण्यत इति ॥ ४६३ ॥ आह च—

पाविज्जइ इह वसणं, जणेण तं छगलओ असत्तुत्ति । न य कोइ सोणियबलिं, करेइ वग्घेण देवाणं ॥४६४॥

व्याख्या—प्राप्यते इह लोके व्यसन हीलारूपं जनेनाविवेकिना क्षमावान्, यदुत छगलकोऽजोऽशक्तोऽक्षम इति कृत्वा, तथाहि--नापि नैव कश्चिच्छोणितबलिं रुधिरबलिं करोति व्याघ्रेण करणभूतेन देवानां चंडिकादीनां, तस्य तेजःप्रधानत्वात्, तेजोरहितस्य छागस्यैव तत्करणोचितत्वात्, अतस्त्वमपि तादृश इत्येवं हील्यमानेनापि तेन क्षमैवावलंबनीया, न पुनस्तद्वचनेन क्रोधो विधेयः, तस्य परलोकापकारित्वात्, आयुषश्चानित्यत्वेन परलोकस्याभ्यर्णवर्तित्वादिति. ॥ ४६४ ॥ आह च—

वच्चइ खणेण जीवो, पित्तानिलधाउसिंभखोभेहिं । उज्जमह मा विसीअह, तरतमजोगो इमो दुलहो ॥४६५॥

व्याख्या—व्रजति गच्छति क्षणेन स्वल्पकालेन जीवः प्राणी, पित्तं चानिलश्च, धातवश्च रसाद्याः, श्लेष्मा चेति द्वन्द्वः, तेषां क्षोभः प्रकोपस्तस्मिन्, तद्गतश्चायुःक्षयवते, शिष्यान्प्रत्याह—उद्यच्छत ? उद्यमं कुरुत ? मा विषीदत ? सदनुष्ठाने मा शिथिलीभवत ? यतस्तरतमयोगः सातिशयो धर्मकारणसंबंधोऽयं वक्ष्यमाणो दुर्लभो दुःप्रापः, अतस्तत्प्राप्तौ न युक्तः प्रमादः कर्तुं, तदुक्तं—प्राप्तमिह मानुषत्वं । लब्ध्वा सद्गुरुसुसाधुसामग्रीम् ॥ तदपि न करोषि धर्मं । जीवक ननु वंचयसे प्रकटम् ॥ १ ॥ ४६५ ॥ तथा चाह—

पंचिंदियत्तणं माणुसत्तणं आरिए जणे सुकुलं । साहुसमागम सुणणा, सद्दहणाऽरोग पव्वज्जा ॥ ४६६ ॥

व्याख्या—पचेंद्रियत्वं संपूर्णचक्षुरादिप्राप्तिः, मानुषत्वं मनुष्यजन्म, आर्ये मगधादौ जने देशे उत्पत्तिरिति शेषः, तत्रापि सुकुलं धर्मयोग्यमुग्रादि, साधुसमागमः सुगुरुसंपर्क इत्यर्थः, 'सुणणत्ति' श्रवणं धर्मशास्त्राकर्णनं, 'सद्दहणत्ति'श्रद्धान एवमेतदिति तत्वे प्रत्ययः, आरोग्यं नीरोगता संयमभारोद्वहनक्षमतेत्यर्थः, प्रव्रज्या सद्विवेकात्सर्वसंगत्यागरूपा भागवती दीक्षा, एतानी सर्वाण्यप्युत्तरोत्तरक्रमेण दुर्लभानीति गम्यते. ॥ ४६६ ॥ तदेवमप्युपदिष्टे यः सांप्रतेक्षित्वाद् दुर्बुद्धिर्धर्मं न कुर्यात्स पश्चादहह शोचतीत्याह—

आउं संविल्लंतो, सिढिलंतो बंधणाइँ सव्वाइं । देहट्ठिअं मुयंतो, झायइ कलुणं बहुं जीवो ॥ ४६७ ॥
इक्कंऽपि नत्थि जं सुट्ठु सुचरियं जह इमं बलं मज्झ । को नाम दढक्कारो, मरणंते मंदपुण्णस्स? युग्मम् ॥४६८॥

व्याख्या—आयुर्जीवितं संवेष्टयन् संनिहितापक्रमणाल्लघूकुर्वन् श्लथीकुर्वन् बंधनान्यंगोपांगानां सर्वाणि, देहस्थितिं च शरीरावस्थानं, चशब्दात्पुत्रकलत्रधनकनकादिकं च मुंचन् परित्यजन् ध्यायति चिंतयति करुण विवेकिनां कृपाकारणं बह्वनेकाकारं जीवः, यदुताहो किं मया मंदभाग्येन लब्धे सर्वज्ञशासने अक्षेपमोक्षप्रापिणि विषयलवलोलुपतया निरंतरमहादुःखव्रचितमसारकारणमीदृशमनुष्ठितमिति, सुचरितावष्टंभाभावात, तथा ह्येकमपि नास्ति तत्सुष्ठु चरित यथेदं बलं सुगतिगमनसामर्थ्यं ममेति, यस्य को नाम ! न कश्चित्...

व्याख्या—साधयंति परस्मै प्रतिपादयंति च स्फुटविकटं व्यक्तवर्णैर्विस्तरेणेत्यर्थः, मासाहसशकुनसदृशका जीवा इति, अनेन वक्ष्यमाणगाथासंविधानकं सूचयति, न च नैव कर्मभारगुरुत्वेन हेतुभूतेन तत्स्वयं कथितुमाचरंत्यनुतिष्ठंति तथा तथा कथयंतीति ॥ ४७१ ॥ संविधानकं चाह—

वग्घमुहम्मि अहिगओ, मंसं दंतंतराउं कड्ढेइ । मा साहसति जंपइ, करेइ न य तं जहाभणियं ॥४७२॥

व्याख्या—व्याघ्रमुखेऽतिगतः प्रविष्टो मांसं दंतांतरादृशनविवरात् कर्षति चंच्वा गृह्णाति, चशब्दात्खादति च मा साहसमिति जल्पति, करोति न च तद्यथा भणितं स्वयमिति. ॥ ४७२ ॥ किल कश्चित्पक्षी मार्गे गच्छता ब्राह्मणेन मा साहसमित्यारटन्नाकर्णितो निरीक्षितश्च तेन यावत्प्रसुप्तव्याघ्रानने प्रविश्यासौ मांसमाकर्षति. ततो ब्राह्मणेनाभ्यधायि-मा साहसंति जंपसि। वग्घमुहाओ य आमीसं हरसि॥ मुद्धोऽसि सउण दीससि। वायासरिसं न य करेसि ॥ १ ॥ एवमन्योऽपि योऽन्यथावाद्यन्यथाकारी स तत्तुल्यो द्रष्टव्य इति. किं पुनरसौ करोतीत्याह—

परिअट्टिऊण गंथत्थवित्थरं निहसिऊण परमत्थं । तं तह करेह जह तं, न होइ सव्वंपि नडपढियं ४७३

व्याख्या—परावर्त्यानेकपरिपाटीभिरभ्यस्य किं? ग्रंथः सूत्रं, अर्थविस्तरो व्याख्यानप्रपंचः, ग्रंथश्चार्थविस्तरश्चेत्येकवद्भावः, तच्च घोषणिकामात्रेणापि परावर्त्यते, अतस्तदपोहायाह—निघृष्य कनकमिव परमार्थं तत्सारमपि विज्ञायेत्यर्थः, तथापि गुरुकर्मतया तद्ग्रंथार्थविस्तरं तथा करोति यथा तत्र भवति सर्वमपि स्वकार्यकरणाभा-

वादनर्थसंपादनाच परलोके इहापि च तल्लाघंच जनयति, यथा नटपठितमिति दृष्टांतः ॥४७३॥ तमेव व्याचष्टे—

पढइ नडो वेरग्गं, निव्विजिजा य बहुजणो जेण । पढिऊण तं तह सढो, जालेण जलं समोअरइ ४७४

व्याख्या—पठति व्यक्तयागिरा नटः शैलूपो वैराग्यं, कारणे कार्योपचारात्तज्जनकं वृत्तादि गृह्यते, निर्विद्येत संसारान्निर्विण्णो भवेद्बहुरेव बहुको जनो येन पठितेन, स तु पश्चात्पठित्वा तद् वृत्तादि वैराग्यकारणं तथा तदभिनयादिप्रकारेण, शठो वंचको जालेन करणभूतेन जलं समवतरति मीनादिजिघृक्षया, तद्वत्प्रस्तुतधर्मकथी ज्ञेय इत्युपनयः. ॥ ४७४ ॥ तदिदमवेत्य यद्विधेयं तदाह—

कह कह करेमि कह मा करेमि कह कह कयं बहुकयं मे । जो हिययसपसारं, करेइ सो अइकरेइ हियं ॥

व्याख्या—विवेकिना प्रतिक्षणमिदं पर्यालोच्यं, यदुत कथं कथं करोमि हितमनुष्ठानमादरातिशयेन पर्यालोचनात्, संभ्रमे द्विर्वचनं, कथ 'माकरेमिति' माकार्षं. कथं कथं कृतमनुष्ठितं वहितिं बहुगुणं कृतमनुष्ठानं मे ममेन्येवमालोचयतो गुणमाह, यो विद्वान् हृदयसंप्रसारणं चित्ते पर्यालोचं करोति मोऽतिकरोति अतिशयेन संपादयति हितमात्मनः पथ्यमिति. ॥ ४८५ ॥ किमित्येतावानादर उपदिश्यत इत्युच्यते, अनादरेण सदनुष्ठानानाराधनयोगात्, तथा चाह—

सिढिलो अणायरकओ, अवसवसकओ तहा कयावकओ । सययं पमत्तसीलस्स, संजमो केरिसो होज्जा ? ॥

व्याख्या—शिथिलः संयमः कीदृशो भवेदिति संबंधः, स च शिथिलः कथं स्यादत आह, अनादरकृतोऽयत्नानुष्ठितो यत्नेनापि परभयादनुष्ठीयमानोऽसौ न किंचित्स्यादत आह, अवशवशकृतः, अवशो गुर्वाद्यायत्तता तद्वशेन तद्द्वारेण, नात्मधर्मश्रद्धया कृतोऽनुष्ठित इति समासः, यत्नेन धर्मबुद्ध्यापि च क्रियमाणोऽप्रेक्षापूर्वकारितयांतरांतरा यद्यपि क्रियते तथापि नासौ स्यादित्याह, तथा कृतापकृत इति कृतश्चासौ क्वचित्संपूर्णानुष्टानात्, अपकृतश्च क्वचित सर्वथा विराधनादिति, तदयं सर्वेपाधिशुद्ध एव संपूर्णः संपद्यते, नान्यथेत्याह—सततमनवरतं प्रमत्तशीलस्य प्रमादः प्रमत्तं विषयादिवांछा, तच्छीलस्य स्वरसात्तत्कारिणः संयमः कीदृशो भवेत् ! न कीदृशोऽपीत्याकूतं. ॥ ४७६ ॥ तथाहि—

चंदुव्व कालपक्खे, परिहाइ पए पए पमायपरो । तह उग्घरविघरनिरंगणो य णय इच्छियं लहइ ॥४७७॥

व्याख्या—चंद्र इव कालपक्षे कृष्णार्धमासे परिहीयते परिक्षयं याति गुणापेक्षया पदे पदे स्थाने स्थाने प्रमादपरः सन् साधुरिति गम्यते, अभ्युच्चयमाह, तथोदूगृहविगृहनिरंगनश्च न च नैवेष्टं लभेत इति, तमोद्गतं प्राबल्येन नष्टं गृहं गृहस्थपर्यायसंबंधि यस्यासावुदूगृहः, विगृहः प्रव्रज्यायां विशिष्टवसतिरहितः, निर्गतांगना योषिदस्मादिति निरंगनः, उदूगृहश्चासौ विगृहश्चासौ निरंगनश्चेति समासः. तदयमर्थः—केवलं क्लिष्टाध्यवसायेन विषयान् वांछन्नसौ प्रतिक्षणं कर्म चिनोति, न पुनरभिलषितं प्राप्नोति. गृहगृहिणीप्रभृतीनां तत्साधनानामभावादिति. ॥ ४७७ ॥ अन्यच्चासाविहैव यदनुभवति तदाह—

भीओव्विग्ग निलुक्को, पागडपच्छन्नदोससयकारी। अप्पच्चयं जणंतो, जणस्स धी जीवियं जियइ ॥४७८॥

व्याख्या—भीतश्चासौ, कः किं मां भणिष्यतीत्युत्त्रासात्, उद्विग्नश्च कचिदपि धृतेरभावाद्भीतोद्विग्नः, स चासौ निलुक्कश्च संघपुरुषादिभयेनात्मगोपनादीति समासः, किमित्येवंविध इत्याह-प्रकटप्रच्छन्नानि जनेन विदिताविदितानि दोषशतानि कर्तुं शीलमस्यासौ प्रकटप्रच्छन्नदोषशतकारी, अत एवाप्रत्ययं धर्मस्योपर्यविश्वासं जनयन् जनस्योत्पादयन् लोकस्य नूनमेषां धर्मः शास्त्रकारेणैवंविध एव प्रतिपादित इति बुद्ध्युत्पत्तेः, किं? धिग्जीवितमिति क्रियाविशेषणं, धिक्काराहप्राणधारणेनेत्यर्थः, जीवति किल प्राणान् धारयतीति. ॥ ४७८ ॥ यतः सातिचारस्यायं दोषस्तस्मादादित एव निरतिचारेण भाव्यं, यस्तु चिंतयेद् द्राघीयान् मे पर्यायः, तत एवेष्टसिद्धिर्भविष्यति, किं निरतिचारतया? तं प्रत्याह—

न तहिं दिवसा पक्खा, मासा वरिसावि संगणिज्जंति। जे मूलउत्तरगुणा, अक्खलिया ते गणिज्जंति ॥

व्याख्या—न तस्मिन् धर्मविचारे तस्यां चेष्टसिद्धौ दिवसाः पक्षा मासा वर्षाणि वा संगण्यंते सम्यक्संख्यायंते, किं तर्हि? ये मूलगुणउत्तरगुणा अस्खलिता निरतिचारास्ते गण्यंत इति, त एवेष्टप्रापका इत्यर्थः. ॥ ४७९ ॥ तस्मादकारणं चिरदीक्षितता, निरतिचारतैवेष्टसाधकेति, सा च गाढाप्रमादिनो भवति, यत आह—

जो नवि दिणे दिणे संकलेइ के अज्ज अज्जिया मि गुणा?।
अगुणेसु अ नहु खलिओ, कह सो उ करिज्ज अप्पहिअं? ॥ ४८० ॥

व्याख्या—यो नापि नैव दिने दिने, अपिशब्दाद्रात्रौ च, संकलयति सम्यग्बुद्ध्या निरूपयति, यदुत केऽद्याऽर्जिता अधिगता मया गुणा ज्ञानादयः, अगुणेषु च मिथ्यात्वादिषु न च नैव स्खलितः मातिचारोऽहं संजात इति, कथमसौ कुर्यादात्महितं स्वपथ्यं सम्यग्वासनाशून्यत्वादिति. ॥४८०॥ तदेवमादित आरभ्यानेकाकारेषूपदेशेषु तदनुष्ठानगोचरेषु दत्तेष्वपि केचिन्न प्रतिपद्यंते, अपरे प्रतिपन्नमपि शिथिलयंतीति दर्शयन्नाह—

इयं गणियं इय तुलिअं इय बहुआ दरिसियं नियमियं च। जइ तहवि न पडिबुज्झइ, किं कीरइ? नूण भवियव्वं॥
किमगंतु पुणो जेणं, संजमसेढी सिढिलिकया होई। सो तं चिअ पडिवज्जइ, दुक्खं पच्छा उ उज्जमई ॥ ४८२ ॥

व्याख्या—इत्युक्तेन प्रकारेणगणितं परिसंख्यातं 'संवत्सरवृषभजिन' इत्यादिना सदनुष्ठानमिति सर्वत्र योज्यमिति, तुलितमाकलितं अवंतिसुकुमारोदाहरणादिनेति, बहुधानेकप्रकारं दर्शितमार्यमहागिरिदृष्टांतादिना, नियमितं च नियंत्रितं, चशब्दादन्वयव्यतिरेकाभ्यां, समितिकषायगौरवेंद्रियेत्यादिनयान्वयेन, द्विचत्वारिंशद्देषणादोषान् रक्षतात्यदिना व्यतिरेकेण च नियंत्रितमिति यावत्, यदि तथापीयताप्यादरेण कथयतां न प्रतिबुध्यते गुरुकर्मकैर्न तत्त्वदर्शिभिर्भूयते, ततः किं क्रियतामन्यत्समधिकतरं ! नूनं निश्चितं भवितव्यमनंतकालं संसारे तैरिति गम्यते. ॥ ४८१ ॥ 'किमगं तु पुणोत्ति' अंगेति शिष्यामंत्रणं, अनुस्वारविपर्ययः प्राकृतत्वात्, तुशब्दश्चशब्दार्थे, ततश्च किं चेत्यभ्युच्चये गृहीत्वापि पुनर्भूयो येन पुण्यवता संयमश्रेणिर्गुणपद्धतिरित्यर्थः शिथिलीकृता अना·

हता भवति सोऽप्रतिपन्नगुणान् गाढतरं जघन्यतर इत्यभ्युच्चये, तदुक्तं—वरं कृतध्वस्तगुणा-दत्यंतमगुणः पुमान्॥ प्रकृत्या ह्यमणिः श्रेय—न्नालंकारश्च्युतोपलः ॥ १ ॥ पुनरपि गुणपद्धतिं संधास्यतीतिचेन्नैतदस्तीति. यत आह—म शिथिलस्तदेव शैथिल्यं प्रतिपद्यते, दुःखं कृच्छ्रेण पश्चात्तुशब्दाच्चिंतयन्नप्युद्यच्छत्युद्यमं कुरुते, महामोहघृष्टेरिति. ॥ ४८२ ॥ लघुकर्मकास्तु यदुपदिश्यते तदेवाचरंति, अत एव तानुद्दिश्योपदेशसर्वस्वमाह—

जइ सव्वं उवलद्धं, जइ अप्पा भाविओ उवसमेणं। कायं वायं च मणं, उप्पहेणं जह न देई ॥ ४८३ ॥

व्याख्या—यदि सर्वं समस्तमंतरोक्तं वक्ष्यमाणं सिद्धांताभिहितं चोपलब्धं सम्यक्परिच्छिन्नं भवद्भिः, यद्यात्मांतर्यामी भावितो वासित उपशमेन रागादिजयेन, अनेन सम्यगुपलंभकार्यं दर्शयति, ततो हे विवेकिनो भाविदोषनिरोधार्थं प्राचीनदोषक्षपणार्थं च कायं देहं वाचं च गिरं च मनश्चित्तमुत्पथेनोन्मार्गेण यथा न दद्ध्वं यूयं तथा विधेयं यथोत्पथप्रवृत्ता योगा न भवंति तथा वर्तितव्यमित्यर्थः. तदनेनैतल्लक्षयति यो योगत्रयं सम्यग्नियंत्रयति तेन सर्वोऽप्यागमार्थोऽनुष्ठितो भवतीति. ॥ ४८३ ॥ एतदेव व्याचष्टे, तत्र तावत्कायमधिकृत्याह—

हत्थे पाए निखिवे, कायं चालिज्ज तंपि कज्जेणं। कुम्मो व्व सए अंगे, अंगोवंगाइं गोविज्जा ॥ ४८४ ॥

व्याख्या—हस्तौ पादौ न क्षिपेन्निःप्रयोजनं न प्रेरयेत्, कायं देहं चालयेत्, तमपि न यथाकथंचित् किं तर्हि ? कार्येण ज्ञानादिप्रयोजनेन, अन्यदा पुनः कूर्मवत् कच्छप इव स्वके आत्मीये अंगे शरीरेंगोपांगानि भुजन-

यनादीनि गोपायेल्लीनानि कुर्यादिति. ॥ ४८४ ॥ अधुना वाचमुररीकृत्याह—

विकहं विणोयभासं अंतरभासं अवक्कभासं च । जं जस्स अणिट्ठमपुच्छिओ य भासं न भासिज्जा ॥ ४८५ ॥

व्याख्या—विरूपा कथा विकथा देशादिसंबंधिनी, तां न भाषेत इति सर्वत्र संबंधः, ज्ञानादिप्रयोजनरहिता विनोदनिमित्तं कालनयनाय भाषा विनोदभाषा तां, अंतरे गुरुभाषाविवरे भाषा अंतरभाषा तां, अवाक्येनावचनीयेन यकारमकारादिना भाषा अवाक्यभाषा तां, या काचिद्यस्य कस्यचिदनिष्टाऽप्रिया तां अपृष्टश्च केनचिद्वाचालतया भाषां न भाषेत न ब्रूयादिति. ॥ ४८५ ॥ सांप्रतं मनोऽधिकृत्याह—

अणवट्ठियं मणो जस्स, झायइ बहुयाइं अट्टमट्टाइं । तं चिंतिअं च न लहइ, संचिणइ अ पावकम्माइं ॥

व्याख्या -अनवस्थितमतिचंचलं मनश्चित्तं यस्य संबंधि स ध्यायति चिंतयति बहूनि नानारूपाणि, 'अट्टमट्टाइंति' पापसंबंधिन्यर्दवितर्दानि, तदसौ चिंतितं च यथाभिप्रेतं न लभते न प्राप्नोति, संचिनोति च प्रतिक्षणं बध्नाति पापकर्माणि नरकाद्योग्यान्यसातादीनि, अतः स्थिरं शुद्धं मनो विधेयमिति. ॥४८६॥ पुनरपि गुरुकर्मणो विपरीतचारितां दर्शयति—

जह जह सव्वुवलद्धं, जह जह सुचिरं तवोवणे वुच्छं । तह तह कम्मभरगुरू, संजमनिव्वाहिरो जाओ ॥

व्याख्या—यथा यथा सर्वं समस्तमुपलब्धं ज्ञानावरणक्षयोपशमेनागमरहस्यं, यथा सुचिरं प्रभूतकालं तप-

उपवने सुसाधुमध्ये उषितं स्थितं तेन तथा तथा कर्मभरगुरुर्मिथ्यात्वादिकर्मभराक्रांतः सन् संयमनिरवाहिर आगमोक्तानुष्टानबहिर्भूतोऽसौ जातः संपन्न इति ॥ ४८७ ॥ तदेतस्य महक्षभिति दर्शयन्नाह—

विज्जप्पो जह जह ओसहाइं पिज्जेइ वायहरणाइं । तह तह से अहिययरं, वाएणाऊरिअं पुट्टं ॥ ४८८ ॥

व्याख्या—आप्तोऽविप्रतारकः, स चासौ वैद्यश्चाप्तवैद्यः, गाथायामाप्तशब्दस्य परनिपातः प्राकृतत्वात्, स यथा यथौपधानि नागरकादीनि ' पिज्जेइत्ति ' पाययति अनात्मवंतमातुरमिति गम्यते, वातहरणानि वायुनाशकानि, तथा तथा से तस्यातुरस्याधिकतरं प्रागवस्थायाः समर्गलतरं वातेनापूरितं वायुनाक्रांतं ' पोट्टंति ' जठरमिति. तथा भगवति सुवैद्यकर्मवातहरणानि सिद्धांतपदौपधानि पाययत्यप्यनेकधा पापिष्ठप्राणिरोगिणां चित्तोदरं पापवायुना गाढतरं पूर्यत इत्युपनयः. ॥ ४८८ ॥ ये जिनवचनवैद्यचिकित्साया अप्यसाध्यास्तेऽसाध्या एवेत्यत्रार्थे लौकिकदृष्टांतानाह--

दड्ढजउमकज्जकरं, भिन्नं संखं न होइ पुण करणं । लोहं च तंबविद्धं, न एइ परिकम्मणं किंचि ॥४८९॥

व्याख्या—दग्धं जतु भस्मीभूतं लाक्षाधिकाररूपं अकार्यकरं प्रयोजनकारि न भवति, भिन्नं विदलितं शंखं जलजं न भवति, पुनः क्रियत इति पुनःकरणं पुनः कर्तुं न शक्यत इत्यर्थः. लोहमयः, तच्च ताम्रविद्धं शुल्वमिश्रं नैति नागच्छति 'परिकम्मणंति परिकर्म पुनः करणरूप किंचित्, घटांतानि लोहानीति प्रसिद्धेः, तथा तेऽपि

न चिकित्सितुं शक्या इत्युपनयः. ॥ ४८९ ॥ तथा चाह—

को दाही उवएसं, चरणालसयाण दुव्विअड्ढाणं ? । इंदस्स देवलोगो, न कहिज्जइ जाणमाणस्स ॥४९०॥

व्याख्या—को दास्यत्युपदेशं तत्वगोचरं ? न कश्चित्. चरणे चारित्रेऽलसाः प्रमादिनस्त एव चरणालसकास्तेषां, दुर्विदग्धानां विपरीतशास्त्रपल्लवग्राहिणां, तदभिमानद्वारेण दृष्टांतमाह—इंद्रस्य देवलोको न कथ्यते जानानस्येति, तद्गुणज्ञत्वात्तस्य तत्पुरस्तं वर्णयतः केवलमुपहास्यता, तथा तेऽपि किल वयमेव जानीम इत्युपदिशंतमुपहसंति न पुनस्ते किंचिज्जानंति प्रबलमोहनिद्रावष्टब्धत्वात्, अन्यायोन्मार्गप्रवृत्तेरयोगादिति. ॥ ४९० ॥ ननु कथमयमुन्मार्ग इत्याशंक्याह—

दो चेव जिणवरेहिं, जाइजरामरणविप्पमुक्केहिं । लोगम्मि पहा भणिया, सुस्समण सुसावगो वाऽवि ॥४९१॥

व्याख्या-द्वावेव जिनवरैर्जातिजरामरणविप्रमुक्तैर्लोके पन्थानौ भणितौ, यदुत सुश्रमणः स्यादित्येको मार्गः,सुश्रावको वा भवेद् द्वितीयः,अपिशब्दात्तृतीयः संविग्नपाक्षिकमार्गोऽप्यस्ति, केवलमसावनयोरेवांतर्भूतो द्रष्टव्यः, सन्मार्गोपबृंहकत्वेन तन्मध्यापातित्वाविरोधादिति. ॥४९१॥ एतावेव मार्गौ भावार्चनद्रव्यार्चनशब्दाभिधेयावित्याह—

भावच्चणमुग्गविहारया य दव्वच्चणं तु जिणपूआ । भावच्चणाउ भट्ठो, हविज्ज दव्वच्चणुज्जुत्तो ॥ ४९२ ॥

व्याख्या—भावार्चनं तात्विकपूजनं भगवतां, किं ? उग्रविहारता, चशब्दस्यावधारणार्थत्वादुद्यतविहारितैव.

द्रव्यार्चनं भावार्चनापेक्षयाऽप्रधानपूजनमेव, तुशब्दोऽवधारणे, किं? जिनपूजा माल्यादिभिर्भगवद्बिंबार्चनं, तत्र भावार्चनाद्भ्रष्टस्तथाविधशक्तिविकलतया तत्कर्तुमशक्त इत्यर्थः, 'भवेज्जत्ति' जायेत द्रव्यार्चनोद्युक्तः, तस्यापि पुण्यानुबंधिपुण्यहेतुतया पारंपर्येण भावार्चनहेतुत्वादिति. ॥ ४९२ ॥ यद्येवं तर्हि किं प्रस्तुते स्थितमित्याह—

जो पुण निरच्चणो च्चिअ, सरीरसुहकज्जमित्ततल्लिच्छो। तस्स नहि बोहिलाभ, न सुग्गई नेय परलोगो ॥

व्याख्या—एवं मन्यते द्वावेवानंतरोपवर्णितौ मार्गौ सर्वज्ञाभिमतौ, अयं कुमार्ग एवोभयलिंगशून्यत्वात्, अत एव यः पुनरिति तद्व्यतिरेकतां लक्षयति, तामाह—निरर्चन एव द्रव्यभावार्चनविकल एव चरणकरणसम्यग्जिनपूजनरहितत्वात्, शरीरसुखकार्यमेव तदन्यापोहेन शरीरसुखकार्यमात्रं तस्मिन् लिप्सा लंपटता तल्लिप्सा, शरीरसुखकार्यमात्रे तल्लिप्सा यस्यासौ स तथा, तच्छब्दस्यगतार्थस्यापि प्रयोगेण तत्र गाढप्रतिबंधं लक्षयति, तस्यैवंविधस्य न च नैव बोधिलाभः प्रेत्य जिनप्रणीतधर्मप्राप्तिलक्षणः, न सुगतिर्मोक्षाख्या, नैव परलोकः सुदेवत्वावाप्तिरूप इति. ॥ ४९३ ॥ ननु च द्रव्यार्चनभावार्चनयोः किमित्यधिकतरमित्युच्यते—

कंचणमणिसोवाणं, थंभसहस्सूसिअं सुवण्णतलं। जो करिज्ज जिणहरं, तओऽवि तवसंजमा अहिओ ॥४९४॥

व्याख्या—कांचनं सुवर्णं, मणयश्चंद्रकांताद्यास्तत्प्रधानानि सोपानानि यस्मिन् तत्तथा, स्तंभसहस्रोच्छ्रितं, अनेन विस्तीर्णतामुद्भावयति, सुवर्णप्रधानं तलं यस्य तत्तथा, सर्वसौवर्णिकमित्यर्थः, यः कारयेन्निर्मापयेज्जिनगृहं

भगवद्भवनं, ततोऽपि तथाविधजिनगृहकरणादपि, आस्तां अन्यस्मात्, किं? तपःसंयमस्तपःप्रधानः संयमोऽधिकः समर्गलतरः, तत एव मोक्षावाप्तेरिति. ॥ ४९४ ॥ यत एवं तस्मात् सति सामर्थ्ये भावार्चने यतितव्यं, केवलमंगीकृते तस्मिन् प्रमादो न विधेयः,अन्यथा महानपायः स्यादत एव तं दर्शयितुं लौकिकदृष्टांतमाह—

निव्वीए दुब्भिक्खे, रण्णा दीवंतराओ अन्नाओ । आणेऊणं वीअं, इह दिन्नं कासवजणस्स ॥ ४९५ ॥

केहिवि सव्वं खइयं, पइन्नमन्नेहिं सव्वमद्धं च । वुत्तं गयं च केई, खित्ते खुट्टंति संतत्था ॥ ४९६ ॥

व्याख्या—निर्बीजे यत्र वपनयोग्यमपि धान्यं नास्ति तस्मिन् दुर्भिक्षे दुष्काले सति राजा केनचिन्नृपतिना द्वीपांतरादन्यस्मात् कुतश्चिदानीय बीजमिहेति प्रस्तुतदेशे दत्तं कर्षकजनस्य कृषीवललोकस्य भूरिधान्योत्पत्तये वपनार्थं, तत्र तद्बीजं कैश्चित्कर्षकैः सर्वं समस्तं खादितं भक्षितं, प्रकीर्णमुप्तमन्यैः कर्षकैरर्धमिति संबंधः, अर्धं तु खादितमित्यर्थः, सर्वं चान्यैः प्रकीर्णं निष्पत्तिं च नीतमिति गम्यते, उप्तोद्गतं च प्रकीर्णप्ररूढं च केचित्कर्षकाः क्षेत्रे वर्तमानं खोदुदंति कुट्टयंति, राजश्चौरिकया विमर्द्य स्वगृहेषु नेतुकामा इत्यर्थः, अत एव संत्रस्ता आकुलितलोचनयुगला भयात्, यदुतेमे वयं गृह्यामहे, ते च राजपुरुषैः प्राप्ता महता क्लेशेनविनाशमाप्नुवंति, प्रचंडशासनत्वान्नृपतेरिति दृष्टांतः ॥ ४९५ ॥ ४९६ ॥ अस्य दार्ष्टांतिकमाह—

राया जिणवरचंदो, निव्वीयं धम्मविरहिओ कालो । खित्ताइं कम्मभूमी, कासववग्गो य चत्तारि ॥४९७॥

असंजएहिं सव्वं, खइअं अद्धं च देसविरहिएहिं । साहूहिं धम्मबीअं, उत्तं नीअं च निप्फत्तिं ॥४९८॥

व्याख्या—राजात्र जिनवरचंद्रो भगवान्, निर्बीजं किमित्याह–धर्मविरहितः कालः, क्षेत्राणि कानि ? कर्मभूमयः, कर्षकवर्गश्च क इत्याह—चत्वारोऽसंयतदेशविरतसुसाधुपार्श्वस्था इति, तेषां जिनराजेन धर्मबीजं केवलालोकद्वीपादानाय्य मोक्षधान्यावाप्तये समर्पितमिति, तत्रासंयतैर्धर्मबीजं विरतिरूप सर्वं खादितं तद्रहितत्वात्, तेषामर्धं च देशविरतैः खादितं तदर्धस्यैव तेषु दर्शनात्, साधुभिः पुनर्धर्मबीजमुप्तं स्वक्षेत्रे निहितं, नीतं च निष्पत्तिं सम्यक्पालनेनेति. ॥ ४९७ ॥ ४९८ ॥ पार्श्वस्थैस्तत्र किं कृतं ? कीदृशा वा ते उच्यंते इत्याह—

जे ते सव्वं लहिउं, पच्छा खुट्टंति दुब्बलधिईया । तवसंजमपरितंता, इह ते ओहरिअसीलभरा ॥४९९॥

व्याख्या—य एते सर्वं लब्ध्वा धर्मबीजं पश्चात्कुट्टयंति स्वक्षेत्रे वर्तमानं विमर्दयंति भगवदनादिष्टाश्चौरकर्षका इव, किमित्या—दुर्बला अदृढा धृतिरंगीकृतनिर्वाहक्षमं मनःप्रणिधानं येषां ते दुर्बलधृतिकाः, तपःसंयमयोः परिश्रांताः श्रांता इह प्रवचने पार्श्वस्था इत्युच्यंते, ते चापहृतशीलभरा भवंति, पार्श्वतो मुक्तशीलभरा इत्यर्थः. ॥४९९॥ तदेवं दार्ष्टांतिकघटनां कृत्वा सांप्रतं यदर्थमिदमुपक्रांतं तं दर्शयितुमाह—

आणं सव्वजिणाणं, भंजइ दुविहं पहं अइक्कतो । आणं च अइक्कंतो, भमइ जरामरणदुग्गम्मि ॥५००॥

व्याख्या—आज्ञां सर्वजिनानां संबंधिनीं भनक्ति अमर्दयति, द्विविधं साधुश्रावकसंबंधेनपथं मार्गमतिक्रांतः

समुल्लंघ्य व्यवस्थितः सन्नाज्ञां चातिक्रांतो भ्रमति पर्यटति जरामरणदुर्गेऽनंतसंसारे इति शेषः. ॥ ५०० ॥ यदा तर्हि भग्नपरिणामतया न शक्तो व्रतं धारयितुं तदा किं विधेयमित्याह—

जइ न तरसि धारेउं, मूलगुणभरं सउत्तरगुणं च । मुत्तूण तो तिभूमी, सुसावगत्तं वरतरागं ॥ ५०१ ॥

व्या-यदि न तरसि न शक्नोपि धारयितुमात्मनि व्यवस्थितं मूलगुणभरं व्रतादिगुणव्रातं सोत्तरगुणमेव, तुरवधारणे, मुक्त्वा परित्यज्य, ततस्तिसृणां भूमीनां समाहारस्त्रिभूमितत्, तर्तिक ? सुश्रावकत्वं संपूर्णगृहस्थधर्मपालनं वरतरं श्रेय इति. भूमयस्तु जन्मवर्धन (विहार) दीक्षासंबंधिन्यो ज्ञेया इति, ॥ ५०१ ॥ अमुमेवार्थं समर्थयन्नाह—

अरिहंतचेइआणं, सुसाहुपूयारओ दढायारो । सुस्सावगो वरतरं, न साहुवेसेण चुअधम्मो ॥ ५०२ ॥

व्या०-अर्हच्चैत्यानां भगवद्बिंबानां पूजारत इति शेषः, तथा सुसाधुपूजारतो वस्त्रादिभिस्तदभ्यर्चनोद्युक्तः दृढो निःप्रकंप आचारोऽणुव्रतादिपालनात्मको यस्यासौ दृढाचारः, एवंभूतः सुश्रावको वरतरं प्रधानतरः, न साधुवेषेण यतिलिंगेन रजोहरणादिना विद्यमानेनापि च्युतधर्मो भ्रष्टाचारः, शासनलाघवहेतुत्वादिति. ॥ ५०२ ॥ अन्यच्च—

सव्वंति भाणिऊणं, विरई खलु जस्स सव्विया नत्थि । सो सव्वविरइवाई, चुक्कइ देसं च सव्वं च ॥

व्याख्या—'सव्वंति' उपलक्षणत्वात्सर्वं सावद्ययोगं प्रत्याख्यामि यावज्जीवं त्रिविधेनेत्येवं भणित्वाभिधाय विरतिर्निवृत्तिर्यस्य सर्विका नास्त्येव, खलुशब्दस्यावधारणार्थत्वात्, स सर्वविरतिवादी 'चुक्कइत्ति' भ्रश्यति, 'देसं

च सव्वं चेति' देशविरतेः सर्वविरतेश्च प्रतिज्ञाताऽकरणादिति. ॥ ५०३ ॥ न केवलमुभयाविरत्योरभावः, मिथ्या-दृष्टित्वं च संपद्यते तस्येत्याह—

जो जहवायं न कुणइ, मिच्छद्दिट्ठी तओ हु को अन्ना ?। वड्ढेइ अ मिच्छत्तं, परस्स संकं जणेमाणो ॥

व्याख्या—यो यथावादं न करोति यथोक्तं नानुतिष्ठति, मिथ्यादृष्टिर्विपरीतदर्शनस्ततः सकाशात्, हुरलंकारे, कोऽन्यः ? न कश्चित, स एव मूर्धाभिषिक्तो मिथ्यादृष्टिरित्यर्थः, वर्धयति च वृद्धिं नयत्येव मिथ्यात्वं विपरीताभिनिवेशं यः परस्यात्मव्यतिरिक्तस्य शंकां सर्वज्ञागमगोचरां संदेहं जनयन्नुत्पादयन्. किं ? एवंविध एव धर्म इति बुद्ध्युत्पत्तेः, न वा किंचित् क्रियतेऽत्र. केवलमभिधीयत इति अवगमादिति. ॥ ५०४ ॥ किंच—

आणाए च्चिय चरणं, तब्भंगे जाण किं न भग्गंति ?। आणं च अइक्कंतो, कस्साएसा कुणइ सेसं? ॥

व्याख्या—आज्ञयैव भगवदादेशेनैव चरणं चारित्रं व्यवतिष्ठत इति शेषः, तद्भंगे आज्ञालोपे जानीहि अवबुद्ध्यस्व किं न भग्नं ! सर्वं विमर्दितमित्यर्थः, आज्ञां चातिक्रांत उल्लंघ्य स्थितः कस्यादेशात्करोति शेषमनुष्ठानं ? विडंबना रूपमेव तद्भंगे तदित्याकूतं. ॥ ५०५ ॥ अभ्युच्चयमाह—

संसारो अ अणंतो, भट्ठचरित्तस्स लिंगजीविस्स । पंचमहव्वयतुंगो, पागारो भल्लिओ जेण ॥ ५०६ ॥

व्याख्या—संसारश्चानंतोऽपरिमितो भ्रष्टचारित्रस्य विलुप्तचरणस्य, अत एव लिंगेन वाणिज्येनेव जीवितुं

शीलमस्येति लिंगजीवी, इयतांतश्चरणपरिणामाभावो दर्शितः, अधुना तत्कार्यमाह— पंचमहाव्रततुंगो हिंसाद्य-विरत्यभ्युन्नतो बहिरपि प्राकार इव प्राकारो जीवनगररक्षाक्षमो गुणकलाप इति गम्यते, 'भिल्लिओत्ति' विलुप्तो येनपुण्यवतेति ॥ ५०६ ॥ अधुना महासाहसिकत्वं तस्य लक्षयन्नाह--

न करेमित्ति भणित्ता, तं चेव निसेवए पुणो पावं । पच्चक्खमुसावाई, मायानियडीपसंगो य ॥ ५०७ ॥

व्याख्या--न करोमीति भणित्वा तदेव स्वयं निषिद्ध निषेवते समाचरति पुनः पापं यः प्रत्यक्षमृषावादी साक्षादलीकवावदूकः पश्यतोहर इयाचिकित्स्य इत्यर्थः, तस्य मायानिकृत्योरांतरबाह्यशाठ्ययोः प्रसंगोऽवश्यं भाविनी प्राप्तिः, स च संपद्यत इति. ॥ ५०७ ॥ तथा चासौ प्राकृतलोकादपि पापिष्ट इत्यावेदयन्नाह—

लोएऽवि जो ससूगो अलिअं सहसा न भासए किंचि । अह दिक्खिओऽवि अलियं,भासइ तो किंच दिक्खाए? ॥

व्याख्या-लोकेऽपि यः सशूको मनागपि पापभीरुरलीकमनृतं सहसा तत्क्षणान्न भाषते किंचित, असावपि विमृश्यकारित्वात्. अथ दीक्षितोऽपि प्रव्रजितोऽप्यलीकं भाषते, ततः किं दीक्षया ? न किंचित्. चः पूरणार्थ इति. ॥५०८॥ यस्तु मन्यं तपसः साध्यं, तपो हि दुरतिक्रममित्यादिवचनप्रमाणात्संयमं विहाय तपस्येवाद्रियेत तं प्रत्याह—

महव्वयअणुव्वयाइं, छंडेउं जो तवं चरइ अन्नं । सो अन्नाणी मूढो नावाबु ( ब्बु ) ड्डो मुणेयव्वो ।५०९।

व्याख्या— महाव्रताणुव्रतानि प्रतीतानि, 'छड्डेउंति' परित्यज्य, यस्तपश्चरत्यनशनादि, तीर्थांतरीयसंबंधि वा,

सोऽज्ञानी, यतो मूढो मोहोपहतः, अत एव चासौ नौबोद्रो मंतव्यः, यो हि जलधौ नावं भित्त्वा लोहकीलकं गृह्णाति मूर्खतया तद्वद् द्रष्टव्यः. संयमतो भंगे गृहीततपोऽयं कीलकस्यापि भवजलधौ निमज्जनाद्व्यर्थं तद्ग्रहणमिति. तस्माद्द्वयोरपि यत्नो विधेयः, तत्रच संक्लिष्टकाले बहूंस्तद्विकलानवेक्ष्य माध्यस्थ्यमवलंबनीयं, न मौखर्यं कार्यं, अन्यथा प्रस्तुनक्षतिः स्यादिति ॥ ५०९ ॥ आह च—

सुबहुं पासत्थजणं, नाऊणं जो न होइ मज्झत्थो । नय साहेइ सकज्जं, कागं च करेइ अप्पाणं ॥ ५१० ॥

व्याख्या—सुबहुमनेकाकारं पार्श्वस्थजनं शिथिलं स्वयूथलोकं ज्ञात्वा यो न भवति मध्यस्थो मौनशीलः, स किमित्याह—न च नैव साधयतिनिष्पादयति स्वकार्यमात्मप्रयोजनं मोक्षलक्षणं रागद्वेषोपपत्तेः, काकं च करोत्यात्मानं, प्रत्युत रोषात् सर्वैस्तैः संभूयात्मनो गुणवत्त्वख्यापनाय हंसकल्पतामारोप्य लोकमध्ये स एव निर्गुणतया प्रख्याप्य काककल्पः क्रियत इत्यर्थः. ॥ ५१० ॥ तदयं सुस्थितस्योपदेशो दत्तः, दुःस्थितेन तु यद्विधेयं तत्काकाह—

परिचिंतिऊण निउणं, जइ नियमभरो न तीरए वोढुं । परचित्तरंजणेणं, न वेसमित्तेण साहारो ॥५११॥

व्याख्या—परिचिंत्य पर्यालोच्य निपुणं सूक्ष्मबुद्ध्या यदि नियमभरो मूलोत्तरगुणरूपो न तीर्यते न शक्यते वोढुं जीवितांतं यावन्नेतुं भवतीति शेषः, ततः परचित्तरंजनेनायमपि प्रव्रजितमिति परेषां बुद्धिजनकेन वेषमात्रेण रजोहरणादिना न साधारस्त्राणमिति. तदयमाशयः-निर्गुणस्य लिंगं धारयतो जनमिथ्यात्वोत्पादहेतुत्वेन

गाढतराननमंमारावासेस्तत्त्यागः श्रेयानिति. ॥ ५११ ॥ तत्रैतत्स्याद्यदि नाम चारित्रमनेन विनाशितं तथापि ज्ञानदर्शने स्तः, ततश्च नैकांतनिर्गुणः, तथा च न लिंगत्यागः श्रेयान् पर्यवस्येे, नैतदस्ति, चरणाभावे तत्वतस्तयोरभावात्, यत आह—

निच्छयनयस्स चरणस्सुवघाए नाणदंसणवहोऽवि । ववहारस्स उ चरणे, हयम्मि भयणा उ सेसाणं ॥

व्याख्या—निश्चयनयस्यांतस्तत्त्वनिरूपणाभिप्रायस्येदं निदर्शनं, यदुत चरणस्योपघाते सति ज्ञानदर्शनवधोऽपि संपन्न एव, तयोस्तत्साधकत्वेनैव पारमार्थिकस्वरूपावस्थितेः, तदभावे त्वकिंचित्करतयाऽवस्तुत्वप्राप्तेः, व्यवहारस्य तु बहिस्तत्त्वनिरूपकाभिप्रायस्य पुनश्चरणे हते सति भजना विकल्पना शेषयोर्ज्ञानदर्शनयोः, कार्याभावे नैकांतः कारणाभावसिद्धेः, निर्धूमस्यापि वह्नेर्दर्शनादिति. न्दियता ग्रंथेन यदुक्तं द्वावेव मार्गौ जिनवरैरुक्ताविति तद्व्यवस्थापितं ।५१२। अधुना तयोरेव अपिशब्दसंसूचितस्य संविग्नपाक्षिकमार्गस्य स्वकार्यसाधकत्वं दर्शयन्नाह—

सुज्झइ जई सुचरणो, सुज्झइ सुस्सावओऽवि गुणकलिओ । ओसन्नचरणकरणो, सुज्झइ संविग्गपक्खरुई ॥

व्याख्या—शुद्ध्यत्यशेषकर्ममलकलंकप्रक्षालनेन निर्मलो भवति यतिः सुचरणो दृढचारित्रः शुद्ध्यति सुश्रावकोऽपि गुणकलितः सम्यग्दर्शनाणुव्रतादिषु सुप्रतिष्ठः. अवसन्नचरणकरणः शिथिलोऽपि स्वयं, अपिशब्दोऽत्रापि संपद्ध्यते, शुद्ध्यति, किंभूतः सन्नित्याह, संविग्ना मोक्षाभिलाषिणः सुसाधवः, तत्पक्षे तदनुष्ठाने रुचिरभिलाषो

यस्यासौ संविग्नपक्षरुचिरिति. बहुशः क्रियाभिधानं शुद्धेर्भेदनिदर्शनार्थं, तथाहि—यतः साक्षाच्छुद्धिरन्यथेतरयोरिति. ॥ ४१३ ॥ ते तर्हि संविग्नपक्षरुचयः कथं लक्ष्यंत इत्याह—

संविग्गपक्खियाणं, लक्खणमेयं समासओ भणियं । ओसन्नचरणकरणाऽवि जेण कम्मं विसोहंति ॥५१४॥

व्याख्या–संविग्नपक्षे मोक्षाभिलाषिणि सुसाधुवर्गे सुंदरा बुद्धिर्विद्यते येषांते संविग्नपाक्षिकास्तेषां, लक्ष्यतेऽनेनेति लक्षणं पररूपव्यावर्तको धर्मः, तदेतद्वक्ष्यमाणं समासतः संक्षेपेण भणितमुक्तं गणधरादिभिः. अवसन्नचरणकरणा अपि स्वयं कर्मपरतंत्रतया प्रमादिनोऽपि प्राणिनो येन लक्षणेन सता कर्म ज्ञानावरणादि विशोधयंति प्रतिक्षणं क्षालयंतीति. ॥५१४॥ तत्र बहुवचनादेशेनाप्येकवचननिर्देशो भवतीति न्यायं दर्शयंस्तमेवाभिधित्सुराह--

सुद्धं सुसाहुधम्मं कहेइ निंदइ य निययमायारं । सुतवस्सियाण पुरओ, होइ य सव्वोमरायणीओ ॥५१५॥

व्याख्या—संविग्नपाक्षिकः शुद्धं निष्कलंकं सुसाधुधर्मं यथोक्तं यत्याचारं कथयति लोकेभ्यः प्रतिपादयति, निंदति च [illegible] एव निज एव निजकस्तमात्मीयमाचारं स्वानुष्ठानं. तथा सुतपस्विनां शोभनसाधूनां [illegible] इत्यर्थः, भवति च भवत्येव सर्वावमरत्नाधिकोऽद्यदिनदीक्षितेभ्योऽप्यात्मानं [illegible] ॥ ५१५ ॥ तथा—

वंदइ [illegible] कुणइ कारवे नेय । अतट्ठा नवि दिक्खइ, देइ सुसाहूण बोहेउं ॥ ५१६ ॥

वंदते सुसाधून् स्वयं न च नैव वंदयति तान्, न तद्वंदनं प्रतीच्छतीत्यर्थः, कृतिकर्म विश्रामणादिकं स्वयं करोति, तेषां कारयत्यात्मनस्तन्न च नैव, तथात्मार्थं स्वनिमित्तमुपस्थितमपि शिष्यं नापि नैव दीक्षयति प्रव्राजयति, किं तर्हि? ददाति प्रयच्छति सुसाधुभ्यो बोधयित्वा धर्मदेशनयेति. ॥५१६॥ किमित्यात्मार्थं न प्रव्राजयतीत्यत कारणमाह—

ओसन्नो अत्तट्ठा, परमप्पाणं च हणइ दिक्खंतो। तं छुहइ दुग्गईए, अहिययरं वुड्डइ सयं च ॥५१७॥

व्याख्या—अवसन्नः शिथिलाचार आत्मार्थं स्वनिमित्तं परं शिष्यमात्मानं च हंति भावप्राणापेक्षया, दीक्षयन् प्रव्राजयन्, कथमित्याह—तं शिष्यं क्षिपति दुर्गतौ नरकादिकायां, अधिकतरं प्रागवस्थायाः समर्गलतरं 'वुड्डइत्ति' निमज्जति स्वयं च भवजलधाविति. ॥ ५१७ ॥ न केवलं प्रव्राजयन् वितथं प्ररूपयन्नपीत्याह—

जह सरणमुवगयाणं, जीवाण निकिंतए सिरे जो उ। एवं आयरिओऽविहु, उस्सुत्तं पन्नवंतो य ॥५१८॥

व्याख्या—यथा शरणं भयार्त्तत्राणलक्षणमुपगतानामभ्युपगतानां जीवानां देहिनां निकृंतति छिनति शिरांसि मस्तकानि यस्तु, स तथा दुर्गतावात्मानं निक्षिपतीति वर्तते, एवमनेनैवोपमानेनाचार्योऽपि गुरुरपि, आस्तामपरः, हुरलंकारे, उत्सूत्रमागमादुत्तीर्णं प्रज्ञापयन् प्ररूपयन्, तुशब्दादाचरंश्च. ॥ ५१८ ॥ तानात्मानं च दुर्गतौ क्षिपतीति निगमयन्नाह—

सावज्जजोगपरिवज्जणा उ सव्वुत्तमो जईधम्मो। बीओ सावगधम्मो, तइओ संविग्गपक्खपहो ॥ ५१९ ॥

व्याख्या—तस्मात् स्थितमेतत्, सावद्ययोगपरिवर्जनया सपापव्यापारपरिहारलक्षणया हेतुभूतया सर्वोत्तमो यतिधर्मः साध्वाचारो मोक्षमार्ग इति शेषः, द्वितीयः श्रावकधर्मः, तृतीयः संविग्नपक्षपथः, तद्धेतुत्वात्तावपि मोक्षमार्गाविति. ॥ ५१९ ॥ शेषाणां का वार्ता इत्यत आह—

सेसा मिच्छद्दिट्ठी, गिहिलिंगकुलिंगदव्वलिंगेहिं । जह तिण्णि य मुक्खपहा संसारपहा तहा तिण्णि ॥

व्याख्या—शेषाः प्रोक्तव्यतिरेकिणो मिथ्यादृष्टयो विपरीताभिनिवेशाद्भवानुयायिन इत्यर्थः, के ते? अत आह—गृहिलिंगकुलिंगद्रव्यलिंगैः करणभूतैर्ये वर्तंते, एवं च स्थिते किं संपन्नमित्याह –यथा ' तिन्निओत्ति ' त्रय एव मोक्षपथाः सुसाधुश्रावकसंविग्नपाक्षिकलक्षणा निर्वाणमार्गाः, संसारपथा भवमार्गास्तथा त्रय एव, गृहस्थचरकादिपार्श्वस्थादिरूपा इति. ॥ ५२० ॥ ननु च गृहिचरकादयो भवंतु भवानुयायिनः, भगवल्लिंगधारिणस्तु कथमित्याह—

संसारसागरमिणं. परिब्भमंतेहिं सव्वजीवेहिं । गहियाणि य मुक्काणि य अंणतसो दव्वलिंगाइं ॥ ५२१ ॥

व्याख्या—एव मन्यते सम्यग्ज्ञानादिविकलेन, न किंचिल्लिंगमात्रेण त्राणं, यतः संसारसागरं भवोदधिमिमं प्रत्यक्षमनुभूयमानं परिभ्रमद्भिः पर्यटद्भिः सर्वजीवैः समस्तप्राणिभिः, किं? गृहीतानि चोपात्तान्येव, मुक्तानि च त्यक्तान्येव, अनंतशोऽनंतवारा द्रव्यलिंगानि रजोहरणादिरूपाण्यनादित्वात्कालस्य सर्वभावैः संयोगधर्मकत्वाच्च

प्राणिनामनंतशस्तत्संबंधो न विरुद्ध इति भावना. ॥ ५२१ ॥ किंचात्यंतनिर्गुणस्य लिंगत्याग एव श्रेयानित्युक्तमतस्तत्र कैवास्था। अन्यच्चासौ तदमुंचन्नागमज्ञैः प्रज्ञापनीयः, तथापि च यो न त्यजेत्तं प्रत्याह—

अच्चणुरत्तो जो पुण, न मुयइ बहुसोऽवि पन्नविज्जंतो। संविग्गपक्खियत्तं, करिज्ज लब्भिहिसि तेण पहं ॥

व्याख्या—अत्यनुरक्तो गाढं तद्द्वारेण प्रतिबद्धो यः कश्चित् पुनःशब्दस्य विशेषणार्थत्वान्मनाक् सशूकश्च न मुंचति द्रव्यलिंगं बहुशोऽप्यनेकवारा अपि गीतार्थैः प्रज्ञाप्यमानो गुणदोपकथनया शिष्यमाणः, स किमित्याह—संविग्नपाक्षिकत्वं पूर्वोक्तलक्षणं कुर्याद्विदध्यादित्युपदेशः, यतोऽसौ लप्स्यते तद्बीजाधानात् प्राप्स्यते भवांतरे तेन संविग्नपाक्षिकत्वेन क्रियमाणेन पथं ज्ञानादिकं मोक्षमार्गमिति. ॥५२२॥ स तर्हि संविग्नानां कोपयुज्यत इत्याह—

कंताररोहमद्धाणओमगेलन्नमाइकज्जेसु। सव्वायरेण जयणाइ कुणइ जं साहुकरणिज्जं ॥ ५२३ ॥

व्याख्या—कांतारं महदरण्यं, रोधो नगरादौ परचक्रजनितः, अध्वा मार्गः, अवमं दुर्भिक्षं, ग्लानत्वं ज्वरादिरोगेण मांद्यं, कांतारश्च रोधश्चेत्यादिद्वंद्वः, तान्यादिर्येषां राजोपसर्गादीनां इत्येवमादिषु कार्येषु 'सव्वायरेणत्ति' सर्वादरेण सर्वशक्त्या 'जयणत्ति' यतनया यतनापूर्वकं 'कुणइत्ति' करोति, यथा चित्तोपराधो न भवति, तथासौ संविग्नपाक्षिकः करोति यत्साधु शोभनं करणीयं कर्तव्यं साधुकार्यं वा तपस्विप्रयोजनमिति. ॥ ५२३ ॥ एतच्चातिदुष्करं, अत एवासौ प्रशस्यतयोक्तः, यत आह—

आयरतरसंमाणं, सुदुक्करं माणसंकडे लोए । संविग्गपक्खियत्तं, ओसन्नेणं फुडं काउं ॥ ५२४ ॥

व्याख्या—आदरतरेण सातिशयप्रयत्नेन सन्मानः सुसाधूनामभ्यर्चनं यस्मिन् संविग्नपाक्षिकत्वे तदादरतरसन्मानं सुदुष्करं दुरनुष्ठेय मानसंकटे गर्वतुच्छे लोके स्वाभिमानग्रस्तप्राणिगणमध्ये दुःशक कर्तुमिति भावः, तदुक्तं—सर्वस्यात्मा गुणवान् । सर्वः परदोपदर्शने कुशलः ॥ सर्वस्य चास्ति वाच्यं । न चात्मदोपान् वदति कश्चित् ॥ १ ॥ किं तत् ? पक्षेण चरतीति पाक्षिकः संविग्नानां पाक्षिकः संविग्नपाक्षिकः, तद्भावस्तत्त्वं, तदवसन्नेन शिथिलेन स्वयं स्फुटं लोकप्रकाशं निर्व्याजं वा कर्तुं विधातु सुदुष्करमिति संटकः. ॥ ५२४ ॥ ननु च भवद्भिरिदमभ्यधायि यदुत त्रयः संविग्नतत्पाक्षिकसुश्रावकलक्षणा मोक्षमार्गाः, तत्र ये सुसाधुविहारेण बहुकालं विहृत्य पश्चात्कर्मपरतंत्रतया शैथिल्यमवलंबंते ते कुत्र पक्षे निक्षिप्यंते ? अत आह—

सारणचइआ जे गच्छनिग्गया पविहरंति पासत्था । जिणवयणबाहिराऽवि य, ते उ पमाणं न कायव्वा ॥

स्मारणा त्याजिता इति उपलक्षणत्वात् स्मारणवारणचोदनाभिः प्रागुक्तस्वरूपाभिर्निर्वेदिताः संतो ये गच्छात् सद्गुर्वधिष्ठितसुसाधुगणान्निर्गता बहिर्भूता गच्छनिर्गताः प्रविहरंति यथेष्टचेष्टया विचरंति ते प्रमाणं नैव कर्तव्या इति संबंधः, तुशब्दस्यावधारणार्थत्वात् सुसाधुतया नैव द्रष्टव्या इत्यर्थः, अपि च पार्श्वस्थास्ते यतो जिनवचनबाहिरा भगवद्वचःपार्श्ववर्तिन इति, अयमाशयः—नात्र जात्यैव संविग्नतादि किं तर्हि ? संपूर्णयतिगृहिधर्मिधर्मा

प्राणिनामनंतशस्तत्संबंधो न विरुद्ध इति भावना. ॥ ५२१ ॥ किंचात्यंतनिर्गुणस्य लिंगत्याग एव श्रेयानित्युक्तमतस्तत्र कैवास्था ! अन्यचासौ तदमुंचन्नागमज्ञैः प्रज्ञापनीयः, तथापि च यो न त्यजेत्तं प्रत्याह—

अच्चणुरत्तो जो पुण, न मुयइ बहुसोऽवि पन्नविज्जंतो। संविग्गपक्खियत्तं, करिज्ज लब्भिहिसि तेण पहं ॥

व्याख्या—अत्यनुरक्तो गाढं तद्द्वारेण प्रतिबद्धो यः कश्चित् पुनःशब्दस्य विशेषणार्थत्वान्मनाक् सशूकश्च न मुंचति द्रव्यलिंगं बहुशोऽप्यनेकवारा अपि गीतार्थैः प्रज्ञाप्यमानो गुणदोषकथनया शिष्यमाणः, स किमित्याह—संविग्नपाक्षिकत्वं पूर्वोक्तलक्षणं कुर्याद्विदध्यादित्युपदेशः, यतोऽसौ लप्स्यते तद्बीजाधानात् प्राप्स्यते भवांतरे तेन संविग्नपाक्षिकत्वेन क्रियमाणेन पथं ज्ञानादिकं मोक्षमार्गमिति. ॥५२२॥ स तर्हि संविग्नानां क्वोपयुज्यत इत्याह—

कंताररोहमद्धाणओमगेलन्नमाइकज्जेसु । सव्वायरेण जयणाइ कुणइ जं साहुकरणिज्जं ॥ ५२३ ॥

व्याख्या—कांतारं महदरण्यं, रोधो नगरादौ परचक्रजनितः, अध्वा मार्गः, अवमं दुर्भिक्षं, ग्लानत्वं ज्वरादिरोगेण मांद्यं, कांतारश्च रोधश्चेत्यादिद्वंद्वः, तान्यादिर्येषां राजोपसर्गादीनां इत्येवमादिषु कार्येषु 'सव्वायरेणत्ति' सर्वादरेण सर्वशक्त्या 'जयणत्ति' यतनया यतनापूर्वकं 'कुणइत्ति' करोति, यथा चित्तोपराधो न भवति, तथासौ संविग्नपाक्षिकः करोति यत्साधु शोभनं करणीयं कर्तव्यं साधुकार्यं वा तपस्विप्रयोजनमिति. ॥ ५२३ ॥ एतच्चातिदुष्करं, अत एवासौ प्रशस्यतयोक्तः, यत आह—

आयरतरसंमाणं, सुदुक्करं माणसंकडे लोए । संविग्गपक्खियत्तं, ओसन्नेणं फुडं काउं ॥ ५२४ ॥

व्याख्या—आदरतरेण सातिशयप्रयत्नेन सन्मानः सुसाधूनामभ्यर्चनं यस्मिन् संविग्नपाक्षिकत्वे तदादरतरसन्मानं सुदुष्करं दुरनुष्ठेयं मानसंकटे गर्वतुच्छे लोके स्वाभिमानग्रस्तप्राणिगणमध्ये दुःशकं कर्तुमिति भावः, तदुक्तं—सर्वस्यात्मा गुणवान् । सर्वः परदोषदर्शने कुशलः ॥ सर्वस्य चास्ति वाच्यं । न चात्मदोषान् वदति कश्चित् ॥ १ ॥ किं तत् ? पक्षेण चरतीति पाक्षिकः संविग्नानां पाक्षिकः संविग्नपाक्षिकः, तद्भावस्तत्त्वं, तदवमग्नेन शिथिलेन स्वयं स्फुटं लोकप्रकाशं निर्व्याजं वा कर्तुं विधातुं सुदुष्करमिति संटंकः. ॥ ५२४ ॥ ननु च भवद्भिरिदमभ्यधायि यदुत त्रयः संविग्नतत्पाक्षिकसुश्रावकलक्षणा मोक्षमार्गाः, तत्र ये सुसाधुविहारेण बहुकालं विहृत्य पश्चात्कर्मपरतंत्रतया शैथिल्यमवलंबंते ते कुत्र पक्षे निक्षिप्यंते ? अत आह—

सारणचइआ जे गच्छनिग्गया पविहरंति पासत्था । जिणवयणबाहिराऽवि य, ते उ पमाणं न कायव्वा ॥

स्मारणा त्याजिता इति उपलक्षणत्वात् स्मारणवारणचोदनाभिः प्रागुक्तस्वरूपाभिर्निर्वेदिताः संतो ये गच्छात् सद्गुर्वधिष्टितसुसाधुगणान्निर्गता बहिर्भूता गच्छनिर्गताः प्रविहरंति यथेष्टचेष्टया विचरंति ते प्रमाणं नैव कर्तव्या इति संबंधः, तुशब्दस्यावधारणार्थत्वात् सुसाधुतया नैव द्रष्टव्या इत्यर्थः, अपि च पार्श्वस्थास्ते यतो जिनवचनबाहिरा भगवद्वचःपार्श्ववर्तिन इति, अयमाशयः—नात्र जात्यैव संविग्नतादि किं तर्हि ? संपूर्णयतिगृहिधर्मिधर्मा-

नुष्ठायिनौ संविग्नसुश्रावकौ, कायेनान्यत्र प्रवृत्तोऽपि दृढं मोक्षमार्गप्रतिबद्धचित्तस्तु संविग्नपाक्षिक इति, इदमेषां प्रासंगिकं लक्षणं, तद्रहितास्तु पार्श्वस्थादय एव, न प्रागवस्थानुष्ठानं तेषामपेक्ष्यत इति. ॥ ४२५ ॥ यदिवा तथाभूतानेव प्रमाणीकृत्यापरे प्रमादे वर्तमाना गीतार्थैः सूत्रेण चोदिता यदि ब्रूयुर्यदुत किं कुर्मो वयं अस्मत्तो महत्तरैरप्येतदाचरितं तान्प्रतीदमुच्यते—' सारणगाहा ' स एवार्थः, अयं तु विशेषः—ये जिनवचनबाह्यतया पार्श्वस्थास्ते विदुषा प्रमाणं प्रवर्तमानेन क्वचिदपि न कार्या, सूत्रमेव प्रमाणयितव्यं, अन्यथा अर्थापत्त्या भगवतोऽप्रमाणतापद्यते, तथा चावाचि परोपकारभूरिभिर्भगवद्भिर्हरिभद्रसूरिभिः—सुयवज्झाचरणरया । पमाणयंता तहाविहं लोयं ॥ भुवणगुरुणोवराया । पमाणगं नावगच्छंति ॥ १ ॥ सुत्तेण चोइओ जो । अण्णं उद्दिसिय तं न पडिवज्जे ॥ सो तंतवायवज्झो । न होइ धम्मंमि अहिगारी ॥ २ ॥ इत्यादि. तस्मादागमपरतंत्रतैव लोकाचरितनिरपेक्षाऽपरलोकांगं, तस्यां च सत्यां शक्त्यनुरूपं यदेवानुष्ठीयते तदेव निर्जराकारीति. अमुमेवार्थमभ्युच्चयद्वारेणाह—

हीणस्सऽवि सुद्धपरूवगस्स संविग्गपक्खवायस्स । जा जा हविज्ज जयणा, सा सा से निज्जरा होइ ॥५२६॥

व्याख्या—आस्तां तावन्निष्कलंकचारित्रिणः,हीनस्यापि उत्तरगुणाद्यपेक्षया न्यूनस्यापि शुद्धप्ररूपकस्य यथावस्थितसर्वज्ञागमप्रकाशकस्य,संविग्नेषु पक्षपातोऽस्यास्तीति संविग्नपक्षपाती, तस्य या या काचिद्भवेज्जायेत यतना मनाक्परिणतिः,परिमितोदकादिग्रहणरूपा सा सा से तस्य संविग्नपक्षपातिनो निर्जरा भवति कर्मविलयहेतुत्वात्, तस्य कायेनान्यत्र प्रवृत्तस्यापि मदनुष्ठाने एव गाढं चित्तप्रतिबन्धत्वात् , तथा चोक्तं—संविग्गपक्खिओ पुण ।

अन्नत्थपयाइआनि कारणं ॥ धम्मं चिय तीलच्छा । दढरोत्तात्यव्व पुरसाम ॥ १ ॥ यस्तु गीतार्थो बहुलाभगु
णदोषपरिकलनया भगवदुपदेशात्किंचिदासेवते, स महतो निर्जरालाभस्य भाजनमिति ॥ ५२६ ॥ आहच—

सुक्काइयपरिसुद्धे, सइ लाभे कुणइ वाणिओ चिट्ठं । एमेव य गीयत्थो, आयं दट्ठुं समायरइ ॥ ५२७ ॥

व्याख्या—शुल्कं राजदातव्यो भागः, तदादिर्येषां कर्मकरव्ययादीनां ते शुल्कादयः, तैः सद्भिरपि परिशुद्धो निर्वडितः शुल्कादिपरिशुद्धः, तस्मिन्नेवंविधे सति विद्यमाने लाभे करोति वाणीजकचेष्टां व्यवहारात्मिकां क्रियां, एवं चाने नैव क्रमेण गीतार्थो गृहीतागमसारः पुरुष आयमधिकतरं ज्ञानादिलाभं दृष्ट्वागमलोचनेन निरीक्ष्य समाचरति यतनया किंचिदासेवत इति. ॥ ५२७ ॥ ननु चायव्ययतुलनया प्रवर्तमानस्य गीतार्थस्यास्तु निर्जरालाभः, यस्तु निःप्रयोजनं संपूर्णानुष्ठानविकलः संविग्नपाक्षिकमार्गः किमर्थं स समर्थित इत्याह—

आमुक्कजोगिणो च्चिअ हवइ थोवाऽवि तस्स जीवदया । संविग्गपक्खजयणा, तो दिट्ठा साहुवग्गस्स ॥५२८॥

व्याख्या—आ समंताद्योगाः संयमव्यापारा मुक्ता येनासावामुक्तयोगी, सर्वधनादेराकृतिगणत्वादिन् समासांतः, ततश्चैवं पदानां घटना द्रष्टव्या, आमुक्तयोगिनोऽपि तस्य साधुवर्गस्यस्तोका जीवदया भवत्येव, ततः कारणात् संविग्नपक्षयतना मोक्षाभिलाषानुरागेण पूर्वोक्तरूपा वर्तमाना दृष्टा उपलब्धा भगवद्भिरिति. तदयमर्थः—यथा ह्यातुरो बहुकालमपथ्यासेवी सुवैद्यसंपर्कादिना विज्ञातपथ्यासेवनगुणत्वादारोग्याकांक्षितया अपथ्यं हातु

नुष्ठायिनौ संविग्नसुश्रावकौ, कायेनान्यत्र प्रवृत्तोऽपि दृढं मोक्षमार्गप्रतिबद्धचित्तस्तु संविग्नपाक्षिक इति, इदमेषां प्रासंगिकं लक्षणं, तद्रहितास्तु पार्श्वस्थादय एव, न प्रागवस्थानुष्ठानं तेषामपेक्ष्यत इति. ॥ ४२५ ॥ यदिवा तथाभूतानेव प्रमाणीकृत्यापरे प्रमादे वर्तमाना गीतार्थैः सूत्रेण चोदिता यदि ब्रूयुर्यदुत किं कुर्मो वयं अस्मत्तो महत्तरैरप्येतदाचरितं तान्प्रतीदमुच्यते—' सारणगाहा ' स एवार्थः, अयं तु विशेषः—ये जिनवचनबाह्यतया पार्श्वस्थास्ते विदुषा प्रमाणं प्रवर्तमानेन क्वचिदपि न कार्या, सूत्रमेव प्रमाणयितव्यं, अन्यथा अर्थापत्त्या भगवतोऽप्रमाणतापद्यते, तथा चावाचि परोपकारभूरिभिर्भगवद्भिर्हरिभद्रसूरिभिः—सुयबज्झाचरणरया । पमाणयंता तहाविहं लोयं ॥ भुवणगुरुणोवराया । पमाणयं नावगच्छंति ॥ १ ॥ सुत्तेण चोइओ जो । अण्णं उद्दिसिय तं न पडिवज्जे ॥ सो तंतवायबज्झो । न होइ धम्मंमि अहिगारी ॥ २ । इत्यादि. तस्मादागमपरतंत्रतैव लोकाचरितनिरपेक्षाऽपरलोकांगं, तस्यां च सत्यां शक्त्यनुरूपं यदेवानुष्ठीयते तदेव निर्जराकारीति. अमुमेवार्थमभ्युच्चयद्वारेणाह—

हीणस्सऽवि सुद्धपरूवगस्स संविग्गपक्खवायस्स । जा जा हविज्ज जयणा, सा सा से निज्जरा होइ ॥५२६॥

व्याख्या—आस्तां तावन्निष्कलंकचारित्रिणः,हीनस्यापि उत्तरगुणाद्यपेक्षया न्यूनस्यापि शुद्धप्ररूपकस्य यथावस्थितसर्वज्ञागमप्रकाशकस्य,संविग्नेषु पक्षपातोऽस्यास्तीति संविग्नपक्षपाती, तस्य या या काचिद्भवेज्जायेत यतना मनाक्परिणतिः,परिमितोदकादिग्रहणरूपा सा सा से तस्य संविग्नपक्षपातिनो निर्जरा भवति कर्मविलयहेतुत्वात्, तस्य कायेनान्यत्र प्रवृत्तस्यापि सदनुष्ठाने एव गाढं चित्तप्रतिबंधत्वात् , तथा चोक्तं—संविग्गपक्खिओ पुण ।

अन्नत्थपयट्टिओत्ति काएणं ॥ धम्मे चिय तल्लिच्छो । दढरत्तित्थिव्व पुरिसंमि ॥ १ ॥ यस्तु गीतार्थो बहुस्तोकगुणदोषपरिकलनया भगवदुपदेशात्किंचिदासेवते, स महतो निर्जरालाभस्य भाजनमिति ॥ ५२६ ॥ आह च—

सुक्काइयपरिसुद्धे, सइ लाभे कुणइ वाणिओ चिट्ठं । एमेव य गीयत्थो, आयं दट्ठुं समायरइ ॥ ५२७ ॥

व्याख्या—शुल्कं राजदातव्यो भागः, तदादिर्येषां कर्मकरव्ययादीनां ते शुल्कादयः, तैः सद्भिरपि परिशुद्धो निर्वडितः शुल्कादिपरिशुद्धः, तस्मिन्नेवंविधे सति विद्यमाने लाभे करोति वाणीजकचेष्टां व्यवहारात्मिकां क्रियां, एवं चाने नैव क्रमेण गीतार्थो गृहीतागमसारः पुरुष आयमधिकतरं ज्ञानादिलाभं दृष्ट्वागमलोचनेन निरीक्ष्य समाचरति यतनया किंचिदासेवत इति. ॥ ५२७ ॥ ननु चायव्ययतुलनया प्रवर्तमानस्य गीतार्थस्यास्तु निर्जरालाभः, यस्तु निःप्रयोजनं संपूर्णानुष्ठानविकलः संविग्नपाक्षिकमार्गः किमर्थं स समर्थित इत्याह—

आमुक्कजोगिणो च्चिअ. हवइ थोवाऽवि तस्स जीवदया । संविग्गपक्खजयणा, तो दिट्ठा साहुवग्गस्स ॥५२८॥

व्याख्या—आ समंताद्योगाः संयमव्यापारा मुक्ता येनासावामुक्तयोगी, सर्वधनादेराकृतिगणत्वादिन् समासांतः, ततश्चैवं पदानां घटना दृष्टव्या, आमुक्तयोगिनोऽपि तस्य साधुवर्गस्यस्तोका जीवदया भवत्येव, ततः कारणात् संविग्नपक्षयतना मोक्षाभिलाषानुरागेण पूर्वोक्तरूपा वर्तमाना दृष्टा उपलब्धा भगवद्भिरिति. तदयमर्थः—यथा ह्यातुरो बहुकालमपथ्यासेवी सुवैद्यसंपर्कादिना विज्ञातपथ्यासेवनगुणत्वादारोग्याकांक्षितया अपथ्यं हातु

कामः पथ्यासेवने भावतः प्रतिबद्धोऽपि क्रमेणैव तन्मुंचेत्, तथा चोक्तमायुर्वेदे—उचितादहिताद्धीमान्। क्रमशो विरमेन्नरः॥ हितं क्रमेणोपचरेत्। क्रमश्चात्रोपदेक्ष्यते॥ १॥ इत्यादि. तथा कथंचिदेव बहुकालं यः पार्श्वस्थादिभावभाजी स सुसाधुसंपर्कादिना प्रादुर्भूततीव्रधर्मश्रद्धानोऽपि 'ण य ओसन्नविहारी दुहिओ ओसन्नयं चयइ' इत्यादिप्रागुक्तयुक्त्या दुस्त्यजत्वात्तद्भावस्य क्रमशो निवर्तमानो गाढं संयमे प्रतिबद्धाभिप्रायः संपूर्णवीर्यलाभादादरतः संविग्नपाक्षिकः स्यात्, तदर्थं तन्मार्गोऽपि मोक्षहेतुतया प्रज्ञापित इति. ॥ ५२८॥ तदेवमनेकाकारान् सदुपदेशान् प्रतिपाद्य तेषां सुपात्रन्यासयोग्यतां विपक्षविक्षेपद्वारेणाह—

किं मूसगाण अत्थेण ? किं वा कागाण कणगमालाए ?। मोहमलखवलिआणं, क कज्जुवएसमालाए ? ॥

व्याख्या—किं मूषकाणामाखूनामर्थेन दीनारादिना ? न किंचिन्निःप्रयोजनत्वात्, किं वा काकानां कनकखचिता कनकमयी वा माला रत्नानां माणिक्यानां पद्धतिः कनकमाला तया? न किंचित्, एवं मोहमलखवलितानां मिथ्यात्वादिकर्मपंकदग्धानां प्राणिनां किं कार्यं प्रयोजनमुपदेशमालया? न किंचित्तदुपकाराभावादिति. ॥५२९॥ किंच—

चरणकरणालसाणं, अविणयबहुलाण सययऽजोगमिणं। न मणी सयसाहस्सो, आबज्झइ कुच्छभासस्स ॥

व्याख्या—चरणकरणालसानां मदनुष्टानप्रमादिनां अविनयबहुलानां दुर्विनीतानां जीवानां, विनयस्य प्राधान्यख्यापनार्थं पृथग्विशेषणं, सततं सर्वदाऽयोग्यमनुचितमिदमुपदेशमालावस्तु, किमित्यत आह— न मणी 'सय-

साहस्सोत्ति' शतसाहस्रिको लक्षमूल्यइत्यर्थः, आबद्ध्यते परिधीयते केनचित्, 'कुच्छुभासस्सेत्ति' काकस्य, तत्परिधायकस्याप्युपहास्यत्वप्राप्तेरिति. ॥ ५३० ॥ किमेवमप्युपदिश्यमाने केनचिन्न सम्यग्वर्तेरन् ये नैवमभिवीर्यंते इत्युच्यते, बाढं कर्मपरतंत्रत्वात्, आह—

नाऊण करयलगयाऽऽमलं व सब्भावओ पहं सव्वं। धम्मम्मि नाम सीइज्जइत्ति कम्माइं गुरुआइं ॥५३१॥

व्याख्या—ज्ञात्वा करतलागतामलकवत्परिस्फुटं सद्भावत उपादेयबुद्ध्यापि पथं ज्ञानादिकं मोक्षमार्गं सर्वं निःशेषं, तथापि धर्मे नामेति संभावयत एतत् केषांचित् सिज्यते प्रमादिभिर्भूयते यत्तद् ज्ञायते कर्माणि गुरुकाणि तद्विजृंभितं तदित्याकूतं ॥ ५३१ ॥ अन्यच्च—

धम्मत्थकाममुक्खेसु जस्स भावो जहिं जहिं रमइ। वेरग्गे य गतरसं, न इमं सव्वं सुहोवइ ॥ ५३२ ॥

व्याख्या—धर्मार्थकाममोक्षेषु कथ्यमानेषु यस्य प्राणिनो भावोऽभिप्रायो यस्मिन् यस्मिन् रमते, वीप्सायां सर्वरसिकत्वं लक्षयति, तस्य वैराग्यमेकांतेन रसो यस्य तद्वैराग्यैकांतरसं, नेदं प्रकरणं सर्वं समस्तमपि सुखयत्याह्लादमुत्पादयति, प्रत्युत वैमुख्यं करोतीत्यर्थः ॥ ५३२ ॥ किंच—

संजमतवालसाणं, वेरग्गकहा न होइ कण्णजसुहा। संविग्गपक्खियाणं, हुज्ज व केसिंचि नाणीणं ॥५३३॥

व्याख्या—संयमतपोऽलसानां संयमतपसोरनुत्साहवतां गुरुकर्मणां वैराग्यकथा प्रस्तुतप्रकरणरूपा न भवति

कर्णसुखा श्रवणद्वारेण चित्ताह्लादहेतुर्न भवतीत्यर्थः, संविग्नपाक्षिकाणां पूर्वोक्तस्वरूपाणां स्वयं संयमतपोऽलमानामपि भवेद्वा कर्णसुखा वैराग्यकथा केपांचिद् ज्ञानिनां संयमप्रतिबद्धचित्तत्वादवदातज्ञानानामिति यावत्. ॥५३३॥ अन्यचेदं प्रकरणं मिथ्यात्वादिदष्टजंतूनां साध्यासाध्यविज्ञाना प्रयुक्तं संग्रहपरिच्छेदकारीति दर्शयन्नाह—

सीऊण पगरणमिणं, धम्मे जाओ न उज्जमो जस्स । न य जणियं वेरग्गं, जाणिज्ज अणंतसंसारी ॥५३४॥

व्याख्या–श्रुत्वाकर्ण्य प्रकरणमिदमुपदेशमालाख्यं धर्मे सर्वज्ञोक्ते जातः समुत्पन्नो नोद्यमो विशिष्ट उत्साहो यस्य जंतोः, न च नैव जनितमुत्पादितं श्रूयमाणेनाप्यनेन वैराग्यं विषयवैमुख्यं यस्येति प्रवर्तते, तं जानीयास्त्वं यदुतायमनंतसंसारीति, कालदष्टवदसाध्य इत्यर्थः. ॥५३४॥ किमित्येवमत आह—

कम्माण सुबहुआणुवसमेण उवगच्छई इमं सव्वं । कम्ममलचिक्कणाणं, वच्चइ पासेण भन्नंतं ॥ ५३५ ॥

व्याख्या–कर्मणांमिथ्यात्वादिनां सुबहूनामतिप्रचुराणामुपशमेनेत्युपलक्षणत्वादुदीर्णानां क्षयेण अनुदीर्णानामुपशमेन स्वकार्यकरणाशक्तिलक्षणेन सता किंचिच्छेषकर्मणामेव प्राणिनामुपगच्छति सद्बोधं जनयतीदं प्रस्तुतप्रकरणं सम्यगविपरीतस्थित्या,व्यतिरेकमाह—कर्ममलचिक्कणानां मिथ्यात्वादिपंकदिग्धानामसुमतां व्रजति गच्छति पार्श्वेन, भण्यमानं नांतःप्रविशति, उपरि प्लवत इत्यर्थः. ॥ ५३५ ॥ अधुनास्यैव प्रकरणस्य पाठादिफलमाह—

उवएसमालमेयं जो पढइ सुणइ कुणइ वा हियए। सो जाणइ अप्पहियं नाऊण सुहं समायरई ॥ ५३६ ॥

व्याख्या—उपदेशमालामेनामनंतरोक्तां यो धन्यः पठति सूत्रतः, शृणोत्यर्थतः करोति वा हृदये, प्रतिक्षणमेतदर्थं भावयतीत्यर्थः, स जानात्यात्महितं, इहलोकपरलोकयोः स्वपथ्यं ज्ञात्वा सुखमकृच्छ्रेणैव समाचरत्यनुतिष्ठत्यात्महितमिति. ॥५३६॥ सांप्रतं सूत्रकारः स्वाभिधानं व्युत्पादयन्नाह—

धंतमणिदामससिगयणिहिपयपढमक्खराभिहाणेणं। उवएसमालपगरणमिणमो रइअं हिअट्ठाए ॥ ५३७ ॥

व्याख्या—धतादीनां षण्णां पदानां प्रथमाक्षरैरभिधानं नाम यस्य स तथा, तचेदं—'धम्मदासगणित्ति' धर्मदासगणिः, तेनोपदेशमालाप्रकरणमिदं रचितं, सिद्धां तादुध्धृत्यार्थं सूलतो बद्धं, किमर्थमित्याह—हितो मोक्षः सत्वानुग्रहो वा, तद्धेतुत्वात्तदर्थं तन्निमित्तमिति. ॥ ५३७ ॥ यतश्चेदं भगवत्प्रवचनार्थं गृहीत्वा विरचितं, अत एव तस्य कल्पतरूरूपकेण स्तवं कुर्वन्नाह—

जिणवयणकप्परुक्खो, अणेगसुत्तत्थसालविच्छिन्नो। तवनियमकुसुमगुच्छो, सुग्गइफलबंधणो जयइ ॥५३८॥

व्या-जिनवचनमेव द्वादशांग यथेष्टफलदायित्वात्कल्पवृक्षो जिनवचनकल्पवृक्षो जयतीति क्रिया, अनेकशास्त्रार्था एव व्यापकत्वात्सच्छायाकारणत्वाच शाखास्ताभिर्विस्तीर्णो विशालोऽनेकशास्त्रार्थशाखाविस्तीर्णः, तपोनियमा एव मुनिमधुकरनिकरप्रमोदहेतुत्वात् कुसुमगुच्छाः सुमनःस्तबका यस्मिन्नसौ तपोनियमकुसुमगुच्छः,सुगतिः स्वर्गापवर्गौ, सैवानंतसुखरससंपूर्णत्वात् फलं, तद्बध्यते निष्पद्यते यस्मिन्नसौ सुगतिफलबंधनो जयति, कदागमतरू-

नभिभवति भगवानिति. ॥५३८॥ सांप्रतं परिसमाप्तिं द्योतयन् येषामियमुपदेशमालोचिता तानभिधित्सुराह—

जुग्गा सुसाहुवेरग्गिआण परलोगपत्थिआणं च । संविग्गपक्खिआणं, दायव्वा बहुसुआणं च ॥ ५३९ ॥

व्याख्या—योग्योचिता, सुसाधवः, वैराग्यं विद्यते येषां ते वैरागिकाः सुश्रावका गृह्यंते, सुसाधवश्च वैरागिकाश्च सुसाधुवैरागिकास्तेषां, परलोकप्रस्थितानां च संयमोन्मुखतया परत्र हिताभ्युद्यतानामित्यर्थः, केषां? संविग्नपाक्षिकाणां, योग्येति वर्तते, दातव्या पुनरियं बहुश्रुतेभ्यश्च विवेकिभ्यः, चशब्दात्सुसाधुत्वादिविशेषणेभ्य इति. ॥ ५३९ ॥ इह च सूत्रेषु पाठानां बाहुल्यं, एवं च पर्यालोचयतां सम्यगर्थप्रदः प्रतिभातः स एवास्माभिः पाठो विवृतः, न शेषाः. क्वचित्पुनः सन्निहितसूत्रादर्शेषु प्रस्तुतार्थेनाघटमानं पाठमवेक्ष्य प्रायोऽयमेव क्वचित्पाठो भविष्यतीत्यभिहित इति. विषं विनिर्धूय कुवासनामयं । व्यरीरचद्यः कृपया मदाशये ॥ अचिंत्य वीर्येण सुवासनासुधां । नतोऽस्मि तस्मै जिनधर्मसूरये ॥ १ ॥ उत्सूत्रमत्र विवृतं मतिमांद्यदोषा—द्गांभीर्यभाजि वचने यदनंत कीर्तेः ॥ संसारसागरमनेन तरीतुकामै—स्तत्साधुभिः कृतकृपैर्मयि शोधनीयं ॥२॥ तोषाद्विधाय विवृतिं गिरिदेवतायाः। पुण्यानुबंधिकुशलं यदिदं मयाप्तं ॥ सर्वोऽपि तेन भवतादुपदेशमाला-प्रोक्तार्थसाधनपरः खलु जीवलोकः ॥

इय धम्मदासगणिणा जिणवयणुवएसकज्जमालाए। मालव्व विविहकुसुमा, कहिआ य सुसीसवग्गस्स ।५४०।

संतिकरी वुड्ढिकरी, कल्लाणकरी, सुमंगलकरी य । होइ कहगस्स परिसाए, तह य निव्वाणफलदाई ॥

इत्थ समप्पइ इणमो, मालाउवएसपगरणं पगयं । गाहाणं सव्वाणं, पंचसया चेव चालीसा ॥ ५४२ ॥
जाव य लवणसमुद्दो, जाव य नक्खत्तमंडिओ मेरू । ताव य रइया माला, जयम्मि थिरथावरा होउ ॥
अक्खरमत्ताहीणं, जं चिय पढियं अयाणमाणेणं । तं खमह मज्झ सव्वं, जिणवयणविणिग्गया वाणी ॥

इत्याचार्यश्रीसिद्धर्षिप्रणीता उपदेशमालाया हेयोपादेयाख्यया लघुवृत्तिः समाप्ता ॥ श्रीरस्तु ॥



